श्रीः

श्रीसनातनभारतभारतीप्रकाशनम्

इदंप्रथमतया देवनागर्या लिप्या प्रकाशमवाप्ता

**दशाध्यायी** काचनापूर्वा व्याख्या

बृहज्जातकग्रन्थस्य।

ज्यौतिषाभिमानिभिर्महाजनैर्हृदा सदा धारणीया।

कर्णाटभाषया आङ्ग्लभाषया च अनूद्यमाना

शीघ्रमस्माभिः प्रकाशयिष्यत इति विज्ञाप्यते।

---

मूल्यम् : १५० रुप्यकाणि (15$)

sen georges offset.sulthan bath ph : 04936 220178

ॐ

# बृहज्जातकम्
# दशाध्यायीव्याख्योपेतम्

प्रकाशनम्
श्रीसनातनभारतभारतीपाठशाला
मैसूरु



श्रीवराहमिहिरविरचितम्

# बृहज्जातकम्

दैवज्ञ-श्री-गोविन्दभट्टत्तिरि-महाभागविरचितया

दशाध्याय्यभिधया व्याख्यया विभूषितम्

प्रकाशनम्

श्रीसनातनभारतभारतीपाठशाला

मैसूरु - कर्णाटकम्

# BRUHAJJATAKAM
(SANSKRIT)

Pages XIV + 256

1000 Copies


*Published by:*
**Sri Sanatana Bharata Bharati Pathashala**
716, 11th Main, IInd Cross
E- Block, J. P. Nagar, MYSORE - 570 008
KARNATAKA

मूल्यम् : १५०(15$)

पुस्तकप्राप्तिस्थानम्
**श्री सनातनभारतभारतीपाठशाला**
७१६, ११ मैन्, २ क्रास्
इ- ब्लाक्, जे. पि. नगर, मैसूरु - ५७० ००८
कर्णाटक

## समर्पणम्

सूर्यपरञ्ज्योतिषे नमांसि
हृदयसरसिजसुमन्दिरे विराजमानमनवरतमात्मलक्ष्मीविभूषितं ज्योतिषां ज्योतिराद्यमानन्दघनं गुरूणां गुरुं हृदा प्रणिपत्य तत्पदपुण्डरीकयोः सश्रद्धमर्पितमिदं बन्धुरं ग्रन्थसुमम्।

# विषयसूची

# उपोद्घातः

श्रीमद्वराहमिहिराचार्यकृतं होराशास्त्रं बृहज्जातकापरनाम्ना प्रथितं ज्यौतिषविषये वर्तमानानां अनेकविधग्रन्थार्थानां आचार्यपक्षाणां सम्प्रदायानाञ्च सङ्ग्रहरूपमिति प्रसिद्धम्। ग्रन्थाल्पत्वेऽपि अर्थानां बाहुल्यं वर्तत इति आचार्यवचनादेव स्पष्टम्। तस्मादेव होराशास्त्रमिदमतिप्रौढं दुरवगाहञ्चाभवत्। तथापि न वृथा ह्याचार्योद्यमः। तदुक्तमाचार्येणैव द्वितीयश्लोके,

'भूयोभिः पटुबुद्धिभिः पटुधियां होराफलज्ञप्तये
शब्दन्यायसमन्वितेषु बहुशः शास्त्रेषु दृष्टेष्वपि।
होरातन्त्रमहार्णवप्रतरणे भग्नोद्यमानामहं
स्वल्पं वृत्तविचित्रमर्थबहुळं शास्त्रप्लवं प्रारभे'।। इति।।

ग्रन्थानां विशिष्य ज्यौतिषग्रन्थानां समीचीनया व्याख्यया विना प्रवेशमभीप्सतां साधारणजनानां दुरवगाहतैव भवति। दुरवगाहे विषये व्याख्यानुगमनमनिवार्यमेव। शास्त्रेषु कृतभूरिपरिश्रमाणामाचार्याणां सिद्धान्तमनुसृत्यैवास्मादृशानां शास्त्रपरिचयः सम्पद्येत। उक्तं हि 'न हि सर्वः सर्वं जानाति' इति। विषये चैकस्मिन्नपि चिन्तनप्रकारः किल बहुधा भिद्येत? तादृशविभिन्नक्रमचिन्तनावगतयेऽपि विभिन्नाः व्याख्या अवश्यमनुसन्धेयाः स्युः। तद्विद्यमानासु व्याख्यास्वन्यासु दशाध्याय्याः नाप्रसक्तता।

बृहज्जातकस्यार्थबाहुल्यवशात् सन्ति बह्व्यो व्याख्याः। तासु प्रथिततमाः, भट्टोत्पलस्य विवृतिः, चन्द्रिका, मिताक्षरी, श्रीमच्छङ्कराचार्यकृता जयमङ्गलाविवृतिः, विवरणं, पारमेश्वरी, अपूर्वार्थप्रकाशिका, प्रस्तुता दशाध्यायी चेति। तारतम्यज्ञानार्थं एकैकस्या अपि व्याख्यायाः विषये किञ्चित्प्रस्तूयते।

भट्टोत्पलकृता विवृतिस्तु सुप्रसिद्धैव। कालिदासकृतिभ्यः मल्लिनाथव्याख्या इव वराहमिहिराचार्यकृतिभ्यः सन्ति विवृत्याख्याः व्याख्याः भट्टोत्पलकृताः। आचार्यकृतस्य स्वल्पजातकस्य बृहत्संहितायाश्च विवृती स्तः इति विज्ञाप्य प्रकृतमनुस्रियते।

चन्द्रिकेति काचित् व्याख्या तत्र तत्र विभिन्नव्याख्यानेषु उद्धृतप्रमाणैरवगम्यते। नेयं व्याख्योपलब्धा। नापि व्याख्यातृकालदेशग्रन्थादि विदितम्।

मिताक्षरीत्यपरा व्याख्या श्रूयते। हृद्यपथेति नाम्न्यां केरलीयव्याख्यायामेकस्यां मिताक्षरीप्रशंसा विहितावलोक्यते। क्वचिन्मुद्राक्षरीति पाठोऽपि वर्तते।

जयमङ्गलेति व्याख्यापरा श्रीमच्छङ्कराचार्यप्रणीतत्वेन प्रथिता। श्रीमच्छङ्कराचार्यः विना फलभागं ज्योतिश्शास्त्रं पपाठेति जनश्रुतिरस्ति। व्याख्या चैषा केरले कस्यचिद्धस्ते वर्तत इति श्रुणुमः। किन्तु केवलं श्रुता नाद्यापि दृष्टिगोचराभूत्।

विवरणमिति किञ्चिद्व्याख्यानं देवनागरीलिप्या मलयाललिप्या च प्रकाशितं प्रथते। कर्ता चास्य व्याख्यानस्य देशमङ्गलनामक- पारशवगृहे जातः रुद्रनामा। एषः व्याकरणमीमांसादिशास्त्रेषु पारङ्गतः। अनेकाचार्यसम्मतान् ग्रन्थानवलोक्य बृहज्जातकाधिष्ठितसकलाध्यायानां मर्मस्पृग्विवरणं कृतवानिति कारणेन व्याख्यानमेतत् ज्योतिर्विद्भिः सम्यगाद्रियते।

पारमेश्वरी नाम एका संस्कृतव्याख्याप्यस्ति। अतिलघ्वी किन्तु उत्कृष्टा भवति। इयमपि सकृत् प्रकाशिता।

अपूर्वार्थप्रकाशिका चेतरापेक्षया नूत्नी व्याख्या। ग्रन्थकृता समस्ताध्यायानां व्याख्यानं विहितमपि दशाध्यायमितमेव प्रकाशितमस्ति। इयमपि व्याख्या ज्यौतिषजिज्ञासुभिः श्रद्धया शिरोधार्या वर्तते।

सन्दर्भेऽस्मिन् बृहज्जातकस्यास्य विहिताः संस्कृतेतरभाषाव्याख्या अधिकृत्य न हि किञ्चित् प्रस्तूयते चेत् असाधु स्यादिति धिया कानिचनैव वचनानि विरच्यन्ते। तेषु द्वे अवश्यं प्रस्तोतव्ये। आङ्गलभाषायां श्रीमता वि. सुब्रह्मण्यशास्त्रिणा विरचितैका। मलयालभाषायां श्रीमता कैकुळङ्गर रामपारशवेन कृता चापरा। तयोः ग्रन्थान्तरप्रमाणानि अपूर्वाणि समुद्धृतानि दरीदृश्यन्ते। पूर्वोक्तचन्द्रिकामिताक्षर्यौ च अत्र प्रस्तुते। नूनं एते महत्वपूर्णे व्याख्याने।



यद्यपि सारावली स्वतन्त्रग्रन्थरूपेण वर्तते तथापि बृहज्जातकस्य विशदविवरणरूपैव। प्रायः सर्वे व्याख्यातारः सारावलीवचनानि प्रमाणत्वेनोद्धरन्ति इत्येतत् विशिष्योच्यते।

सम्प्रति दशाध्यायीमधिकृत्य किञ्चित् प्रस्तूयते। प्रश्नमार्गनाम्नि प्रसिद्धे प्रश्नग्रन्थे दशाध्यायी प्रशंसा कृता। नैषा प्रशंसा तत्पक्षपातत्वेन। किन्तु शास्त्रपक्षपातित्वेनैवेति मन्तव्यम्। शिष्यशिक्षार्थमिति च मन्तव्यम्। उक्तं हि प्रश्नमार्गे।

होरायास्तु दशाध्याय्यां व्याख्यायां क्रियतां श्रमः।<br>
दैवज्ञेन विशेषेण फलमादेष्टुमिच्छता।।<br>
दशाध्याय्यां विशेषेण श्रमो नैव कृतो यदि।<br>
दुष्करः फलनिर्देशस्तद्विदाञ्च तथा वचः।।<br>
अदृष्टो यो दशाध्यायीं फलमादेष्टुमिच्छति।<br>
इच्छत्येव समुद्रस्य तरणं स प्लवं विना।। इति।।<br>
(प्रश्नमार्गे प्रथमाध्याये ३०, ३१, ३२ सङ्ख्याकाः श्लोकाः)

इतरव्याख्यानेभ्यः दशाध्याय्याः को विशेषः? सर्वा अपि जातकफलचिन्तनाय किल! नैवम्। न केवलं जातकफलचिन्तनाय किन्तु प्रश्नचिन्तनविषयेऽपि प्रमाणभूता चेयम्। अनुभवेनापि एतस्याः प्रामाण्यं सिद्धम्। व्याख्याता ग्रन्थान्ते प्रतिजानाति हि "नैषा पाण्डित्यप्रकटनाय कृता। स्वावगतार्थान् मन्दबुद्धये शिष्यायोपदेष्टुमेव" इत्येवम्। व्याख्यातुराचार्यस्य विनीतभाव एव अत्रावगम्यते। फलज्यौतिषे अस्याः व्याख्यायाः महिमानं वक्तुमशक्यमेव मादृशाम्।

दशाध्याय्याः रचयिता च गोविन्दसोमयाजीति क्वचिदुल्लिखिता दृश्यते। प्रायः तस्यैव भट्टतिरीति नामान्तरं स्यात्। स च भट्टतिरिमहाभागः केरलप्रान्ते तिरूर् नाम्नि प्रथिते प्रदेशे तलक्कुलत्तूर् ग्रामे जन्म लब्धवान्। इदानीं तद्गृहं तद्वंश्याश्च न सन्तीति ज्ञायते। केरलसाहित्यचरित्रे उळ्ळूरु एस्. परमेश्वरय्यर् महाशयेन भट्टतिरि महाशयविषयमधिकृत्य किञ्चित् विलिखितमस्ति। 'रक्षेद्गोविन्दमर्कः' इत्येवं अक्षरसङ्ख्याक्रमेण तस्य जन्मदिनकलिदिनसङ्ख्या सूचितास्ति। 'काळिन्दीप्रियस्तुष्टः' इति चरमकालोऽपि विज्ञापितः। विस्तरेण यदि तस्य जीवनचरितजिज्ञासास्ति तर्हि

केरलसाहित्यचरित्रनिरूपणप्रवृत्तां ऐतिह्यमालामवलोकयन्त्विति विज्ञाप्य प्रकृतमनुसर्तुमुपक्रम्यते।

अद्यावधि दशाध्यायी देवनागरीलिप्या पूर्णतया न मुद्रितैव। दशाध्यायी नौकाटीकैव दशाध्यायीत्वेन कैश्चित् चिन्तिता प्रसिद्धीकृता च। किन्तु नौकाटीकातः सर्वथैव भिन्ना दशाध्यायी। परिशीलनात् सर्वेषामेतत् सुविदितमेव स्यात्।

पूर्वं इयं ग्रन्थाक्षरे मुद्रिता पूर्णरूपेण। बहुभिः जिज्ञासुभिः सैव अवलम्बनत्वेन स्वीकृताऽसीत्। चतुर्दशसंवत्सरेभ्यः पूर्वं मलयाललिप्या श्रीमता कुरुमात्तूर् हरिजयन्तन् नम्बूतिरिप्पाट् महाशयेन परिवर्तिता। सा कुक्कुटक्रोडदेशात् मातृभूमि मुद्रणालयात् १९९० तमे वर्षे प्रकाशिता च। अस्याः द्वितीयमुद्रणावसरे विविधग्रन्थानवलोक्य पाठभेदान् परिशील्य संस्करणं विहितम्। तस्मिन् कर्मणि जनोऽयमपि भागमवहदिति सप्रश्रयं विज्ञाप्यते। तस्मात्परमपि दशाध्यायी-तालग्रन्थानवलोकयितुं च भाग्यवशादवकाशः लब्धः । इदानीं ईश्वरानुग्रहेण पुनरपि दशाध्यायीसंस्करणविधौ नियोजितोऽयं जनः।

श्रीमतः शङ्करनारायणजोयिस् महाभागस्य नेतृत्वे वर्तमानेन श्री सनातनभारतभारती प्रकाशनेन सुसंस्कृतदशाध्यायीविभूषितबृहज्जातकग्रन्थः इदंप्रथमतया देवनागर्या लिप्या प्रकाशमेतीति प्रशंसास्पदोऽयं विषयः। देवनागर्या प्राप्तप्रकाश एष ग्रन्थः समग्रभारतवर्षे विद्यमानानां, न केवलं तावदेव समग्रे भूभागे विद्यमानानां ज्यौतिषव्युत्पित्सूनां सहृदयानां हस्ते मार्गदीप इव उपकरोतीत्यत्र नास्ति संशयलेशः। तस्य महाशयस्य सङ्कल्पितं संस्थानं सर्वविधसम्पदा विभूषितं चिरं लसतु इति भगवन्तं प्रार्थयामि। अल्पेनानेनोपोद्घातेन ग्रन्थममुं सज्जनसन्निधौ अवतारयितुमीहतेऽयं जनः।

'शुभं भूयात्'

चेरुवल्ली नारायणन् नम्पूतिरि
'सनातनम्'
कुक्कुटक्रोडम् - 28
केरलम्

श्रीमत्तारणसंवत्सरे श्रावणकृष्णसप्तमी
सोमवासरः
६ -०९-२००४

श्रीः

श्रीसद्गुरवे नमः

# प्रकाशकवचांसि

दशाध्यायीविभूषितमिदं वराहमिहिरविरचितं बृहज्जातकाभिधं ग्रन्थरत्नं श्रीसनातनभारतभारतीपाठशालाद्य जिज्ञासुजनहस्ते सादरं समर्पयतीति प्रमोदावहोऽयं विषयः। आबहोः कालादद्यावधि फलितग्रन्थेषु बृहज्जातककल्पं नान्यं कञ्चन ग्रन्थमवलोकयाम इति क्षेत्रेऽस्मिन् कृतपरिश्रमाणां विदितचरमेव। सन्ति यद्यपि बह्व्यः व्याख्याः बृहज्जातकस्य। तथापि श्रियमनितरसाधारणीमुद्वहति दशाध्यायी। उत्तरकालभवैः फलितग्रन्थकृद्भिः व्याख्यातृभिश्च सादरं तत्र तत्र दशाध्यायी समुद्धृतेत्येतदेवात्र प्रमाणम्। ज्योतिर्विदां मानसे चिरं कृतपदेति चापरं प्रमाणम्।

यद्यपि सवितृवरप्रसादलब्धविभवेन वराहमिहिरेण समग्रमपि होराशास्त्रं बृहज्जातके सूत्ररूपेण व्यवस्थापितम्। किन्तु तत्र प्रस्तुतानां सुसूक्ष्माणां विषयाणामवगतिः मार्गदर्शनमन्तरा न स्यादेव। तादृशं मार्गदर्शनं तावत् परम्पराधिगतविद्यानां गुरुचरणानां विनानुग्रहं न भवेत्। तथापि सरलया भाषया व्याख्याभूतया तेषां सूक्ष्मविनिहितानां विषयाणां प्रस्तुतिः जिज्ञासूनां सौलभ्यायोपकल्प्यत इत्यत्र नास्ति संशयस्यावकाशः।

गोविन्दभट्टतिरिविरचिता चैषा दशाध्यायी केरलप्रान्ते मलयाललिपिमाश्रित्य तमिलुप्रदेशे ग्रन्थलिपिमाश्रित्य च प्राप्तप्रसरा तत्रत्यैः विद्वद्भिः छात्रैश्च चिरमासेव्यमानास्ति। किन्तु यतो हि नाद्यावधि देवनागर्या लिप्या सम्मुद्रिता तल्लिप्यनभिज्ञानां संस्कृतज्ञानां समग्रेषु भारतेषु नाममात्रेणावगता चैषा महत् कौतुकं व्यतरत्। तेन कौतुकेन समाकलितचित्तोऽयं जनोऽपि देवनागर्यामिमां प्रकाशयितुकामः बहुकालादपि प्रयतमानोऽपि नाशक्नोत्। दैववशात्

प्राप्तपरिचयस्य सुहृदः श्री चेरुवल्ली नारायणनम्बूतिरि- महाभागस्यापि ग्रन्थस्यास्य प्रकाशनविषये श्रद्धा महती वर्तत इति विज्ञाय प्रकाशनकर्मण्यस्मिन् पुनरेवाङ्कुरिता वाञ्छा। मया विज्ञापितः तत्रभवान् प्रेम्णाङ्ग्यकरोत् स्वीयं सहकारहस्तं वितरितुम्। तदिदं कालकर्मसंयोगरूपेण ग्रन्थप्रकाशनं सम्पन्नम्।

विद्वान् चेरुवल्ली नारायणनम्बूतिरि-महाभागः परम्पराप्राप्तविद्यानां गुरुवर्याणां सान्निध्यादधिगतज्यौतिषशास्त्रवास्त्वादिविद्यः निरन्तराध्ययनबद्धादरः न केवलमनल्प-ग्रन्थसम्भारसम्पन्नः किन्तु संशोधनात्मिकया धियापि सम्पन्नः केरलप्रान्ते दशाध्यायी-सम्बन्धिहस्तलेखानि तालपत्राणि च सङ्गृह्य तत्रत्य-पाठभेदानप्यवलोक्य साधुपाठानाकलय्य ग्रन्थमुद्रणाय महदुपाकरोत्। किञ्च अस्य ग्रन्थस्योपोद्घातमप्यारचय्य अस्मिन् प्रकाशनकर्मणि अत्यन्तं श्रद्धानः स्वयं चाक्षरस्खलितानि परिशील्य ग्रन्थस्यास्य परिष्करणे प्रधानं पात्रं स्वीकृत्य साहाय्यमाचरितवानिति वयं हार्दं कार्तज्ञ्यं विनिवेदयामः।

विद्वान् नीलमन शङ्करनम्बूतिरि महाभागः कानिचन दिनानि स्वीयात्कर्मणः विरतः प्रकाशनकर्मणि निरतः मुद्रणस्खालित्यपरिशीलनादि कृत्वा सस्नेहं सहाकुरुत इति तस्मै हार्दान् धन्यवादानर्पयामः।

अस्य ग्रन्थस्य प्रकाशने नैके उपाकुर्वन् इति न पुनर्निवेदनीयम्। मलयाललिप्या प्रकाशितौ ग्रन्थौ प्रदाय उडुपिक्षेत्रनिवासी ज्योतिर्वित् विद्वान् शिवप्रसादतन्त्री कर्मण्यस्मिन् अस्मत्कृतज्ञतापात्रमभवत्।

मुद्रणविषये बद्धादराः अस्मच्छालाध्यापकाः विद्वांसः गणपतिभट्टः नरसिंहभट्टः गुरुप्रसादः वेङ्कटेशभट्टश्चेति सर्वेषामेषां सेवाकार्यं हृदा बहुमन्यामहे।

अल्पीयसि काले श्रद्धया मुद्रणकर्म निर्वाह्य सहकृतवन्तं सुलतानबतेरिस्थ- 'सान् जोर्जिया आफ्सेट् प्रिन्टर्स' मुद्रणालयस्य निर्देशकं सादरं सम्भाव्य, साक्षात् परम्परया च दत्तसहकारान् सर्वानभिवन्द्य पुनरपि कार्तज्ञ्यं समर्पयामः।

इदंप्रथमतया देवनागर्या सम्मुद्रिता चेयं व्याख्या। उपलब्धेषु मूलग्रन्थेषु सन्ति पाठभेदाः। तेषु स्पष्टतमाः युक्तिसङ्गताश्च स्वीकृताः। क्वचित् वक्येषु पदार्थानामन्वयक्लेशः



मूलग्रन्थे आलक्षितः। पूर्वापरानुसन्धानेन यथाशक्ति समीकरणद्वारा तादृशक्लेशः परिहृतोऽपि क्वचिदवशिष्टः इति विज्ञापयितुं खेदमनुभवामः। प्रायः द्वितीयमुद्रणसन्दर्भे पुनः परिशीलनात् विद्वज्जनसाहाय्यानुरोधेन ते समीकृताः स्युरिति सम्भावयामः।

ग्रन्थमुद्रणविषये सन्ति बहवः क्लेशाः इति नाविदितं सहृदयानाम्। यद्यसावधानात् मुद्रणस्खालित्यं क्वचिल्लक्ष्येत तर्हि गुणग्राहिणः सन्तः प्रेम्णा तानि समीकृत्य अस्मानपि तत्र विषये समुद्बोधयन्त्विति सप्रश्रयं विज्ञापयामः।

इति भावत्कः

**शङ्करनारायण जोयिस्**
निर्वाहकः
सनातनभारतभारती पाठशाला
मैसूरु

श्रीमत्तारणसंवत्सरे श्रावणकृष्णसप्तमी
सोमवासरः
६ -०९-२००४

ಽಽ೦ಌ

श्रीः

# दशाध्यायिव्याख्यानसहितहोराशास्त्रप्रारम्भः

## प्रथमाध्यायः

### राशिप्रभेदाध्यायः

मूर्तित्वे परिकल्पितः शशभृतो वर्त्माऽपुनर्जन्मना-
मात्मेत्यात्मविदां क्रतुश्च यजतां भर्तामरज्योतिषाम्।
लोकानां प्रलयोदयस्थितिविभुश्चानेकधा यः श्रुतौ
वाचं नस्स दधातु नैककिरणस्त्रैलोक्यदीपो रविः।। १।।

व्याख्यानम् -

जोतिश्शास्त्रमिदं विधाय विपुलं त्रिस्कन्धभिन्नं पुरा
लोकानां मतिमान्द्यतः कलियुगे तत्पातभीत्या पुनः।
स्वल्पन्तत् सकलं ततो रचितवानादित्यदासात्मजो
भूत्वा यो मिहिरो वराहमिहिरो नाम्ना नमस्कुर्महे।।
वराहहोराशास्त्रस्य विज्ञातोऽर्थोऽथ यो मया।
स तु शिष्यावबोधार्थं संक्षेपेण विलिख्यते।।

'मूर्तित्वे' इति। अनेन श्लोकेन वराहमिहिराचार्यः शास्त्रं चिकीर्षुः स्वेष्टदेवतायाः स्वाभिप्रेतं वरं प्रार्थयते। 'स रविर्नो वाचं दधातु' इति। 'अर्थबहुलं शास्त्रप्लवं प्रारभे' इत्युत्तरत्र प्रतिज्ञां सफलीकर्तुमियं प्रार्थना। विवक्षितार्थसर्वस्वगर्भां वाचं दधात्वित्यर्थः। अथवा त्रैकालिकी वागिति विद्याज्ञानं दधात्विति यावत्। अथवा त्रैकाल्यकथने अवन्ध्यां वाचं दधात्विति वा। 'रावयतीति रविः' रवेः शब्दब्रह्ममयत्वात् रवेरेव वाक्प्रार्थना युज्यते। 'यश्शशभृतो मूर्तित्वे परिकल्पितः शशभृतः चन्द्रस्य मूर्तित्वे शरीरत्वे परिकल्पितः परितः कल्पितः। आगमानुमानप्रत्यक्षरूपैः प्रमाणैः प्रामाणिकैः परितः कल्पितः। 'सुषुम्नासूर्यरश्मिश्चन्द्रमाः' इत्याद्या श्रुतिः। श्रीसाम्बस्तुतौ चोक्तम् -

'नाशं नास्मच्चरणशरणा यान्त्यपि ग्रस्यमाना
देवैरित्थं सितमिव यशो दर्शयन् स्वं त्रिलोक्याम्।
मन्ये सोमं क्षततनुममागर्भवृध्या विवस्वान्
शुक्लच्छायां नयसि शनकैः स्वां सुषुम्नां शुभा सा।। इति।।

प्रकाशशून्ये जलमये चन्द्रमसि रविरश्मिसम्पातात् सप्रकाशं चन्द्रशरीरमुपपद्यते इति युक्त्या सिद्ध्यति। महीयोरूपं पश्चिमाभिमुखं भ्रमति ज्योतिश्चक्रे प्राङ्मुखं गच्छन्तश्चन्द्रादयो ग्रहा गोलरूपाः। तत्रैव स्थितस्य प्राङ्मुखगतस्य गोलरूपस्य रवे रश्मिसम्पातात् सूर्याभिमुखार्धभागाः दीप्यन्ते।

तथा च आर्यभटः -

'भूग्रहभानां गोलार्धानि स्वच्छायया विवर्णानि।
अर्द्धानि यथासारं सूर्याभिमुखानि दीप्यन्ते'।। इति।।

अन्येऽप्याहुः -

'अर्काऽधस्थस्येन्दोरूर्ध्वाध्वो ह्यर्करश्मयोऽमान्ते।
दृश्यार्धमतः कृष्णं तदार्कतः पूर्वगे तु चन्द्रमसि।।
पश्चिमभागेऽर्ककरा लम्बन्ते तत्र शौक्ल्यमतः।
इन्दोरेवं क्रमवृद्धिः स्यात् शौक्ल्यस्य हि पूर्णता च पूर्णान्ते।।
पश्चिमभागे कार्ष्ण्यं ततः क्रमात् सूर्यरश्मिराहित्यात्। इति।

एतत् प्रत्यक्षतो दृश्यते च, तस्मात् मूर्तित्वे परिकल्पितः इति उपपन्नं भवति।

अर्थान्तरमपि सूच्यते, शशभृतो मूर्तित्वे परिकल्पितः सूर्यः - एतदुक्तं भवति, प्रकृतिभूतस्य जडात्मकस्य चन्द्रस्य मूर्तित्वे प्रपञ्चरूपत्वे पुरुषभूतस्य चिदात्मकस्य सूर्यस्य दृष्टिवशात् चेतनत्वं दृश्यते, तस्मात् प्रपञ्चव्याप्तः सूर्यः इत्यर्थः।

अथवा 'शशभृतो मूर्तित्वे परिकल्पितः' 'मनस्तुहिनगु' इत्यनेन शशभृच्छब्देन मनो विज्ञायते, मनसो मूर्तित्वे परिकल्पितः मनो यां यां मूर्तिं ध्यायति तत्तद्भावे परिकल्पितः सगुणब्रह्म भूत्वा भक्तानां अभिमतं विग्रहम् अवलम्ब्याभीष्टं फलं ददातीत्यर्थः। 'परिकल्पित' इत्यनेन काल्पनिकमस्य विग्रहवत्वमित्यपि सूचितम्।

अथ, 'वर्त्मापुनर्जन्मनां' इत्यस्यार्थो व्याख्यायते। त्रैवर्णिकानां उपनयनानन्तरं



पितृमुखात् गायत्रीं श्रुत्वा ब्रह्मचारिगृहस्थवानप्रस्थाश्रमावलम्बिनां सेवमानानामनुदिनं तिसृषु सन्ध्यासु गायत्रीमन्त्रदेवतां आदित्यमुपास्य संन्यासाश्रमस्याधिकारितां आपाद्य संन्यासित्वमवलम्ब्य स्थितानां हि मोक्षसिद्धिः। तस्मादपुनर्जन्मनां मुमुक्षूणां मोक्षं गन्तुं भगवान् आदित्यो वर्त्मेति सिद्ध्यति।

अथवा स्थूलसूक्ष्मपरत्वेन त्रिधा ह्युपासना विद्यते। निराकारं परमात्मानं विग्रहवन्तं परिकल्प्य मन्त्राङ्गन्यासादिना या भगवत्सेवा मन्त्रावृत्या क्रियते सा स्थूलोपासना अधमाधिकारिणां विधीयते। पुनर्मूलाधारादारभ्य ब्रह्मरन्ध्रान्तं मतभेदेन रक्तशुक्लतन्तुनिभां प्रभां ध्यात्वा सा प्रभा तदुपरिस्थं सार्द्धसोमं सूर्यं प्राप्य तस्मादमृतं प्लावयित्वा पुनरप्यमृतरूपेण मूलाधारं प्राप्य पुनरपि पूर्ववत् मूलाधारात् ब्रह्मरन्ध्रान्तं प्राप्य इत्थं गमनागमनेन या उपासना सा सूक्ष्मोपासना। एषा मध्यमाधिकारिणां विधीयते। अयं प्रकारः श्री भगवत्पादाचार्येणोक्तम् -

'मूलाधारात् स्फुरति तडिदाभा प्रभा सूक्ष्मरूपो-
द्गच्छन्त्यामस्तकमणुतरा तेजसां मूलभूता।
सौषुम्नाध्वाच्चरणनिपुणा सा सवित्रानुबद्धा
ध्याता सद्योऽमृतमथ रवेः स्रावयेत् सार्धसोमात्।। इति।।

पूर्वोक्तायाः स्थूलोपासनाया इयं प्रवरा।

निरवयवत्वादितोप्युत्कृष्टा परोपसना। सच्चिदानन्दरूपे ब्रह्मणि अहमिति भावना। तस्याः सिद्ध्यर्थं सूक्ष्मोपासनामङ्गीकुर्वन्ति मुमुक्षवः। सूक्ष्मोपासनायाः सूर्यसापेक्षत्वान्मुमुक्षूणां अपुनर्जन्मनां मोक्षप्राप्तौ सूर्यो वर्त्मेति सिद्ध्यति। अथवा जन्तुः निधनकाले यत्किञ्चित् तेजो ध्यायति चेत् पुनश्शरीरं न गच्छति मुक्तिं प्राप्नोति च। सर्वतेजोमयः सूर्यः खलु; तथा चोक्तम् - 'तेजसां गोलकः सूर्यः' इति। जीवितान्ते तेजश्चिन्तनात् मोक्षसिद्धिरस्तीति श्रीसाम्बेनोक्तम् -

'आस्तां जन्मप्रभृति भगवत्सेवनं तद्धि लोके
वाच्यं केनापरिमितफलं भुक्तिमुक्तिप्रकारम्।
ज्योतिर्मात्रस्मृतिपथमितो जीवितान्ते विभास्वन्
निर्माणाय प्रभवति सतां तेन ते कः समोऽन्यः।।' इति।।

'आत्मेत्यात्मविदां' इत्यत्र आत्मविदामात्मज्ञानिनां आत्मा। यदाह्यात्मज्ञानं भवति तदैव मुक्तो भवति। तथा चोक्तम् - 'मोक्षस्य नैव किञ्चिद्धामास्ति न चापि गमनमन्यत्र; अज्ञानमयग्रन्थेः भेदो यः तं विदुर्मोक्षम्' इति। 'ज्ञानादेव तु कैवल्यं' इति श्रुतिवागपि श्रूयते।

'इति' शब्दोऽत्र पर्याप्तौ वर्तते। आत्मवतां आत्मा इति निश्चित इत्यर्थः स्थूलसूक्ष्मोपासनयोः काल्पनिकत्वात्।

अथवा अत्र 'इति' शब्दः प्रत्येकं सम्बध्यते, अपुनर्जन्मनां वर्त्मेति परिकल्पितः यजतां क्रतुरिति कल्पितः आत्मविदां आत्मेति परिकल्पितः इत्यादि।

'क्रतुश्च यजतां' इत्यत्र होतृरुपेण हुतभुग् रूपेण च स्थितः कर्मसमुदायफलं ददातीति पूर्वमीमांसकसिद्धान्ते कर्मसमुदायरूपेण स्थित इत्यर्थः।

'भर्तामरज्योतिषां' इत्यत्र स्वोत्पादितेषु षट्सु ऋतुषु अपि तत्तदृतुजन्यानि द्रव्याण्यन्नादीन्युत्पाद्य देवानां हविर्भागमपादयति। अतः कारणात् अमराणां भर्ता भवति; आकाशवर्तिनां ग्रहनक्षत्रादीनां स्वप्रभायोगवशात् प्रभावत्वं उत्पादयति तस्मात् तेषां च भर्ता भवति। अथवा रुद्रादीनां सूर्योपासनं विद्यते, तस्मात् तेषां भर्ता। तथाचोक्तम् -

'यस्योदयास्तमययोः सुरमकुटनिघृष्टचरणकमलोऽपि।

कुरुतेऽञ्जलिन्त्रिणेत्रः स जयति धाम्नां निधिस्सूर्यः'।। इति।।

'लोकानां प्रलयोदयस्थितिविभुः' इत्यत्र त्रिगुणानवलंब्य त्रिमूर्तिभावेन लोकानां सृष्टिस्थितिसंहारान्करोतीत्यर्थः। अथवा स्वोत्पादितेषु मेषादिराशिषु ग्रहस्थितिवशात् चतुष्प्रकारसम्भवानां जन्तूनां जन्म विद्यते रक्षणं च संहारश्च। तस्मात् लोकानां प्रलयोदयस्थितिविभुरिति युज्यते।

'च' शब्देन प्रत्यहं लोकानां प्रलयोदयस्थितिविभुरिति सूचयति। उदये समस्तजगत् प्रतिबोधमेति, (मध्याह्नसमये) स्वभावक्रियासु प्रसरति, अस्तमये उच्छ्वसितमात्रश्शेते। तथाचोक्तम् -

'यस्योदये जगदिदं प्रतिबोधमेति

मध्यस्थितौ प्रसरति प्रकृतिक्रियासु।

अस्तस्थितौ स्वपिति चोच्छ्वसितैकमात्रं



भानुस्स एष जयति प्रकटप्रभावः'।। इति।।

'अनेकधा यः श्रुतौ' वाचकभेदेऽपि वाच्यत्वमस्यैवेत्यर्थः। 'नैककिरणः' असङ्ख्यकिरणः अथवा सहस्रकिरणः इति वा। पञ्चशतकिरणैः भूमिषु द्रव्यरसमाददाति। अपरैः पञ्चशतकिरणैः विसृजति जगदाप्यायनकर इत्यर्थः।

'त्रैलोक्यदीपः' - त्रैलोक्यप्रकाशकः। अथवा त्रीन् भूतभविष्यद्वर्तमानान् लोकयति पश्यति इति त्रिलोकः। त्रिकालदर्शितस्य भावः त्रैलोक्यम्। त्रैलोक्ये दीपं त्रिकालदर्शितेन दीपवत् सर्वं प्रकाशयति इति।

**भूयोभिः पटुबुद्धिभिः पटुधियां होराफलज्ञप्तये**
**शब्दन्यायसमन्वितेषु बहुशश्शास्त्रेषु दृष्टेष्वपि।**
**होरातन्त्रमहार्णवप्रतरणे भग्नोद्यमानामहं**
**स्वल्पं वृत्तविचित्रमर्थबहुलं शास्त्रप्लवं प्रारभे।। २।।**

'भूयोभिः' इति इष्टदेवतायाः परमात्मनो रवेः स्वाभिप्रेतं वरं प्राप्य सिद्धं कृत्वा शास्त्रं चिकीर्षुरयमाचार्यः चिकीर्षितप्रतिज्ञां करोति। 'शास्त्रप्लवं प्रारभे' इति किमर्थमिति चेत् 'होरातन्त्रमहार्णवप्रतरणे भग्नोद्यमानां होराफलज्ञप्तये' अत्र 'महार्णव' शब्दे महच्छब्देनास्य अपारत्वं गम्भीरत्वं विस्तीर्णत्वं च सूचयति। ततो मन्दमतीनां दुस्तरत्वात् सुखप्रतरणाय(सुखप्रतरणोपायं) शास्त्रप्लवं प्रारभ इत्यर्थः। 'शास्त्रप्लव'मित्यत्र रूपकालङ्कारेण प्लवसाधर्म्यमभिव्यज्यते।

कीदृशमिति चेत् 'स्वल्पं' ग्रन्थतः स्वल्पं पूर्वशास्त्रेभ्योऽत्यल्पमित्यर्थः 'वृत्तविचित्रं' वृत्तैः शार्दूलविक्रीडितादिभिः नानाविधम्। 'अर्थबहुलं' बह्वर्थसमन्वितम् ग्रन्थतः स्वल्पत्वे अर्थतोऽपि स्वल्पत्वं भवतीति शङ्कापरिहाराया'र्थबहुल'मित्युक्तम्। अस्य शास्त्रस्यार्थसर्वस्वं कोऽपि न परिच्छिनत्तीत्यर्थः। प्लवसाधर्म्ये वृत्तं वर्तुलं वृत्तं च तद्विचित्रञ्चेति वृत्तविचित्रम्। अर्थबहुलं रत्नवस्त्राद्यनेकार्थसहितमित्यर्थः।

'होरातन्त्रमहार्णवप्रतरणे भग्नोद्यमानां' इत्यत्र भग्नोद्यमशब्देन अन्यशास्त्राणि बहुशो निरीक्ष्य तत्सारासारं विभज्य निर्णेतुमशक्तानां अनेन शास्त्रेण सुखावबोधो भवतीत्यर्थः।

कथं भवति? बहुभिः पूर्वाचार्यैर्निर्दुष्टेषु शास्त्रेषु कृतेष्वपि इदं शास्त्रप्लवं प्रारभ इत्यत्रायं विशेषः। पूर्वशास्त्रेषु पटुधियामेवाधिकारः। न मन्दमतीनाम्। करिष्यमाणेऽस्मिन् शास्त्रे पूर्वशास्त्रेषु कृतश्रमाणां अनिर्णीतशास्त्रतत्त्वानां अधिकारित्वमित्युक्तं भवति।

'होरातन्त्रमहार्णवप्रतरणे भग्नोद्यमानां' इत्युक्तत्वात् कृतत्रेताद्वापरेषु गतेषु युगेषु कलियुगे अल्पायुषो रोगभाजः मन्दमतयः पापिष्ठाश्च जायन्ते। तस्मात् शास्त्रस्य लघूकरणाभावे तु शास्त्रं पतिष्यत्येवेत्यभिप्रेत्य एतदुक्तम्। तथा च पराशरहोरायां पराशरमुनिं प्रति मैत्रेयवचनम् -

'सङ्करात्तु फलानां च ग्रहाणां गतिसङ्करात्।
नान्येयमीदृशस्येति परिच्छेत्तुमलं नराः।।
कलौ युगे ततोऽल्पैव बुद्धिः पापोत्तरा नराः।
ततो न चास्य प्रचयगमनं न प्रयोजनम्।
तत्र त्रेतायुगे केचित् द्वापरे च कृते युगे।।
कुशाग्रमतयस्सर्वे पुण्यभाजश्चिरायुषः।
अतोल्पबुद्धिगम्यं यत् शास्त्रमेतद्वदस्व मे।
आयुश्च लोकयात्रा च शास्त्रेऽस्मिन् द्वे प्रयोजने।।
निश्चेतुं को नु शक्नोति वसिष्ठो वा बृहस्पतिः।
किं पुनर्मनुजास्तत्र विशेषात्तु कलौ युगे'।। इति।।

महार्णववदिति विस्तीर्णापारगम्भीरपूर्वशास्त्राणि पठितुं निर्णेतुमशक्ताना-मल्पग्रन्थाध्ययनेन बह्वर्थग्रहणाय स्वल्पं शास्त्रं करोमीत्यर्थः।

**होरेत्यहोरात्रविकल्पमेके वाञ्छन्ति पूर्वापरवर्णलोपात्।**
**कर्मार्जितं पूर्वभवे सदादि यत्तस्य पक्तिं समभिव्यनक्ति।। ३।।**

होरेति अहोरात्रस्य द्वादशराशिपरिवर्तनकालस्य विकल्पं होरेत्येके वाञ्छन्ति। द्वादशराशिभिः तदाश्रयैश्च ग्रहैः सर्वं शुभाशुभं चिन्त्यते। तथा सारावल्याम् -

'आद्यन्तवर्णलोपाद्धोरास्मात् सम्भवत्यहोरात्रात्।



तत्प्रतिबद्धः सर्वो ग्रहभगणश्चिन्त्यते यस्मात्'।। इति।।

अन्ये होरासंज्ञामन्यथा वर्णयन्ति।
तथा च तत्रैव सारावल्याम् -

'जातकमिति प्रसिद्धं यल्लोके तदिह कीर्त्यते होरा।
अथवा दैवविमर्शनपर्यायी खल्वयं शब्दः'।।

आचार्यस्य तु पूर्वोक्तमेवाभिप्रेतं तस्य युक्तिमत्त्वात्। अहोरात्रविकल्पं होरेत्यत्र विकल्पो विविधः कल्पः कल्पना। तस्य विविधत्वं द्वादशराशितन्नवांशकद्वादशांशकद्रेक्काण-होरात्रिंशांशकादिभेदः।

अथवा अहनि निशि च अष्टभिर्विभक्तयो गुलिकयमकण्टकार्धप्रहरादयो भवन्ति। तैरपि शुभाशुभं चिन्त्यते। अहोरात्रेऽष्टभिर्विभक्ते सूर्यचारश्चिन्त्यते।
तथा चोक्तम् -

'यामार्धमुदयात् पूर्वमारभ्याष्टासु दिक्ष्वपि।
परिभ्रमति तिग्मांशुर्यामेष्वष्टासु सर्वदा।।
रवौ ज्वाला ततो धूमच्छाया मृद्वारिभूमयः।
भसिताङ्गारकं चेति प्रादक्षिण्येन संस्थितम्।।
अङ्गारादित्रयं दीप्तं शान्तमृत्स्नादिकत्रयम्।
छायापूर्वं शुभं भस्म पश्चाच्चैवं शुभं भवेत्।।इति।

एष विधिः सर्वेषां शुभाशुभशकुनानां फलविशेषनिरूपणे ग्राह्यः। पुनः क्षणिकग्रहादिसञ्चारोप्यहोरात्रवशादेव विज्ञायते तस्मादहोरात्राद् होराशब्दो व्युत्पद्यत इत्युक्तं भवति।

किमस्य होराशास्त्रप्रयोजनं इत्यत्राह - 'पूर्वभवे' पूर्वजन्मनि सदादि यत् कर्म उपार्जितं तस्य पक्तिं पाकं व्यनक्ति व्यञ्जयतीयं होरेत्यर्थः। अथवा 'पूर्वभवः' आधानसमयः तस्मिन् काले ग्रहराश्यादिभिः सदादि कर्मफलं व्यञ्जयति। अथवा 'पूर्वभवः' पूर्वे पितृपितामहादयः तेषां भवे संसारे यत् कर्म सदादि पुण्यादि तत्फलं पुत्रपौत्रादयोऽनुभवन्ति। तदियं 'होरा' व्यञ्जयति। अथवा 'पूर्वभवे' पूर्वजन्मनि सदादि पुण्यपापव्यामिश्ररूपं यत् कर्म गर्भाधानादिप्रेतकार्यान्तं क्रियते तस्य हि तत्कालकृतस्य फलं अयं कालः करोतीत्यर्थः।

तथा चोक्तम् -

'सुखदुःखकरं कर्म शुभाशुभमुहूर्तजम्।

जन्मान्तरेऽपि तत् कुर्यात् फलं तस्यान्वयेपि वा'।। इति।।

किं बहुना? सर्वथापि कालाख्यस्य ईश्वरस्य दृढादिकर्म फलदातृत्वमत्रोच्यते। तथा च जातकसङ्ग्रहे -

'दृढादिकर्मत्रयजातमीश्वरः कालस्वरूपः प्रददाति देहिनाम्।

फलत्रयं यत् सदसद्विमिश्रितं तत्संक्षये संक्षयकृत्तथा पुनः।।

तस्मात् शुभं कर्म शुभस्य कारणं फलस्य चान्यस्य यदन्यदित्यतः।

शुभे तु काले शुभकृत् फलं शुभं प्रयाति तस्मादिदमत्र चिन्त्यताम्।।

दशाप्रभेदेन विनिश्चयेद्दृढं दृढेतरं चाष्टकवर्गगोचरैः।

दृढादृढं योगवशेन चिन्तयेदिति त्रिधा जातकसूक्ष्मसङ्ग्रहः।।

फलं क्रमात् तज्जगदुः पुरातनाः इति।

तस्मात् इदं होराशास्त्रं अवश्यं अध्येतव्यं, पुरुषार्थोपयोगितयावगन्तव्यम्। अस्य शास्त्रस्यारम्भे त्वाचार्य ईश्वरस्यादित्यस्य प्रणिपातं कृत्वा तस्मात् वाचं दधात्विति वरं प्रार्थितवान् इति यत्तस्माध्येतॄणां भगवतो रवेः प्रसादादेव त्रैकाल्यज्ञानं भवतीत्युक्तं भवति। तथा चोक्तम् -

'अनेकहोराशास्त्रज्ञः पञ्चसिद्धान्तकोविदः।

ऊहापोहपटुः सिद्धमन्त्रो जानाति जातकम्'।।

संहितायामप्युक्तम् -

'तन्त्रे सुपरिज्ञाते लग्ने छायाम्बुयन्त्रसंविदिते।

होरार्थे च सुरूढे नादेष्टुर्भारती वन्ध्या'।। इति।।

अस्यायमर्थः - तन्त्रे सुपरिज्ञाते तन्त्रे ग्रहगणिततन्त्रे दृग्गणितसाम्येन सुपरीक्षिते। तथा च जातकसङ्ग्रहे -

'योगे ग्रहाणां ग्रहणेर्कसोमयोर्मौढ्ये तथा वक्रगतेषु पञ्चसु।

दृष्टानुरूपं करणं यदन्वहं तेन त्रिवारं गणयेद्विहङ्गमान्'।। इति।

लग्ने जन्मसमये प्रश्नलग्ने वा छायया शङ्कुच्छायादिना तज्ज्ञाने, अम्बुयन्त्रैः कालज्ञानसाधनैर्वा



सम्यग्विदिते, होराशास्त्रतत्त्वे मनसि सम्यग्रूढे, गुरुमुखाद्धोराशास्त्रार्थे समवगते, गुरुदेवताप्रसादात् प्रकाशिते सति आदेष्टुर्दैवज्ञस्य वाङ्निष्फला न भवति।

**कालाङ्गानि वराङ्गमाननमुरो हृत्क्रोडवासोभृतो**
**वस्तिर्व्यञ्जनमूरुजानुयुगले जङ्घे ततोऽङ्घ्रिद्वयम्।**
**मेषाश्विप्रथमा नवर्क्षचरणाश्चक्रस्थिता राशयो**
**राशिक्षेत्रगृहर्क्षभानि भवनं चैकार्थसम्प्रत्यये।। ४।।**

एवमिष्टदेवतास्तुतिं तद्वरप्रार्थनाञ्चिकीर्षितप्रतिज्ञां अधिकारिभेदं शास्त्रस्वरूपं प्रयोजनञ्चोक्त्वानुष्ठानप्रकारार्थं राशिस्वरूपमाह कालाङ्गानीति।

इदं ज्योतिश्शास्त्रं तावत् त्रिस्कन्धम्। तत्रैकस्तावत् गणितस्कन्धः, अपरस्संहितास्कन्धः, तृतीयो होरास्कन्धः। तत्र गणितस्कन्धे गणितगोलौ प्रतिपाद्येते। संहितास्कन्धे तु सामान्यफलं वर्षलक्षणं जनक्षयपुष्ट्यादिसमस्तानां पदार्थानां लक्षणानि चोच्यन्ते। होरास्कन्धे तु जातकप्रश्नमुहूर्तानि निगद्यन्ते। तत्र मुहूर्तशास्त्राणि पुरातनैः कृतानि। जातकलक्षणेनैव प्रश्नफलं निरूपणीयम् -

तथा च वसिष्ठः -

'बुध्वा शास्त्रं यथान्यायं बलाबलविधानतः।

यथोक्तं जातके सर्वं तद्वत् प्रश्नेऽपि चिन्तयेत्'।।

तथापि जातकप्रश्नौ पृथक् कल्पयित्वा कृष्णादिभिराचार्यैः प्रश्नशास्त्राणि रचितानि। निमित्तानि तु संहिताहोरास्कन्धयोः उपदिष्टानि। कैश्चिन्निमित्तशास्त्राणि पृथक् कृतानि। एवमिदं ज्योतिश्शास्त्रं षडङ्गमुच्यते। तथा चोक्तम् -

'जातकगोलनिमित्तप्रश्नमुहूर्ताख्यगणितनामानि।

अभिदधतीह षडङ्गान्याचार्या ज्यौतिषे महाशास्त्रे'।। इति।

अनेनाचार्येण जातकप्राधान्येन इदं शास्त्रं क्रियते। प्रश्नविधिरप्यत एव सिद्ध्यति।

ततोऽत्र जातकप्रश्नयोः कालप्राधान्यात् कालपुरुषस्य लक्षणं प्रथममुपदिश्यते। 'मेषाश्विप्रथमा नवर्क्षचरणाश्चक्रस्थिता राशयो वराङ्गादीनि कालाङ्गानी'त्यन्वयः। कथममूर्तस्य कालस्य मूर्तानां राशीनां सप्तविंशतिनक्षत्रान्तर्भूतानां अवयवत्वमुपपद्यते?

अपमण्डलगतानां राशीनां प्रदेशानां अत्रावयवत्वेनोक्तिः। ते राशयो यावता कालेन देशे देशे च भिन्नरूपाः उन्मण्डलात् उद्यन्ति स कालोऽत्राहोरात्रस्यावयवत्वेन परिणमति इति। वराङ्गात्प्रभृति यावदाननं तावदङ्गं मेषः, आननात्प्रभृति यावदुरः तावदङ्गं वृषः इत्यादि द्रष्टव्यम्। कथममूर्तस्य कालस्य मूर्तत्वमुच्यते? काल्पनिकत्वमेव फलविज्ञापकत्वेन तादृगरूपत्वात्। भुजद्वयस्कन्धांशदेशः तन्मध्यदेशः उरश्शब्देनोच्यते। वासोभृच्छब्देन कटिप्रदेशो गृह्यते।

तथाच सारावल्याम् -

'शीर्षास्यबाहुहृदयजठरकटिवस्तिमेहनोरुयुगम्।
जानू जङ्घे चरणौ कालस्याङ्गानि राशयोऽजाद्याः।। इति।।

अस्य प्रयोजनन्तु कालपुरुषवत्कल्प्यमाने पुरुषशरीरे यद्राशिभागे शुभग्रहः तस्य पुष्टिः, यत्र पापग्रहस्तस्य उपद्रवः इति।

तथा च सारावल्याम् -

'कालनरस्यावयवात् पुरुषाणां कल्पयेत् प्रसवकाले।
सदसद्ग्रहसंयोगात् पुष्टिश्चोपद्रवांश्चेति।।'

नष्टजातकाध्याये जन्मराशिकल्पनेऽप्युक्तम् 'लग्नत्रिकोणोत्तमवीर्ययुक्तं भं प्रोच्यतेऽङ्गालभनादिभिर्वा'। यो राशिर्जिज्ञासितस्सोऽङ्गस्पर्शेन विज्ञातव्यः। यत्र पुनर्व्रणपिटकक्षतानामुत्पत्तिस्थानं जिज्ञासितं; तत्रापि स्पृष्टेन राशिना तद्विज्ञायते।

एतत् प्रश्नेऽप्युपयुज्यते। यदङ्गभूतो राशिरुदयः आरूढश्च तद्राशौ पापग्रहसंयोगे तत्र रोगादि वाच्यम्।

पुना राशिराश्यधिपयोः अभेदोपचारात् राशिस्थानानि शरीरे ग्रहाणां स्थानानि, च भवन्ति। मेषकुजयोः वराङ्गं वृषशुक्रयोर्मुखं, मिथुनबुधयोरुरः, कर्कटचन्द्रयोर्हृदयं; सिंहरव्योः क्रोडभागः, चापगुर्वोरूरू, मकरमन्दयोः जानू। राहोः च पादौ। एवं ग्रहस्थानान्यपि अनेनोक्तानि।

'मेषाश्विप्रथमा' इत्यत्र पञ्चाङ्गेषु नक्षत्राणां प्राधान्यं सूचितम्। तान्येवेह प्रत्यक्षतो दृश्यन्ते। मुहूर्तप्रश्नादिषु जन्मविपत्प्रत्यरवधजन्माष्टमराशितारावैनाशिकर्क्षादयोऽपि तैरेव प्रयोगितया निगद्यन्ते।



'नवर्क्षचरणा' इत्यनेन नवांशकानां प्राधान्यं सूचितम्।

'चक्रस्थिता' इति राशीनां समुदायवशादेव च लग्नम्। राशीनां चक्रस्थिता एव चक्रस्थिता इति चक्रवत् स्थिताः कुलालचक्रवत्तेषां समुदायसंस्थानमपमण्डले।

तथाचार्यभटः -

'मेषादेः कन्यान्तं सममुदगपमण्डलार्धमपयातम्।
तौल्यादेर्मीनान्तं शेषार्धं दक्षिणेनैवम्'।।इति।।

ग्रहाश्चरा इति सूचितम् 'चक्रस्थिता' इत्यनेन, भूचक्रसंस्थानञ्च सूचितम्। मेषवृषौ प्राच्यां, मिथुनमाग्नेय्यां, कर्किसिंहौ दक्षिणस्यां, कन्या नैरृत्यां, तौलिवृश्चिकौ पश्चिमायां, धनुर्वायव्यां, मकरकुम्भावुदीच्यां, मीनमैशान्याम् इति भूचक्रसंस्थानम्।

'प्राच्यादिगृहे क्रियादयो द्वौ द्वौ कोणगता द्विमूर्तयः।' इति।

वक्ष्यति च। एतत् भूचक्रं दैवज्ञस्य समन्तात् व्याप्तम्।

अस्मिन् भूचक्रे यत्र पृच्छकः स्थितः स राशिरारूढसंज्ञः पृच्छकेनारूढत्वात् आरूढ इत्युच्यते। तेन प्रश्नकर्मणि सर्वं निरूप्यते। पृच्छकस्य प्रश्नवैकल्यात् संस्थानवैषम्याद्वा आरूढराशेः दुरवबोधत्वात् कुत्रचित् प्रदेशे चतुरश्रं राशिचक्रं विलिख्य प्रागादिदिक्षु मेषादिराशीनुत्पाद्य तेषु राशिषु नक्षत्रग्रहादीन् सम्पूज्य पृच्छकः तेष्वेकराशिं स्पृशेत्। तं राशिं लग्नं कल्पयित्वा तत्काललग्नवत् उदितं कल्पयित्वा सर्वफलानि निरूपयितव्यानि। पृच्छकारूढराशौ विज्ञाते सति स एव राशिरारूढत्वेन ग्राह्यः।

पृच्छकदैवज्ञयोः फलजिज्ञासायां पृच्छायामसत्यामपि दर्शनादेव फलं चिन्तनीयम्।

तथा च वसिष्ठः -

'अपृच्छतः पृच्छतो वा जिज्ञासोर्यस्य कस्यचित्।
होराकेन्द्रत्रिकोणेभ्यश्शुभाशुभफलं वदेत्'।। इति।।

शुभदिवसे सुनक्षत्रे ग्रहराश्यादीन् सम्पूज्य दैवज्ञाय प्राभृतकं समर्प्य पृच्छत एव दैवज्ञेन शुभाशुभं निरूपणीयम्। अन्यथा न परमार्थफलविज्ञानसिद्धिः। शास्त्रनिरासोऽपि सम्पद्यते। तस्मादधर्मश्च जायते। तथा चोक्तं मनुना -

'नापृष्टः कस्यचित् ब्रूयात् न चान्यायेन पृच्छतः।
विजानन्नपि मेधावी जडवल्लोक आचरेत्'।। इति।।

भट्टोत्पलेनाप्युक्तम् -

'रम्यतरे भूभागे सम्पूज्य ग्रहगणं सनक्षत्रम्।
पश्चात् प्रश्नविधानं कुर्याद्येनाप्नुयात् सिद्धिम्।।
प्रष्टा मणिकनकयुतैः फलकुसुमै राशिचक्रमभ्यर्च्य।
पृच्छेद्यथाभिलषितं भक्त्या विनयान्वितः प्रश्नम्।।

तथा महर्षिणा बृहस्पतिनाप्युक्तम् विवाहप्रश्ने -

'विवाहकल्पिते काले सुखासीनं सुखप्रियम्।
दैवज्ञं भक्तितो नत्वा सम्पूज्य च यथाबलम्।।
उडुनी नामनी चोक्त्वा सम्पृच्छेत् सकृदेव तम्'।। इति।।

'राशिक्षेत्रगृहर्क्षभानि भवनं चैकार्थसम्प्रत्यये' इति। एते 'षडेकार्थसम्प्रत्यये वर्तन्ते। प्रत्ययो ज्ञानं, सम्प्रत्ययं संज्ञानं, तथा च हलधरः - 'प्रत्ययोऽधीनविश्वासशपथज्ञाननिश्चये' इति। राशिपर्यायाणां षट्कतया षड्राशयश्चिन्त्याः। जातकेषु लग्नराशिरेकः अपरश्चन्द्राधिष्ठितराशिः, तयोरधिपतिस्थितराशिः, चन्द्रलग्नांशराशींश्च इति। प्रश्नादौ एकस्तावदुदयः अपर आरूढ तृतीय उद्यन्नवांशराशिः चतुर्थः छत्रराशिः, पञ्चमः स्पृष्टाङ्गराशिः, षष्ठश्चन्द्राधिष्ठितराशिः, षड्भिरेतैः फलं निरूप्यते इति। 'एकार्थसम्प्रत्यये' एकस्य अर्थस्य निर्णये षड्राशयश्चिन्त्या इति सूचितम्। षड्वर्गफलञ्च निरुपणीयमिति ।

**मत्स्यौ घटी नृमिथुनं सगदं सवीणं**
**चापी नरोऽश्वजघनो मकरो मृगास्यः।**
**तौली ससस्यदहना प्लवगा च कन्या**
**शेषाः स्वनामसदृशाः स्वचराश्च सर्वे।।५।।**

अथोक्तानां राशीनां स्वभावाकृतिस्थानान्याह - 'मत्स्यौ घटी' इति। संज्ञामात्रेण मेषादिराशयो लोकप्रसिद्धाः। तेषां मेषादिनामानि न केवलं संज्ञामात्रप्रयोजनानि; अपि तु स्वरुपानुरुपाणीत्युपदिश्यन्ते 'शेषाः स्वनामसदृशाः' इति।

लोकप्रसिद्धनामश्रवणे यो विशेषो नावगम्यते स एवात्रोपदिश्यते। मत्स्यौ इति



- मीनराशिरित्युक्ते तस्य द्वित्वन्न प्रतिभाति। द्वित्वप्रतिभानार्थं मत्स्याविति द्विवचनम्। 'लग्नं समेत्युभयतः पृथुरोमयुग्मं' इति वक्ष्यति। तेनान्योन्यपुच्छाभिमुखं मत्स्ययुगलं मीनराशिरिति च सिद्ध्यति। घटीत्यनेन कुम्भराशेराकृतिरुच्यते। घटोऽस्यास्तीति घटी। तस्मात् स्कन्धविन्यस्तरिक्तघटः पुरुषः कुम्भराशिरिति च सिद्ध्यति। 'नृमिथुन'मिति तृतीयो राशिः नरमिथुनं, नारीनरौ सगदं सवीणमिति। गदाधरः पुरुषः सवीणा स्त्री इति योग्यतया विज्ञायते। 'चापी नरोऽश्वजघनः' इति धनूराशिः। चापोऽस्यास्तीति' चापी धनुष्मान् पुरुषः अश्वजघनः। अश्वस्तुरगः तस्य जघनमिव यस्य जघनं सोऽश्वजघनः। नवमराशेरुर्ध्वभागश्चापबाणपाणिर्मनुष्यः अधोभागस्तुरगः इत्युक्तं भवति। 'मकरो मृगास्यः' पूर्वभागो मृगस्याकृतिः अपरभागो मकरो जलचरसत्वः आस्यस्य विशेषकथनात् शेषभागो मकर इति सिद्धं भवति। 'तौली' तुलाधरः पुरुषः। 'ससस्यदहना प्लवगा च कन्या' सस्यं दहनं च दधाना प्लवगा नौस्था जले इति।

'शेषाः स्वनामसदृशाः' इति - मेषवृषसिंहकुलीरकीटाः - मेषो मेषाकृतिः वृषो वृषाकृतिः, सिंहः सिंहाकृतिः, कर्कटः कुलीराकृतिः वृश्चिको वृश्चिकाकृतिः इति। स्वभावाश्च स्वनामसदृशाः। मत्स्यौ घटीत्यादिश्लोकेन लोकप्रसिद्धनाम्ना अवगन्तव्यो विशेषः उच्यते चेत्; तादृशं विशेषं मीनादिराशीनां न विदुः। विशेषोस्त्येव। मीन इत्युक्ते मीनयुगलमिति न वेदितव्यम्। वेदितव्यमेव 'लग्नं समेत्युभयतः पृथुरोमयुग्मम्' इति स्वयमेव वक्ष्यति। तस्मात् नामश्रवणेन रूपसिद्धिस्स्यात्। मैवं बहुषु नामसु सत्सु एकेन नाम्ना प्रसिद्धाः सर्वे पदार्थाः। तदिह लोकप्रसिद्धनाम्ना एवमुक्तं स्यात्। न केवलमनेनैवाचार्येण एवं कथितं, कल्याणवर्मणाप्युक्तम्।

तथा च तद्वाक्यम् -

'कुम्भः कुम्भधरो नरोऽथ मिथुनं वीणागदाभृन्नरौ
मीनो मीनयुगं धनुश्च सधनुः पश्चाच्छरीरे हयः।
एणास्यो मकरः ससस्यदहना कन्या च नौस्था जले
शेषो राशिगणः स्वनामसदृशो धत्ते तुलाभृत् तुला'।। इति।।

स्वभावस्तु 'स्वचराश्च सर्वे' - स्वस्थानचरा स्वे स्वे स्थाने चरन्तः अथवा स्वचराश्च स्वभक्षणाः 'चर गतिभक्षणयो' रिति धातुः। मेषस्तावत् कटुकोष्णादिभक्षणः

वृषभस्तृणभक्षणः, मिथुनराशिरन्नपानादिभक्षणः, कुलीरो मत्स्यादिभक्षणः, सिंहो मृगमांसादिभक्षणः इत्याद्याकृतिसदृशानि भक्ष्याणि कल्प्यानि।

स्वभावश्च तद्वत्। तथाहि मेषस्तावत् सञ्चारशीलः, शीघ्राशनः, कुनखः, तोयभीरुः, कामीत्यादि; वृषस्तु मन्दगामी, पृथुवक्त्रः, दीप्तोदराग्निः, क्लेशसहिष्णुः, इत्यादि, मिथुनराशिस्तु गेयवाद्यकलासु कुशलः, निधुवननिपुणः, हास्येङ्गितज्ञः, नृत्तज्ञः, भक्षणतत्परः इत्यादि, कुलीरस्तु वक्रगतिः, जलतत्परः, जलाशयनिर्माणशीलः इत्यादि; सिंहराशिस्तु पृथुवदनः, स्त्रीद्वेषी, तीव्रात्मा, मांसादिभक्षणरतः, गुहानिवासशीलः, उदरदन्तादिरोगपीडितः,पराक्रमी, गर्वाधिकः, क्षुत्तृष्णार्दितः इत्यादि; कन्याराशिः सुरतप्रियः, लज्जान्वितः, परगृहवासी, प्रियभाषी इत्यादि; तुलाराशिस्तु क्रयविक्रयकुशलः कृशचलदेहः, अर्थपतिः, वाणिज्यपरः इत्यादिः वृश्चिकराशिस्तु विषधरः, श्वभ्रचारी, क्रूरचेष्टः, इत्यादि; धन्वी तु राजसन्निधिनिवासशीलः कुब्जाङ्गः, सहायापेक्षी, समरोत्सुकः, धन्वपरार्द्धन्तु दीर्घमुखः, वीर्यान्वितः, स्थूलदन्तः, इत्यादि, मकरराशिस्तु अधःकाये कृशः, सुन्दरनेत्रः, अल्पस्फिक्, शीतालुः, इत्यादि; कुम्भस्तु अल्पमुखः, जलार्थी, पृथुरुपः, भारवाही, इत्यादि; मीनस्तु मनोज्ञदेहः, बृहच्छरीरः, सुन्दरनेत्रः, जलचरद्रव्यभोक्ता इत्यादि।

मेषवृषादिजन्तूनां स्वभावान् अन्यान् अपि लोकतः शास्त्रतश्च विज्ञाय, फलनिरूपणे योजयेत्।

अत्राचार्येण राशीनां चतुष्पदमनुष्याम्बुचरसरीसृपयोनित्वं, पौरग्राम्यारण्यत्वं 'स्वचराश्च सर्वे' इत्युक्तत्वात् सिद्धं भवतीति नोक्तम्। मेषवृषौ चतुष्पादाविति को न जानाति। 'अश्वजघन इत्युक्तत्वात् धनुषोन्त्यार्धस्याश्वत्वात् चतुष्पात्वं केन न ज्ञायते। मकरपूर्वार्धस्य मृगास्यत्वात् तस्यापि चतुष्पात्वं न वक्तव्यम्। मिथुनकन्याचापाद्यर्धकुम्भानां अपि उक्ताकृतिविशेषात् मनुष्यत्वमवगन्तव्यम्। कर्कटकस्य कुलीरत्वात् कीटस्य वृश्चिकत्वात् अन्त्यस्य मीनत्वात् च सरीसृपत्वमूह्यम्।

कुलीरमकरान्त्यार्धमीनानां जलनिलयत्वात् जलराशित्वमपि केन नावगम्यते। तौलिराशेर्वणिक्त्वात् कन्याराशेर्नौस्थत्वात् नवमराशेर्धनुर्धरत्वात् च राजसन्निधिनिवासात् पौरत्वं न वक्तव्यम्। नागरिका हि नावमारोहन्ति। मेषवृषमिथुनकुम्भानां ग्रामवासित्वमपि लोके दृश्यते इति नोक्तम्। मृगपतिमकराद्यार्धयोराकृतिकथनत्वात् आरण्यत्वमुक्तम्।



तथा च कृष्णाचार्येण एतत् सर्वं स्पष्टतरमुपदिश्यते-

'मेषो वृषोऽथ सिंहस्तुरगान्त्यार्धं मृगस्य पूर्वार्धं।
योनिश्चतुष्पदानामाद्यं धनुषो भवेन्मर्त्यः'।।
कन्याघटमिथुनतुलाह्यार्धमाहुर्मनुष्ययोनिरिति।
कर्कटकझषकुम्भधरमृगापरार्धञ्च जलयोनिः।।
वृश्चिककुलीरमीनाः सरीसृपाणां वदन्ति योनिरिति।
कन्यातुले च तुरगो राशिषु पौरा विनिर्दिष्टाः।।
मृगपतिमकराद्यर्द्धावारण्यौ सर्वभावेषु।
आरण्यमिति च मेषं वदन्ति होराविदः केचित्।।
कन्यातुलातुरगराशिषु पौरा विनिर्दिष्टाः।
मेषवृषकुम्भमिथुना ग्राम्या इति सूरिभिः समाख्याताः'।।इति।।

मत्स्यौ घटीति विलोमोक्त्या क्वचिद्विलोमतो निरूपणीया इत्युक्तं भवति। स्थानविधिस्तु मेषादीनां जन्तूनां यानि निवासस्थानानि लोके दृश्यन्ते तान्येवात्र निरुपयितव्यानि। राश्याकृतिस्स्वभावस्थानकथनस्य प्रयोजनन्तु यत्र यत्राकृति स्वभावविशेषापेक्षा जन्तूनां स्थानविशेषपरिज्ञानापेक्षा च विद्यते तत्र तत्रानेन विधिना विनियोगः।

शुभनिमित्तोऽप्यनेन श्लोकेन 'मत्स्या'विति सूच्यते। 'मत्स्या'विति जलचरमांसयुगलं 'घटी'ति पूर्णकुम्भधरः, 'नृमिथुन'मिति नरयुग्मं, 'सगदमिति गदाखड्गादिस्वकीयायुधधारी पुरुषः 'सवीण'मिति वीणावेणुमृदङ्गशङ्खपटहाद्यं तन्त्रादश्च, 'चापी नरः' चापधरः पुरुषविशेष आयुधभृत् सुशस्त्रः, 'अश्वजघनोऽश्वारूढः' 'मकरः' पृथुरोमानां भेदः' 'मृगास्यः' मृगाणां अपृष्ठभागदर्शनं; 'तौली' श्रीमान् वर्धमानो वणिक्, 'ससस्यदहना' सस्यादिद्रव्याणि, 'दहन' शब्देन ज्वलदग्निनावाभिमुखकन्या च मङ्गलानि निमित्तानि।

'शेषास्स्वनामसदृशा'स्वनामश्रवणेन दर्शनेन वा दृङ्मनसोर्यत्र प्रसादो भवति, तन्निमित्तं शुभम्।

तथाच भट्टोत्पलः -

'दृङ्मनसोः प्रीतिकरं प्रश्ने सन्दर्शनं यदि श्रवणम्।

माङ्गलिकद्रव्याणां भवति शुभं निर्दिशेत्तत्र'।। इति।।

'नाम'शब्देन गौणनामानि गृह्यन्ते। एतदुक्तं भवति - भाववाचिनां शब्दानामपि नामत्वं परिणमति। यथा द्वैधीकरणक्रियायाः छेदनमिति नाम विदारणक्रियायाः भेद इति नाम। तथा सति छेदनं प्रश्नकाले दृश्यते चेत् प्रष्टृकार्यस्यापि तत्सादृश्यं भवति। छेदनं भवति विनाशो भवतीत्यर्थः। एवं ये ये शब्दाः क्रियावाचिनः पदार्थवाचिनश्च शुभाश्चाशुभाश्च ते सर्वे प्रश्नकालेऽवश्यमवगन्तव्याः 'शेषास्स्वनामसदृशा' इति वचनात्।

अपि च 'स्वनामसदृशाः' स्वस्वसंज्ञासदृशाः पुंनामानः पुंसां शुभाः स्त्रीनामानः स्त्रीणां शुभाः। एतदुक्तं भवति दक्षिणभागः पुरुषभागः वामभागः स्त्रीभागः। महादिशश्चतस्रः पुरुषाणां विदिशश्चतस्रः स्त्रीणां शुभं भवति। गर्भप्रश्नेऽपि प्रष्टुः पुन्नामकथने पुरुषो जायते, अन्यथा स्त्री जायते इत्यपि निरूपणीयम्।

'स्वचराश्च सर्वे' इति प्रश्नकाले यदुक्तं यद्दृष्टं यत् श्रुतं तत् सर्वं सादृश्येन प्रष्टुर्भवेत्।

स्वचराः 'स्वपक्षचराः'। एतदुक्तं भवति विवाहप्रश्ने यादृशी कन्या दृश्यते तादृश्याः कन्यायाः विवाहः। सन्ततिप्रश्ने तु यादृशः पुरुषो दृश्यते स्त्री वा तादृशः पुरुषोऽङ्गना वा जायत इति वक्तव्यम्।

ननु 'मत्स्यौ घटी'त्यादिश्लोकेन शुभनिमित्तमपि सूच्यते इति यदुक्तं तत् केनावगम्यते? एते शुभनिमित्तविशेषा इत्यनुक्तत्वात्। उच्यते 'स्वचराश्च सर्वे' इति। अनेन कथमवगम्यते एते शुभा इति। स्वचराः स्वकीयचराः स्वाभिप्रेतार्थगमका इत्यर्थः।

**क्षितिजसितज्ञचन्द्ररविसौम्यसितावनिजाः**
**सुरगुरुमन्दसौरिगुरवश्च गृहांशकपाः।**
**अजमृगतौलिचन्द्रभवनादिनवांशविधि-**
**र्भवनसमांशकाधिपतयः स्वगृहात्क्रमशः।। ६।।**

इदानीं राश्यधिपानाह 'क्षितिजसितज्ञ' इत्यादिना। क्षितिजादयो गुर्वन्ताः ग्रहा गृहांशकपाः गृहाणामंशकानां च पतयः 'मेषाश्विप्रथमा' इति मेषस्य प्राथम्योक्त्या मेषादिराश्यधिपाः इत्यत्र न वक्तव्याः।



'अजमृगतौलिचन्द्रभवनादिनवांशविधिः' अजादिचापान्तो मेषनवांशकविधिः मृगादिकन्यान्तो वृषे, तुलादिमिथुनान्तो मिथुने, कुलीरादिमीनान्तः कर्कटके नवांशविधिः। पुनरप्येवमेव राशीनां नवांशानां अधिपाः उक्ताः। अनेनैव हि सर्वत्रोपयोगः।

तथा च सारावल्याम् -

'भवनाधिपैस्समस्तं जातकविहितं विचिन्तयेन्मतिमान्।
एभिर्विना न शक्यं पदमपि गन्तुं महाशास्त्रे'।।इति।।

'गृहांशकपाः' इति - गृहाणि अंशकान् च पान्तीति गृहांशकपाः। 'गृह' शब्देन राशीनां जडत्वं सूचितम्। 'अधिप' शब्देन ग्रहाणां चेतनत्वमपि सूच्यते। यथा कश्चित् पुरुषः स्वगृहाधिपतिर्भवति तथैव राश्यधिपतिर्ग्रहो भवति। अधिपतेः दौर्बल्ये राशेरपि दौर्बल्यं भवति। अधिपतेः प्राबल्ये राशेरपि प्राबल्यं भवति।

अथ च शास्त्रान्तरे -

'लग्नं लग्नपतौ बलेन सहिते तत्तुल्यवीर्यं विदु-
स्तत्रैवोपचयस्थिते सति ततो वीर्योत्कटं जायते'।। इति।।

'गृहांशकपाः' इति समस्तपदकथनात् राश्यंशाधिपयोः फलदाने बलवतः कर्तृत्वम्। 'बलयोगात् फलमंशकर्क्षयो' इति वक्ष्यति च।

राश्यंशाधिपयोः भेदाभावोऽपि समासोक्त्या सूचितः। यथा मेषलग्ने मेषेण तदधिपतिना भौमेन च फलं निरूप्यते तथा स्थितिरवगन्तव्या। 'वृत्तातामग्रदृग्' इत्यादि श्लोके 'मानी अस्थिरधनः सेवाज्ञः' इत्यादिफलं कुजस्य भावः तस्य सेनापतित्वात्।

'अजमृगतौलिचन्द्रभवनादी' त्यत्र चन्द्रभवनस्य कर्क्यादि स्वल्पशब्दवाच्यत्वे 'चन्द्रभवन'शब्दप्रयोगाद् कोऽप्यभिप्रायोऽवगम्यते। 'मत्स्यौ घटी'त्यादिग्रन्थेन निर्दिष्टस्वरूपाणां राशीनां स्वाधिपतिभूतैः ग्रहैः फलनिरूपणे चन्द्रोऽपि विशेषान्निरूपणीय इति सूचितम्।

'भवनसमांशकाधिपतयः स्वगृहात् क्रमशः' इति द्वादशांशकाधिपतयः स्वगृहात् क्रमशः इति। मेषे मेषांशात् प्रभृति इत्यादि। तेषां अधिपाः पूर्वोक्ता इति।

'सुरगुरुसौरिमन्दगुरवश्च' इत्यत्र विलोमेन सृष्टिक्रमः सूचितः। मीनराशेः

गुरुरधिपतिः गुरोराकाशभूतम्। कुम्भस्य मन्दोऽधिपतिः तस्य वायुभूतम्। मकरचापयोः तयोरेवाधिपत्यत्वात् पुनरुक्त्या तौ न गृह्येते। वृश्चिकस्य कुजोऽधिपतिः तस्याग्निभूतम्। तुलायाः शुक्रोऽधिपतिः तस्य जलभूतम्। कन्यायाः बुधोऽधिपतिः तस्य पृथिवीभूतम्। एवं भूतसृष्टिक्रमः। तथा च श्रुतिः - 'आकाशाद्वायुः' वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी', इत्यादि।

कालचक्रदशायाः क्रमोऽप्यत्र सूच्यते। क्षितिजाद्यष्टखगानां समासः सुरगुर्वादिचतुर्णां समासः। तेन दक्षिणर्क्षेषु मेषादिमीनान्तं क्रमेण गणनीयम्। वृश्चिकादिचापान्तं व्युत्क्रमेण गणनीयम्। तदर्थं क्षितिजाद्यष्टपदच्छेदः कृतः। वामर्क्षेष्विह चापादिवृश्चिकान्तं गणनीयम् मीनादि व्युत्क्रमेण मेषान्तं गणनीयम् इत्युक्तं भवति। तदर्थं 'सुरगुरुमन्दसौरिगुरवश्च' इति चतुर्णां पृथक् समासः।

'अजमृगतौलिचन्द्रभवनादिनवांशविधिः' इति दशापहाराः कथिताः। मेषत्रिकोणराशीनां मेषादिनवांशाधिपाः दशापहर्तारः। वृषत्रिकोणराशीनां मृगादिनवांशाधिपाः दशापहर्तारः। मिथुनत्रिकोणराशीनां तुलादिमिथुनान्तं नवांशपतयो दशापहर्तारः। कर्कित्रिकोणराशीनां कर्क्यादि नवांशाधिपाः दशापहर्तारः। 'भवनसमांशकाधिपतयः' इति मेषादारभ्य मीनान्तं गणिते सति पुनरेव वृश्चिकादिव्युत्क्रमेण गणना कार्या इति उक्तं भवति।

**कुजरविजगुरुज्ञशुक्रभागाः पवनसमीरणकौर्पिजूकलेयाः।**
**अयुजि युजि तु ते विपर्ययस्थाः शशिभवनालिझषान्तमृक्षसन्धिः।। ७।।**

अथ त्रिंशांशफलमाह'कुजरविज' इति। अयुजि 'पवनसमीरणकौर्पिजूकलेयाः' सङ्ख्याः कुजरविजगुरुज्ञशुक्रभागास्स्युः। युजि तु ते विपर्ययस्थाः उक्तांशकसङ्ख्याभेदाः ग्रहाश्च विपर्ययेण स्थिताः शुक्रज्ञगुरुरविजकुजांशाः क्रमेण ज्ञेयाः युजि युग्मराशावित्यर्थः।

अन्यदर्थान्तरञ्चिन्त्यम्। यस्य त्रिंशांशः उदितः तद्वशात् भवनादिष्ववकाशो ऽवगन्तव्यः। कुजरविजयोः शुक्रस्याल्पोऽवकाशः। गुरोरवकाशबाहुल्यम्। बुधस्य मध्यमो ऽवकाशः इति भोजनशयनादीनां स्थानावकाशोऽनेन ज्ञेयः।



तथा च कृष्णीये -

'गृहभागेष्ववकाशो भोजनविधिशयनमैथुनानि पुनः।
वाच्यो वर्णोत्कर्षो विप्रादीनां पुर्वोक्तानाम्'।। इति।।

पुनरपि त्रिंशांशकैः प्रयोजनं उपरिष्टाद्वक्ष्यति।

'शशिभवनालिझषान्तमृक्षसन्धिः' नक्षत्रराश्योः युगपत् छेदनस्थानं गण्डान्तसंज्ञम्। 'अन्तः' शब्देनाशुभत्वं सूचितम्।

तथा च सारावल्याम् -

'जातो न जीवति नरो मातुरपथ्यो भवेत् स्वकुलहन्ता।
यदि जीवति गण्डान्ते बहुगजतुरगो भवेद् भूपः'।।

**क्रियतावुरुजुतुमकुलीरलेयपार्थोनजूककौर्प्याख्याः।**
**तौक्षिक आकोकेरो हृद्रोगश्चेत्थसिः क्रमशः।। ८।।**

संज्ञाविधानमाह 'क्रिय' इति। मेषादीनां क्रियादयः संज्ञाः उक्ताः। अथाष्टानां क्रियादीनां समासः तौक्षिकादयो व्यस्ताः प्रोक्ताः। तेनायमर्थः सूचितः। आत्माद्यष्टभावानां धर्मादिचतुर्भावसापेक्षत्वम् आत्मनो धर्मसापेक्षत्वं, धनस्य प्रवृत्तिसापेक्षत्वं, पराक्रमस्यार्थागम सापेक्षत्वं, सुखस्य धनव्ययसापेक्षत्वं , सुतसिद्धेः धर्मसापेक्षत्वं, शत्रुक्षयस्य प्रवृत्तिसापेक्षत्वं, कलत्रसुखस्यार्थागमसापेक्षत्वं, मरणरोगपरिभवादेः अर्थनाशसापेक्षत्वम्।

**द्रेक्काणहोरानवभागसंज्ञास्त्रिंशांशकद्वादशसंज्ञिताश्च।**
**क्षेत्रं च यद्यस्य च तस्य वर्गो होरेति लग्नं भवनस्य चार्धम्।। ९।।**

षड्वर्गसंज्ञामाह द्रेक्काणहोरेति। द्रेक्काणादयः षट्कथिताः। तेषु यत् यस्य तस्य वर्गः वर्गशब्देन उक्ताः द्रेक्काणादयः षडपि विज्ञेयाः इत्यर्थः।

अन्यदप्यर्थान्तरं सूचितम्। नवांशकाः नवप्राणात्मकाः -

'प्राणोऽपानस्समानश्चोदानव्यानौ च वायवः।
नागः कूर्मश्च कृकलो देवदत्तो धनञ्जयः'।।

धनञ्जयव्यतिरिक्ताः नव प्राणाः नवांशकाः। द्वादशांशकास्तु मनोबुद्धीन्द्रीयदशात्मकाः नवभिः प्राणैर्द्वादशभिरिन्द्रियैरपि एकविंशतिविधं सूक्ष्मशरीरं उत्पद्यते। तथाचोक्तं भगवत्पादाचार्येण -

'इह तावदक्षदशकं मनसा सह बुद्धितत्त्वमथ वायुगुणैः।
लिङ्गमेतदमुना पुरुषः सह सङ्गतो भवति जीवः'।।इति।।

स्थूलशरीरन्तु त्वगसृङ्मांसमेदोऽस्थिमज्जाशुक्लमयम्। तद्राशिसंज्ञमिति।

अन्यथा केचित् राशिः स्थूलशरीरं, द्रेक्काणः शरीरस्योर्ध्वमध्याधोभागभेदेन त्रिधा भिन्नः, होरा वामदक्षिणभागभेदेन भिन्ना, नवांशकः क्षेत्रज्ञः द्वादशांशाः वायुमनोबुद्धयः, त्रिंशांशकाश्चक्षुरादीन्द्रियपञ्चकं इति। एभिर्लग्नगतैः षड्भिरपि फलभेदो भवति।

तथा च सारावल्याम् -

'एभिस्स्पष्टतरं तत् प्रत्यक्षपरीक्षणं यस्मात्' इति।

'होरेति लग्नं' लग्नबलेन सर्वभावसिद्धिश्चिन्त्या। होराशास्त्रार्थनिरूपणविषये लग्नराशिरेक एव इति।

तथा च सारावल्याम् -

'जातकमिति प्रसिद्धं यल्लोके तदिह कीर्त्यते होरा'। इति।

तत्र जातके लग्नराशेरर्धं फलं अर्धं चन्द्रस्य। प्रश्नेप्युदयारूढयोस्तद्वद्। अतो लग्नचन्द्रयोर्बलवतोः षड्वर्गफलं होराशास्त्रे निरूपणीयमिति सूचितम्।

**गोऽजाश्विकर्किमिथुनाः समृगा निशाख्याः**
**पृष्ठोदयाः विमिथुनाः कथितास्त एव।**
**शीर्षोदया दिनबलाश्च भवन्ति शेषा**
**लग्नं समेत्युभयतः पृथुरोमयुग्मम्।। १०।।**

गोऽजाश्वीति। गोऽजाश्वादयः षड्राशयो निशाराशयः। अन्ये शेषाः दिनबलाः। निशाराशयः इत्युक्तत्वात् निशापतेरप्येते राशयः भवन्ति। दिनबलाः इत्युक्तत्वात् दिनपतेः राशयः इत्युक्तम्।



तथा चोक्तम् -

'सिंहः कन्या तुलाली च कुम्भान्त्यौ सूर्यराशयः।
अन्ये तु राशयश्चान्द्रा द्युनिशाराशयश्च ते'।। इति।।

निशाराशयो निशाफलदाः दिनराशयो दिवाफलदा इति।

'पृष्ठोदयाः विमिथुनाः' इति। पृष्ठेनोद्यन्तीति पृष्ठोदया अशुभा इत्युक्तं भवति। शीर्षेणोद्यन्ति इति शीर्षोदयाः। पृथुरोमयुग्ममुभयतो लग्नं समेति उदेतीत्यर्थः। पृष्ठोदया अशुभाः शीर्षोदयाश्शुभदा इत्युक्तं भवति।

तथा च कृष्णीये -

'पृष्ठोदयेषु सिद्ध्यत्यशुभं मूर्धोदयेषु शुभयुक्तम्।
उभयोदये विमिश्रं ग्रहरहितेभ्यः फलं वाच्यम्'।। इति।।

ग्रहयोगे ग्रहानुगुणं फलम्। पृष्ठोदये पापसम्बन्धे अत्यन्तमशुभत्वम्। पृष्ठोदये शुभसम्बन्धे मध्यमत्वं तद्विपरीतं शीर्षोदयेषु वक्तव्यम्।

पृष्ठे उदयो येषां ते पृष्ठोदयाः चिरेण शुभफलदा इत्यर्थः। अन्यथा शीर्षोदयाः। पृष्ठोदयस्थानां ग्रहाणां राशिषु दशासु च पृष्ठे फलोदयः। शीर्षोदयस्थानां आदौ उभयोदयस्थानां मध्ये फलोदयः। वक्ष्यति च 'पृष्ठोभयकोदयर्क्षगाः स्वान्त्यान्तः प्रथमेषु पाकदाः' इत्यनेन पृष्ठोदयमूर्धोदयविज्ञानेन प्रश्नजातकेषु बहुप्रयोजनमिति।

**क्रूरस्सौम्यः पुरुषवनिते ते चरागद्विदेहाः**
**प्रागादीशाः क्रियवृषनृयुक्कर्कटाः सत्रिकोणाः।**
**मार्ताण्डेन्द्वोरयुजि समभे चन्द्रभान्वोश्च होरे**
**द्रेक्काणास्स्युः स्वभवनसुतत्रित्रिकोणाधिपानाम्।। ११।।**

राशीनां क्रूरसौम्यादिभावानाह - 'क्रूरस्सौम्यः' इति। 'मेषाश्विप्रथमा' इत्युक्तमत्र चिन्त्यम्। मेषाद्योजराशयः क्रूरा इति चिन्त्याः। वृषादियुग्मराशयः सौम्याः। अनेन ओजराशिषु जाताः चिन्तिता वा पुरुषाः क्रूराः भवन्ति। युग्मेषु जाताः चिन्तिता वा सौम्या भवन्ति।

तथा च सारावल्याम् -

'ओजेषूग्राः पुरुषाः सौम्या युग्मेषु सर्वभवनेषु' इति।

ओजेषु द्रव्याण्यपि रुक्षाणि। युग्मे राशौ द्रव्याणि सौम्यानि। तथा च कृष्णीये भोजनप्रश्ने 'ओजेषु रुक्षमन्नं द्रवन्तु युग्मेषु जलचरे वा'। इति.

तथा सुरतप्रश्नेऽपि ओजराशिषु विषमसङ्ख्यं मिथुनकर्म युग्मराशिषु समसङ्ख्यम्। तथा च कृष्णीये -

'विषमेषु ग्रहराशिषु मैथुनमेकं द्विवारमितरेषु' इति।

किं बहुना। सर्वपदार्थानां विषमराशिषु क्रूरत्वं समराशिषु सौम्यत्वं च वक्तव्यम्। ओजराशयः पुरुषाः, युग्मराशयो वनिताः। ओजेषु चिन्तिताः पुरुषाः, युग्मेषु स्त्रियः, ओजराशिषु जाताः सत्त्वादिगुणयुक्ताः। युग्मेषु जाताः चापल्यादि स्त्रीगुणयुक्ताः। ओजराशिषु ग्रहबहुत्वे पौरुषयुक्तो भवति पुरुषः, विपरीते विपरीत इति। तस्य उपयोगे इयान् विशेषः- जातकेषु जन्मलग्नराश्योस्तदधिपतिस्थितराश्योश्च ओजयुग्मत्वमवगम्य जातानां क्रूरसौम्यपुरुषवनितात्वञ्च निर्णतव्यम्। प्रश्ने तु उदयारुढछत्रचन्द्राधिष्ठितराशिभिरेतच्चिन्त्यते इति।

'ते चरागद्विदेहाः' - ते मेषादयः। चरस्थिरोभयराशिषु जन्मलग्ने तदीशौ चरस्थौ चेत् जातोऽपि सञ्चारशीलाः स्थिरराशिगताः सर्वे चेत् स्थितिशीला, उभयराशिषु मिश्रस्वभावाः। गोचरफलनिरुपणे च -

'जन्मलग्नतदीशेषु चरस्थेषु चरत्यसौ।
स्थिरस्थेषु स्थितो जन्तुर्द्वन्द्वस्थेषु द्व्यात्मकः'।। इत्युक्तम्।।

प्रश्नादावपि : 'चरराशौ चरभूतं, स्थिरराशौ न वृद्धिनाशौ, उभये मिश्रं फलं' इति। तथा च भट्टोत्पलः -

'स्थिरराशौ लग्नगते स्थानप्राप्तिं वदेन्न गमनञ्च।
रोगोपशमो नाशो द्रव्याणां स्यात् पराभवो नात्र।।
चरराशौ विपरीतं मिश्रं वाच्यं द्विमूर्त्युदये।
स्थिरवत् प्रथमेऽर्धे स्यादपरं चरराशिवत् सर्वम्'।। इति।।



पुनर्धातुमूलजीवाश्चरादिभिरूह्याः, चरो धातुः, धातोर्नहि स्थिरो वासः, न गच्छतीत्यगः स्थिराणि मूलद्रव्याणि। द्विदेहाः देहशब्देन जीवाः ऊह्याः इति।

'प्रागादीशा' इति सत्रिकोणाः क्रियवृषनृयुक्कर्कटाः। प्रागाद्याः मेषसिंहधन्विनः प्राच्येशाः, वृषकन्यामकरा दक्षिणेशाः, मिथुनतुलाकुम्भाः पश्चिमेशाः, कर्कटवृश्चिकमीना उत्तरेशाः। अनेन दिक्परिज्ञानं प्रयोजनम्। तथाचोक्तं 'राशिभ्यः कालदिक्देशाः वयो जातिश्च लग्नपात्' इति। प्रागादीशाः क्षत्रियादिचतुर्वर्णेशाः सत्रिकोणाः क्रियवृषनृयुक्कर्कटाः इत्युक्तं भवति। 'मार्ताण्डेन्द्वो' इति। ओजराश्याधिपत्यमुच्यते ओजराशौ 'मार्ताण्डेन्द्वोः' होरे; समभे 'चन्द्रभान्वो'श्च। अधिपतिबलसम्पूर्तावेव होरायाः फलदत्वम्। अन्यथा विफलत्वम्। तदर्थं 'मार्ताण्डेन्द्वो'रिति सम्बन्धार्थे षष्ठी। 'क्रूरस्सौम्य' इति। राशीनां ओजानां केवलं क्रूरत्वं; युग्मानां सौम्यत्वमूह्यमिति।

'द्रेक्काणास्स्युः' इति। स्वभवनसुतत्रित्रिकोणाधिपानां' लग्नपञ्चमनवम-राशीनामधिपानां द्रेक्काणाः यथा मेषे कुजरविगुरूणां द्रेक्काणाः वृषे शुक्रबुधमन्दानां इत्यादि। अन्यथान्ये व्याचक्षते। एकस्मिन् राशौ नवांशकवशात् स्वभवनसुतत्रित्रिकोणमित्युक्तम्। कथमिति चेत् एकैकस्मिन् राशौ प्रथमपञ्चमनवमांशाधिपानां द्रेक्काणाः। यथा मेषे कुजरविगुरूणां, वृषे शनिभृगुबुधानां, मिथुने शुक्रमन्दबुधानां, कुलीरे चन्द्रकुजगुरूणां सिंहादिष्वप्येवमेव द्रेक्काणा इति।

तथा च कृष्णीये -

'क्षितिसुतरविगुरुसौरा भृगुजबुधौ भार्गवश्च रवितनयः।
बुधचन्द्ररुधिरजीवाः द्रेक्काणगणेश्वराः प्रोक्ताः'।।

'द्रेक्काणास्यु' रिति फलदाने शक्ताः भवेयुरित्यर्थः तस्मात्

'द्वाविंशः कथितस्तु कारणं द्रेक्काणो निधनस्य सूरिभिः।
तस्याधिपतिर्भवोऽपि वा निर्याणं स्वगुणैः प्रयच्छति'।

इत्युत्तरत्र वक्ष्यति। प्रश्नादावपि द्रेक्काणसदृशश्चोरो लग्नांशसदृशं धनं' इत्याद्युक्तम्।

द्रेक्काणानां स्वरूपमाचार्येण 'कट्यां सितवस्त्रवेष्टितः', इत्यादि षट्त्रिंशद्भिः श्लोकैरुपरिष्टादुच्यते। तेनापि फलनिरूपणे प्राधान्यमवगन्तव्यम्।

**केचित्तु होरां प्रथमां भपस्य वाञ्छन्ति लाभाधिपतेर्द्वितीयाम्।**
**द्रेक्काणसंज्ञामपि वर्णयन्ति स्वद्वादशैकादशराशिपानाम्।। १२।।**

पक्षान्तरेण होराद्रेक्काणाधिपत्यं आह 'केचित्तु' इति। प्रथमां होरां तद्राश्याधिपतेः, द्वितीयां होरां तल्लाभाधिपतेः - एकादशस्थानाधिपतेः केचिदाचार्याः वदन्ति। न बहुमतमिति स्वाभिमतं सूचयति। चन्द्रादित्ययोः दौर्बल्ये कस्मिंश्चिद् विषयेऽयं विधिर्निरूपणीयः। अथवा 'मार्ताण्डेन्द्वोरयुजि समभे चन्द्रभान्वोश्च होरे' इति। प्रथमोक्त-होराधिपत्यविधिर्जातके, पुनरुक्तः प्रश्ने इति वाचार्यमतम्।
तथा चोक्तं कैश्चन -

'रवीन्दू विषमे चन्द्ररवी चात्र समे क्रमात्।
होरा स्यात् लग्नपस्याद्या द्वितीया लाभपस्य तु।
आद्या तु जातके प्रोक्ता द्वितीया प्रश्नकर्मणि'।। इति।।

अथ 'द्रेक्काणसंज्ञामपि स्वद्वादशैकादशराशिपानां' केचिदाचार्याः (वर्णयन्ति) वाञ्छन्ति। अत्र द्रेक्काणाधिपत्यविधिः त्रिप्रकारः 'द्रेक्काणास्स्युः स्वभवन सुतत्रित्रिकोणाधिपानां' इत्यत्र स्वाधिपते राशेः प्रथमद्रेक्काणः; द्वितीयः सुताधिपतेः; तृतीयः त्रित्रिकोणाधिपतेरित्येकप्रकारः। 'चरागद्विदेहाः', इत्युक्तक्रमेण त्रिकोणगतचरराशिपतेः प्रथमद्रेक्काणः स्थिरराशिपतेर्द्वितीयः, त्रिकोणगतोभयराशिपतेः तृतीयद्रेक्काणः इति द्वितीयप्रकारः। द्रेक्काणसंज्ञामपि वर्णयन्ती' त्यादिनोक्तं तृतीयः।

केचित्त्वित्यत्र 'तु' शब्देन विषयविभागोऽस्तीति सूचितम्। तत्कथमिति चेदुच्यते-आद्यपक्षो विधाने द्वितीयो जातके तृतीयः प्रश्ने।
तथा च यवनेश्वरः -

'लग्नपुत्रशुभपाश्चरे गृहे पुत्रधर्मतनुपा युगे गृहे।
धर्मलग्नसुतपाः स्थिरे गृहे जातके खलु दृगाण उच्यते।।
सर्वराशिषु दृगाण उच्यते लग्नपस्य सुतपस्य चाप्यथो।
धर्मपस्य तु विधानकर्मणि प्रश्न एव तनुरिःफलाभपाः'।। इति।।

आचार्यस्य तु जातके लग्नसुतधर्मेशानामेव सर्वराशिषु द्रेक्काणाधिपत्यमिष्टं किल। आचार्यस्य श्रीवराहमिहिरस्य वचनस्यातिगम्भीरत्वात् केन खलूक्तस्याभिप्रायो ज्ञायते? गुरुमुखात् सम्प्रदायेन ज्ञेयम्।



**अजवृषभमृगाङ्गनाकुलीरा**
**झषवणिजौ च दिवाकरादितुङ्गाः।**
**दशशिखिमनुयुक्तिथीन्द्रियांशै-**
**स्त्रिनवकविंशतिभिश्च तेऽस्तनीचाः।। १३।।**

इदानीं सूर्यादीनां उच्चानाह - 'अजवृषभ' इति। अजवृषभादयस्सप्तराशयो दिवाकरादिसप्तग्रहतुङ्गाः, दश शिख्यादयोऽत्युच्चांशाः इत्यर्थः। 'तेऽस्तनीचाः' दशशिख्याद्यंशकैरतिनीचाश्चोक्ताः। अस्तो नीचो येषां तुङ्गानां तेऽस्तनीचाः।

अस्य श्लोकस्य इन्द्रदैवत्यच्छन्दः। तेन अजवृषभादिपञ्चराशयः एकेन पदेनोक्ताः। ततः पञ्चसु ग्रहेषु तुङ्गगतेषु जातो दिव्यो भवति इति सूचितम्।
तथा च कृष्णीये -

सुखिनः प्रकृष्टकार्या राजप्रतिरूपकाश्च राजानः।
एकद्वित्रि -चतुर्भिर्जायन्तेऽतःपरं दिव्याः।।

**वर्गोत्तमाश्चरगृहादिषु पूर्वमध्य-**
**पर्यन्ततः सुशुभदा नवभागसंज्ञाः।**
**सिंहो वृषः प्रथमषष्ठहयाङ्गतौलि-**
**कुम्भास्त्रिकोणभवनानि भवन्ति सूर्यात्।। १४।।**

वर्गोत्तमांशत्रिकोणराशीनाह 'वर्गोत्तमाः' इत्यादि, चरस्थिरोभयेषु क्रमात् प्रथमपञ्चमनवमांशा वर्गोत्तमांशाः भवन्ति। ते सुशुभदाः। तथा च स्वयमेव वक्ष्यति- 'शुभं वर्गोत्तमे जन्म' इति 'वर्गोत्तमस्वपरगेषु शुभं यदुक्तं तत्पुष्टमध्यलघुताशुभमुत्क्रमेण' इति च। मेषे मेषनवांशः, वृषे वृषनवांशः वर्गोत्तमसंज्ञः इत्युक्तम्।

अथवा नवभागसंज्ञाः सुशुभदाः इत्युक्तत्वात् द्वादशांशाः शुभदाः इति तर्कणीयम्। तथा च सारावल्याम् -

'वर्गोत्तमनवांशास्त्वाद्या मध्यान्त्यगाश्चराद्येषु।

सूतौ तु कुलमुख्यकरा द्वादशभागाः स्वराश्याद्याः'।। इति।

'सिंहो वृष' इत्यादि। सूर्यादारभ्य ग्रहाणां सिंहो वृष इत्यादि सप्त त्रिकोणसंज्ञानि भवन्तीत्यर्थः। अत्र सिंहः वृष इति द्वे पदे। अन्यत् समस्तम्। तेन चन्द्रादित्यप्राधान्यमुक्तम्।

'त्रिकोणभवनानि भवन्ती'ति वचनात् त्रिकोणराशीनां स्वक्षेत्रेभ्यः प्राधान्यं सूचितम्।

**होरादयस्तनुकुटुम्बसहोत्थबन्धु-**
**पुत्रारिपत्निमरणानि शुभास्पदायाः।**
**रिःफाख्यमित्युपचयान्यरिकर्मलाभ-**
**दुश्चित्कसंज्ञितगृहाणि न नित्यमेके।। १५।।**

अथ 'होरादयः' अनेन श्लोकेन लग्नादिद्वादशभावानां देहधनादिस्वरूपत्वमुच्यते। एतैर्द्वादशभावैः शरीरिणां प्रश्नजातकेषु समस्तपदार्थाश्चिन्त्यन्ते। ततस्सम्यग् विज्ञातजन्मकालस्यैव जातकफलं चिन्त्यम्।

तथा च संहितायाम् -

'तन्त्रे सुपरिज्ञाते लग्ने छायाम्बुयन्त्रसंविदिते।

होरार्थे च सुरूढे नादेष्टुर्भारती वन्ध्या'।। इति।

श्रीपतिश्चाह -

'ज्ञेयोऽत्र प्रथमं हि जन्मसमयश्छायाम्बुयन्त्रैः स्फुटः'। इति।

अत्र चाचार्येण सर्वशास्त्रसिद्धत्वात् ग्रहगणितवत् तन्वादिभावानयनं नोक्तम्। तदस्माभिः शिष्यहिताय प्रदर्श्यते। छायाजलयन्त्रादिभिः दिवसे रात्रौ वा सूर्योदयास्तमयाद्वा जन्मनि गतनाडीविनाड्यादिकालं सम्यक् विज्ञाय उदयलग्नमानयेत्।

तत्प्रकार उच्यते। जन्मकाले स्फुटार्कमानीयायनचलनं संस्कृत्यादित्यस्थित-राशेरेष्यभागं लिप्तीकृत्य लग्नराशेः स्वदेशोदयासुभिर्निहत्य एकराशिलिप्ताभिर्विभज्य



लब्धानसून् दिने जन्म चेत् जन्मकालात् पूर्व,उदयात् ऊर्ध्वगतासुभ्यो विशोध्य रवौ वर्तमानं राशिं पूरयित्वा शिष्टासुभ्योऽन्तरं यावतां राशीनामुदयासवश्शोध्याः। तेषां राशीनां उदयासून् विशोध्य रवौ तावतो राशीन् प्रक्षिप्य शिष्टासून् त्रिंशता निहत्यैकराशिलिप्ताभिः तत्र वर्तमानोदयासुभिर्विभज्य लब्धान् भागान् रवौ प्रक्षिप्य शिष्टासून् षष्ट्या निहत्य उदयराशिप्राणैर्विभज्य लब्धा लिप्ताश्च प्रक्षिप्यायनचलनमवनीय उदयलग्नमानयेत्। षड्राशियुतं एतदस्तलग्नं भवति।

पुनर्मध्यलग्नानयनमुच्यते अर्धरात्रमारभ्य मध्याह्नावधि पूर्वनतकालः। मध्याह्नमारभ्यार्धरात्रावध्यपरनतकालः। नतकालेन हि मध्यलग्नं आनीयते। दिवसे तु दिनार्धादूने दिनगते दिनार्धमानाद्दिनगतं विशोध्य शिष्टः पूर्वनतकालः। दिनार्धादधिके दिनगते दिनार्धदिनगतात् विशोध्य शिष्टः परनतकालः। एवमह्नि।

रात्रौ तु पूर्वरात्रौ रात्रिगतकालयुतदिनार्धमपरनतकालः। अपररात्रौ रात्रिशेषयुतं दिनार्धं पूर्वनतकालः। सर्वदा नतस्त्रिंशतो विशोध्य नतकालः साध्यः। लङ्कोदयप्राणैर्मध्यलग्नमानीयते।

'शून्याद्रिरसरूपाणि भूतरन्ध्रमुनीन्दवः।

पञ्चाग्निरन्ध्रशशिनो मेषादीनां निरक्षजाः'।।

मेषमीनकन्यातुलानां शून्याद्रिरसरूपाणि, वृषकुम्भवृश्चिकसिंहानां भूतरन्ध्रमुनीन्दवः, मिथुनकुलीरधनुर्मकराणां पञ्चाग्निरन्ध्रशशिनः, दिनार्धात् पूर्वं सायनार्कस्य गतभागं लिप्तीकृत्य तद्राशिं लङ्कोदयासुभिर्निहत्य एकराशिलिप्ताभिर्विभज्य लब्धानसून् दिनगतोनदिनार्धगतासुभ्यो विशोधयेत्। सूर्यस्थितराशौ गतभागमपनयेत्। तत्पूर्वेषां यावतां राशीनां लङ्कोदया संशोध्याः। तेषां राशीनां प्राणान् विशोध्य रवेश्च तावतो राशीन् विशोध्य शिष्टासून् त्रिंशता निहत्य शिष्टपूर्वराशिं लङ्कोदयासुभिर्विभज्य लब्धान् भागान् रवेर्विशोध्य शिष्टासून् षष्ट्या निहत्य तल्लङ्कोदयासुभिरेव विभज्य लब्धलिप्ताश्च विशोध्य मध्यलग्नमानयेत्।

दिनार्धादूर्ध्वकाले सायनरवेरेष्यभागं लिप्तीकृत्य तत् लङ्कोदयासुभिर्निहत्यैकराशि-लिप्ताभिर्विभज्य लब्धानसून् दिनार्धोनितदिनगतप्राणेभ्यो विशोध्य रवौ राशिशेषं पूरयित्वा शिष्टासुभ्यो गन्तव्यराशीनां लङ्कोदयासून् विशोध्य तावतो राशीन् रवौ प्रक्षिप्य शिष्टासून्

त्रिंशता निहत्यानन्तरगन्तव्यलंकोदयासुभिर्विभज्य लब्धान् भागान् रवौ प्रक्षिप्य षष्टिघ्नशिष्टासुभ्यो लिप्ताश्च प्रक्षिपेत्; मध्यलग्नं भवति। पूर्वरात्रौ तु दिनार्धादूर्ध्वकालक दिनार्धयुतपूर्वकालगतकालेन मध्यलग्नमवगन्तव्यम्। अपररात्रौ दिनार्धात् पूर्वका दिनार्धयुतापररात्रगन्तव्यकालेन मध्यलग्नमानयेत्। एवं मध्यलग्नमानीयायनचलनं विशोध्य शिष्टं मध्यलग्नमवगन्तव्यम्। षड्राशियुतन्तत् पाताललग्नम्। एवमुदयलग्नमस्तलग्नं मध्यलग्नं पाताललग्नं इति चत्वारि लग्नानि। उपरि वक्ष्यति च 'कण्टककेन्द्रचतुष्टयसंज्ञा सप्तमलग्नचतर्थखभानां' इति।

एवं लग्नचतुष्टयेन भावानयनप्रकार उच्यते। पाताललग्नं विन्यस्य उदयलग्नं विशोध्य शिष्टं त्रिभिर्विभज्य लब्धमुदयलग्ने संयोज्य द्वितीयभावमानयेत्। लब्धं द्विगुणीकृत्य उदयलग्ने योजयेत्, तृतीयभावो भवति। एवमस्तलग्नात् पाताललग्नं विशोध्य पञ्चमषष्ठभावौ साध्यौ। मध्यलग्नादस्तलग्नं विशोध्य अष्टमनवमभावौ साध्यौ। उदयलग्नात् मध्यलग्नं विशोध्य एकादशव्ययभावौ साध्यौ।

यथोक्तं पराशरमुनिना -

'लग्नं सुखात् सुखं कामात् कामं खात् खञ्च लग्नतः।<br>
त्र्यंशमेकद्विगुणितं युज्याल्लग्नादिषु क्रमात्' ।। इति।।

आसन्नभावयोर्योगार्धं भावसन्धिः भावारम्भावसानप्रदेश इत्यर्थः।

तत्रापि पराशरमुनिराह -

'पूर्वापरार्धं सन्धिः स्यात् योगार्धे भावयोर्द्वयोः।<br>
एवं द्वादशभावाश्च सन्धयोऽपि भवन्ति हि'।। इति।

तथापि अभियुक्तेनाप्युक्तम् -

'लग्नं पाताललग्नात् मदनभवनतो वेश्मभञ्चैव हित्वा<br>
कामं खान्मध्यलग्नं तदपि च तनुतो रामभक्तञ्च शिष्टम्।<br>
चन्द्रद्विघ्नञ्च युज्यात् तनुभवनमुखास्ते तु भावाः क्रमात्स्युः<br>
प्राक्पश्चात् भावयुक्तेर्दलमथ च तयोः सन्धयस्स्युः क्रमेण'।। इति।

भाववशात् भावफलभेदः।



अत्र यवनेश्वर आह -

'भावांशैस्समतां ग्रहः खलु गतः पूर्णं विधत्ते फलम्<br>
सन्धिस्थो न फलप्रदोन्तरगतस्त्रैराशिकेनैव च।<br>
भावान्यूनमथ ग्रहस्य गुणयेदंशादिकञ्चार्णवै-<br>
र्हत्वा चाप्यथ सन्धितोधिकमथ प्रोक्तं फलं भावजम्'।। इति।।

अत्र चतुर्गुणितं भावग्रहान्तरं भावसाधनमित्युच्यते। एवं द्वादशभावा आनीयन्ते। 'होरादयस्तनुकुटुम्बे' त्यादौ 'तनुश्शरीरं, 'कुटुम्बो' भरणीयजनः, 'सहोत्थो' भ्राता, 'बन्धुः' मातुलपितृव्यभागिनेयादि, 'पुत्र'स्सुतः, 'अरि' शब्देन शत्रुरोगादिरुच्यते, 'पत्नी' भार्या, 'मरण' शब्देन द्रव्यनाशविपद्रोगपराभवादिरुच्यते, 'शुभ'शब्देन भाग्यधर्मादिरुच्यते, आस्पदशब्देनावलम्ब उच्यते, 'आय' शब्देन सर्वाभीष्टागमः, 'रिःफ' शब्देन पापरोगादिरुच्यते। 'इति' शब्देनामी भावाः एव सर्वजन्तूनां सर्वपदार्थज्ञापका इति सूचितम्। 'अरिकर्मलाभदुश्चित्का'नां उपचयसंज्ञाः कृताः यतस्तत्र स्थिताः ग्रहा उपचयकराः तेषामुपचयसंज्ञा। न नित्यमिति एके वर्णयन्ति -

'पापैः स्वाधिपतिशत्रुभिरप्यदृष्टाश्चेत् उपचयाः, अन्यथा नोपचयाः' इति।

'अथोपचयसंज्ञाः स्युस्त्रिलाभरिपुकर्मणाम्।<br>
न चेद् भवन्ति ते दृष्टाः पापैः स्वस्वामिशत्रुभिः' इति। आचार्यस्य नैतदभिप्रेतम्।

**कल्यस्वविक्रमगृहप्रतिभाक्षतानि चित्तोत्थरन्ध्रगुरुमानभवव्ययानि।<br>
लग्नाच्चतुर्थनिधने चतुरश्रसंज्ञे द्यूनं च सप्तमगृहं दशमर्क्षमाज्ञा।। १६।।**

पुनरपि भावानाह 'कल्यस्वे'ति। 'कल्यः' स्वस्थः, 'स्वं' धनं, विक्रमः 'पराक्रमः', 'गृहं' भवनं, 'प्रतिभा' बुद्धिः; 'क्षतं' व्रणं; 'चित्तोत्थः' 'कामः, रन्ध्रः विपत्', 'गुरुः' पिता उपदेष्टा वा, 'मानो'ऽभिमानः, 'भव'स्संसारः, 'व्ययं' द्रव्यनाशः। लग्नादारभ्य एवं द्वादशभावाः। चतुर्थनिधनयोश्चतुरश्रसंज्ञावेद्या द्यूनं सप्तमगृहं 'दशमर्क्षमाज्ञा' दशमेनाज्ञा चिन्तनीया। लग्नादिषड्भावाः एकेन पदेनोक्ताः। अदृश्यभागस्थाः, सप्तमादिषड्भावाः दृश्यभावस्था इति सूचितम्।

उपरितनाध्याये 'पर्यायमन्यदुपलभ्य वदेच्च लोकात्' इति वक्ष्यति। तस्मादन्यशास्त्रेभ्योऽपि एतेषां द्वादशभावानां पर्यायाः वेद्याः।

तदत्रोच्यते -तथा च पराशरमुनिः -

'लग्नात् शरीरचिन्ता स्यात् द्वितीयात् स्वञ्च पैतृकम्।
भरणीयजनं वाचं पश्चादि च वदेद् बुधः।।
तृतीयात् सोदरान् बुद्धिं दुष्पूर्वां विक्रमं विदुः।
चतुर्थान्मातरं वेश्म सुखं लालित्यमेव च।।
सौमनस्यमपत्यादि प्रज्ञां मेधां च पञ्चमात्।
आधिव्याधिमरिं षष्ठान्मैथुनं स्त्रीजयं ततः।।
मृतिं पराजयं दुःखं हानिं व्याधिं तथाष्टमात्।
सौशील्यं भाग्यधर्मं च नवमाद्दशमात्तथा।।
मानास्पदाज्ञाकर्माणि लाभाल्लाभं व्ययाद् व्ययम्'। इति।

जातकसङ्ग्रहेऽप्युक्तम् -

'लग्नात् चिन्त्यं मूर्तिकीर्तीस्थितिञ्च वित्तं नेत्रं वाक् कुटुम्बञ्च वित्तात्।
धैर्यं वीर्यं भ्रातरं विक्रमेण विद्यात् क्षेत्रं वाहनं बान्धवांश्च।।
बन्धुस्थानान्मातुलं भागिनेयं तोयं वेश्माजाविकाद्यं सुखञ्च।
बुद्धिं पुत्रं पूर्वपुण्यन्त्वमात्यं पुत्राद् व्याधींञ्छात्रवात् द्विड्व्रणादीन्।।
मदनगमनजायालोकनान्यस्तभात् स्युर्मरणहरणदासक्लेशविघ्नानि रन्ध्रात्।
गुरुजनपरपुण्यान्यौषधं भाग्यसिद्धिं नवमभवनतः खान्मानकर्मास्पदाद्यम्।।
सर्वावाप्तिर्दुःखहानिर्भवाख्याद्रिःफाद्रिःफं स्वक्षयं भ्रंशमेव'। इति।

इत्यादि जातकविषये

'मूर्तिरमत्रं भक्ष्यं भोज्यं भोजयितृभाव उपदंशः।
सेचनमन्नं सहभुक् पूर्तिकथा शयनमपि विलग्नात्'।।

इति भोजनप्रश्नविषये -

'लग्नाद्यास्स्युर्भावा मूर्तिः कोशो योधो वाहो मन्त्रः।
शत्रुर्मार्गोऽथायुस्स्वान्तं व्यापारश्च प्राप्त्यप्राप्ती'।। इति प्रभुविषये।



इत्यादि शास्त्रान्तरादवगन्तव्यम्। एतेषां भावानां अधिपतिशुभयोगदृष्टिवशाद्वृद्धिः पापशत्रुयोगदृष्टिवशाद्धानिः।

तथा चोक्तम् -

'यो यो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात्तस्य तस्याभिवृद्धिः।
पापैरेवं तस्य भावस्य हानिः निर्देष्टव्या पृच्छतो जन्मतो वा'।। इति।।

उत्तरत्राचार्यस्स्वयमेव वक्ष्यति-

'लग्नात् पुत्रकलत्रभे शुभपतिप्राप्तेऽथवालोकिते'
चन्द्राद्वा यदि सम्पदस्ति हि तयोर्ज्ञेयोऽन्यथाऽसम्भवः' इति।

अत्र 'चन्द्राद्वे' ति विकल्पनात् चन्द्रादपि द्वादश भावाश्चिन्त्याः इत्युक्तं भवति तयोर्बलाधिकादिति सिद्धं भवति।

**कण्टककेन्द्रचतुष्टयसंज्ञाः सप्तमलग्नचतुर्थखभानाम्।**
**तेषु यथाभिहितेषु बलाढ्याः कीटनराम्बुचराः पशवश्च।। १७।।**

'कण्टककेन्द्र' इति। सप्तमलग्नचतुर्थखभानां कण्टककेन्द्रचतुष्टयसंज्ञाः वेद्याः। यथाभिहितेषु कीटनरांबुचराः पशवश्च बलाढ्याः इत्युक्तम्। तस्मात् सप्तमस्थाः लग्ने बलहीनाः इति सिद्धं भवति। तदन्तरेऽनुपातः। तत्प्रकारस्तु कीटराशिभ्य उदयलग्नं विशोध्य नरराशिभ्यो अस्तलग्नं विशोध्य जलराशिभ्यो मध्यलग्नं विशोध्य चतुष्पाद्राशिभ्यो पाताललग्नं विशोध्य षड्राश्यधिके चक्राद्विशोध्य भागीकृत्य त्रिभिर्भजेत्। लब्धं षष्ट्यंशरुपं भवति।

तथा च पराशरमुनिः -

'नृयुग्मजूकपार्थोनचापपूर्वार्धकुम्भभात्।
मृगचापपरार्धाख्या मेषसिंहवृषादपि।।
अलिकर्किटकाच्चापि मृगान्त्यार्धाच्च मीनभात्।
अस्तं सुखं क्रमाल्लग्नं खं हित्वाङ्गाधिके सति।।
चक्राद्विशोध्य रामैश्च भक्त्वा भागीकृतं बलम्'। इति।

केन्द्रात् परं पणपरं परतस्तु तद्व-
दापोक्लिमं हिबुकमम्बु सुखं च वेश्म।
जामित्रमस्तभवनं सुतभं त्रिकोणं
मेषूरणं दशममत्र च कर्म विद्यात्।।१८।।

अथ पणपरादिसंज्ञामाह 'केन्द्रात्परं' इत्यादिना। केन्द्रात् परं स्थानं पणपरम्। द्वितीयपञ्चमाष्टमैकादशस्थानानि पणपरसंज्ञानि। ततः परं तृतीयषष्ठनवमद्वादशस्थानानि आपोक्लिमसंज्ञानि। केन्द्रपणपरापोक्लिमगतैः ग्रहैः बाल्ययौवनवार्धकावस्थासु फलं वाच्यम्।

तथा च सारावल्याम् -

'केन्द्रात् परं पणपरमापोक्लिमसंज्ञितं तयोः परतः।
बालयुवस्थविरत्वे क्रमेण फलदाः ग्रहास्तेषु'।। इति।।

'हिबुकमम्बु सुखञ्च वेश्म' चतुर्थस्थानसंज्ञाः, जामित्रमस्तभवनं, पुत्रस्थानं पञ्चमं, मेषूरणं दशमं, दशमे पुरुषस्य प्रवृत्तिं विद्यात्। केन्द्रेषु अन्यान्यपि चिन्त्यानि।

तथा च शास्त्रान्तरे -

'हृदयं गृहञ्च हिबुके मध्याह्ने स्थानमानञ्च कोशांश्च।
आत्मार्थजीवितान्यपि विलग्ने श्रेयश्च चिन्त्यम्।
पतिजायाप्रवासपरिदेवनानि जामित्रे।
मृतरोगाङ्गतापचिन्तां तथा प्रवासञ्च विज्ञेयम्।।
चङ्क्रमणासनशयनस्थितिरप्युदयास्तहिबुकमध्यलग्नेषु।
च्युतिर्विलग्नात् हिबुकञ्च वृद्धिर्मध्यात् प्रवासोऽस्तमयान्निवृत्तिः'।
हिबुकेनाधस्सलिलं नद्याः गमनन्तु सप्तमेनैव।
दशमेन वृष्टिपतनं ब्रूयादुदयेन तत्त्रितयम्'।। इत्यादि।।

प्रश्नजातकेषु विषयविभागं विमृश्य निरूपणीयम्।



होरा स्वामिगुरुज्ञवीक्षितयुता नान्यैश्च वीर्योत्कटा
केन्द्रस्था द्विपदादयोऽह्नि निशि च प्राप्ते च सन्ध्याद्वये।
पूर्वार्धे विषयादयः कृतगुणा मानं प्रतीपं ततो
दुश्चिक्यं सहजं तपश्च नवमं त्र्याद्यं त्रिकोणं च तत्।। १९।।

'होरा स्वामिगुरुज्ञविक्षिते'त्यनेन दृष्टिबलमुदयबलं स्थानबलं कालबलं चोच्यते। होरा राशिः स्वामिना गुरुणा ज्ञेन वा वीक्षितयुता बलयुता भवति। तद्बलानयनमत्रोच्यते। 'होराफलं लग्नपतेः समानं' इत्यष्टमाध्याये वक्ष्यति च। ततो बलवशात् फलनियम इति न्यायात् राश्यधिपतेर्बलं गणितेनानीय तद्राशिं प्रति शुभदृष्टिरस्ति चेत्, तद्दृष्टिचतुर्थांशं षष्ट्यंशरूपे स्वामिबले योजयेत्। पापदृष्टिश्चेत् चतुर्थांशं वर्जयेत्। स्वस्वामिगुरुबुधदृष्टिरस्ति चेत् तद्दृष्टिं योजयेत्। बुधगुरुभ्यां योगे पूर्णमेकं बलं स्वामिबले योजयेत्। मन्दभौमरविभिर्युक्तस्य लग्नस्य पूर्णमेकं बलं शोधयेत्। एकैकस्य त्रिभिर्युगपद्युक्तस्य पूर्णबलत्रयमपनयेत्। पूर्णशब्देन षष्ट्यंशानां षष्टिरुच्यते। चन्द्रशुक्रयोगे बलहानिवृद्धी न भवतः। 'नान्यैश्चे' त्यत्रान्यशब्देन पापग्रहाः गृह्यन्ते।

अत्र पराशरमुनिराह -

'शुभदृष्टिचतुर्थांशयुतं स्वज्ञार्यदर्शनैः।
हीनपापदृगब्ध्यंशैर्युतं स्वामिबलं बलम्।।
गुरुज्ञाभ्यान्तु युक्तस्य पूर्णमेकन्तु योजयेत् ।
मन्दाररवियुक्तस्य बलमेकेन वर्जितम्'।। इति।।

'केन्द्रस्थाः द्विपदादय' इत्यत्र लग्नदशमसप्तमचतुर्थभावेषु नरचतुष्पात्कीटाम्बुचराः बलवन्त इति सूचितम्। तत् पूर्वमेव 'तेषु यथाभिहितेषु बलाढ्या' इत्यनेन सूचितं तदिदानीं पुनरुक्तमिति चेत्? न। इदं प्रश्ने ज्ञेयम्। नात्र त्रैराशिकन्यायः। पूर्वोक्तं जातकविषये। पुनः केन्द्रस्था इत्यत्र केन्द्रादिस्थाः इत्यभिप्रायोऽस्ति। केन्द्रगताः सर्वे राशयो बलवन्तः, पणपरस्थाः मध्यबलाः, आपोक्लिमस्थाः हीनबला इत्यर्थः। केन्द्रगतानां राशीनां षष्ट्यंशानां षष्टिं योजयेत्। पणपरगतानां त्रिंशत् आपोक्लिमगतानां पञ्चदश एवमानीतं राशिबलं स्वामिनो बलात् एकाधिकं चेत् राशिः पूर्णबलम्।

तथा च पराशरमुनिः-

'रव्यादयस्तु बलिनो राशीनां स्वामिनो वशात्।
अधिकं पूर्णमेकन्तद्बलं चेद् बलिनो मतिः'।। इति।।

यवनेश्वरश्चाह - 'बलानि सप्त चेत् भावाः पूर्णवीर्याः प्रकीर्तिताः'। अत्र 'गोजाश्वी'त्यादिना राश्यादीनां दिननिशासंज्ञाविधाने 'शीर्षोदयाः दिनबलाश्च भवन्ति शेषा' इत्यत्र बलग्रहणात् ते दिनराशयो दिने बलिनः निशाराशयो निशाबलिन इति कथयन्ति। अत्र राशिबलानयने बुधजीवरहितशुभदृष्टेः चतुर्थांशयोजनं न वराहमिहिराभिप्रेतं 'होरा स्वामिगुरुज्ञवीक्षितयुता नान्यैश्च वियोत्कटा' इत्युक्तत्वात्। द्विपदादयोह्नि निशि च प्राप्ते च सन्ध्याद्वये' इत्यत्र द्विपदचतुष्पदकीटाः दिने निशायां उदयास्तमययोः बलवन्त इत्युक्तम्। तत्र कीटशब्देन वृश्चिककुलीरमीनमकरान्त्यार्धाः उक्ताः इत्यादि। राशिबलमुक्त्वा राशीनां मानं कथयति 'पूर्वार्ध' इत्यादिना। 'पूर्वार्ध' शब्देन मेषवृषमिथुनमीनकुम्भ-मकराश्चोच्यन्ते, कृतगुणाः विषयादयः पूर्वार्धे मानम्। ततः प्रतीपं अपरार्धे मानम्। मेषाश्विप्रथमेषु द्वादशराशिषु द्वादशराश्यात्मकस्य चक्रस्यैकपरिभ्रमणकालं खल्वहोरात्रम्। ततः एकैकराशेः पञ्च पञ्च नाडिका उदेतुं कालः कल्पनीयः। तथा न जायते। राशिचक्रस्य तिर्यग्भ्रमणवशात् पञ्चनाडिकाभ्योधिक ऊनो वा राश्युदयकालः। विषयादयः पञ्चदश पञ्चदश इत्येताः कृतगुणाः कृतजीवाः एषां कालज्यामानयेदित्यर्थः षष्टिगुणिता पञ्च नाडिका त्रिशती सा षड्गुणिता सहस्राधिकाष्टशतसङ्ख्याः प्राणाः 'ज्ञानोदयः' इत्यक्षरसङ्ख्ययाऽहोरात्रेण हत्वा स्वस्वाहोरात्रेण विभज्यावाप्तं फलं चापत्रयं विन्यस्य तृतीयात् द्वितीयं शोधयित्वा द्वितीयात् प्रथमं शोधयित्वा शिष्टद्वयं प्रथमचापञ्च मिथुनवृषभमेषाणां मीनकुम्भमकराणां च लङ्कोदयप्राणाः मेषवृषमिथुनानां प्रतीपवृत्त्या कर्किसिंहकन्यानां उदयप्राणा भवन्ति। मीनकुम्भमकराणां प्रतीपवृत्त्या धन्विवृश्चिकतुलानां प्राणाः भवन्ति।

तत्र भास्करेणोक्तम् -

'शशिकृतशशिरामैराहता राशिजीवाः स्वकदिवसगुणार्धैर्भाजिताः काष्ठिताश्च।
पतितसमतिरिक्ताः पूर्वचापैरजाद्यैः विषुवदुदयराशिप्राणपिण्डाक्रियाद्याः'।।

ते लङ्कोदयप्राणाः भूमेर्गोलाकारत्वात् स्वदेशोदयसम्पादनाय स्वदेशचराः सुसंस्कृता एव स्वदेशराश्युदयाः भवन्ति। तदप्युक्तं भास्करेण -



'शून्याद्रिरसरूपाणि भूतरन्ध्रमुनीन्दवः।
पञ्चाग्निरन्ध्रशशिनो मेषादीनां निरक्षजाः।।
चरप्राणाः क्रमाच्छोध्या दीयन्तेऽप्युत्क्रमेण ते।
स्वदेशभोदया मेषाद्व्यत्ययेन तुलादितः'।। इति।।

एतत् सर्वं गोलादिसिद्धत्वात् नोक्तम्। दुश्चिक्यं सहजं भवति तपश्च नवमं त्रित्रिकोणञ्च। अन्यदप्यर्थान्तरं सूच्यते तृतीयराशिप्रमाणं नवमराशेः लङ्कोदयप्रमाणमिति। अन्यच्च व्यज्यते। नवमस्थानं विशेषमिति चिन्त्यम्। उक्तं च -

'सर्वं विहाय चिन्त्यं भाग्यर्क्षं प्राणिनां विशेषेण' इति।

**रक्तः श्वेतः शुकतनुनिभः पाटलो धूम्रपाण्डु-**
**श्चित्रः कृष्णः कनकसदृशः पिङ्गलः कर्बुरश्च।**
**बभ्रुः स्वच्छः प्रथमभवनाद्येषु वर्णाः प्लवत्वं**
**स्वेशाशाख्यं दिनकरयुतात् भात् द्वितीयं च वेसि।। २० ।।**

राशिवर्णानाह 'रक्तश्वेतः' इति। मेषाद्येषु राशिषु वर्णा भवन्ति। ग्रहरहिते राशीनां वर्णसिद्धिः। प्लवत्वं स्वेशाशाख्यं स्वाधिपतिदिक्प्लवो राशिरिति। स्वजन्मलग्नराशिः प्रश्नलग्नराशिर्वा यद्दिक्प्लवा भवति तां दिशं गतो राजा अचिरेण रिपुं जयति।

तथा च सारावल्याम् -

'भवनाधिपतिदिङ्नामप्लव इति यवनैः प्रयत्नतः कथितः।
तत्प्लवगो वानिहन्यादचिरेण महीपतिश्शत्रून्'।। इति।।

'दिनकरयुतात् भात् द्वितीयं च वेसि' द्वादशं च 'वासी'ति 'च' कारात् सूच्यते। पूर्वं वर्णप्रयोजनन्तु

'जन्मोदयगृहे वर्णाः तदधिपतेः पूजिता गृहे प्रतिमा।
हन्ति हरेरिह शत्रूनिन्द्रध्वजिनीव देवरिपून्'।। इति।।

इति गोविन्दसोमयाजिकृतौ बृहज्जातकव्याख्यायां दशाध्याय्याख्यायां
प्रथमाध्यायः

# द्वितीयाध्यायः

## ग्रहयोनिभेदाध्यायः

कालात्मा दिनकृन्मनस्तुहिनगुः सत्वं कुजो ज्ञो वचो
जीवो ज्ञानसुखे सितश्च मदनो दुःखं दिनेशात्मजः।
राजानौ रविशीतगू क्षितिसुतो नेता कुमारो बुधः
सूरिर्दानवपूजितश्च सचिवौ प्रेष्यः सहस्रांशुजः।।१।।

अथ ग्रहयोनिभेदाध्यायार्थो लिख्यते। 'कालात्मा' इति पूर्वोक्तस्य मेषादिराश्यवयवनिष्पन्नस्य होरापुरुषस्य सूर्यादिग्रहैः सम्बन्धः उच्यते। कालपुरुषस्यात्मा दिनकृत्, तस्य मनश्चन्द्रमाः, सम्पदापत्स्वविकारकरं सत्त्वं कुजः, बुधो वचः, जीवो ज्ञानसुखे, मदनः शुक्रः, दुःखं दिनेशात्मजः इति। आत्मादिभूतेषु ग्रहेषु बलवत्सु जातस्य पुरुषस्यात्मादयोऽपि बलिनो भवन्ति। दुर्बलेषु दुर्बलाः भवन्ति। आत्मभूतस्य दिनकृतो बलवत्वे जातस्यात्मप्रभावो जायते। आत्मप्रभावादेव हि सर्वकार्यपौरुषसिद्धिः। तस्मादादित्यबलं विशेषतश्चिन्त्यम्। मनोभूतस्य चन्द्रस्य बलवत्वे मनःप्रभावो जायते। मनःप्रभावादेव सर्वकार्यसिद्धिः। तस्मात् चन्द्रबलं अपि विशेषतः चिन्त्यम्। आत्ममनसोरितरेतराश्रयत्वात् सूर्याचन्द्रमसोरेकस्य बलवत्वादितरस्यापि बलसिद्धिः।

तथा च संहितायाम् -

'आत्मा सहेति मनसा मन इन्द्रियेण
स्वार्थेन चेन्द्रियमिति क्रम एष शीघ्रः।
योगोयमेव मनसः किमगम्यमस्ति
यस्मिन् मनो व्रजति तत्र गतोऽयमात्मा'।। इति।।

आत्मवियोगे मनसो जाड्यं प्रसज्जते। तस्मादर्केन्द्वोः बलं सर्वत्र चिन्त्यम्।



तथा चोक्तम् -

'सविता दशाफलानां पाचयिता चन्द्रमाः प्रबोधयिता।
आदित्यचन्द्रवशगाः सर्वे ताराग्रहा ज्ञेया'।। इति।।

कोः भूमेर्जातः कुजः। 'कुज'शब्देन स्थिरत्वं सूचितम्। 'ज्ञ'शब्देन ज्ञानरूपत्वं बुधस्य सूचितम्। 'जीव'शब्देन गुरोर्जीवाधिपत्यं सूचितम्। ज्ञानं सुखं च जीवः। 'ज्ञान'शब्देन बुद्धिरुच्यते। बुध्या खलु पुरुषः सर्वं जानाति। 'सुख'शब्देन धनमपि गृह्यते, धनस्य सुखसाधनत्वात्। 'सुख'शब्देन पुनरपत्यमप्युच्यते।

तथा चोक्तमन्यत्र -

'पुत्रजन्मविपत्तिभ्यां न परं सुखदुःखयोः' इति।

तस्माद्देहारोग्यवित्तपुत्रबुध्यादिस्वरूपो जीवः। तथा चोक्तम् -

'गुरुणा देहपुष्टिः स्याद् बुद्धिपुत्रार्थसम्पदः' इति।

'सितश्च मदनः' तत्र 'च'शब्देन सितस्यापि ज्ञानसुखस्वरूपत्वं सूचितम्। अयं तु विशेषः सङ्गीतसाहित्यादिज्ञानं शुक्रस्य, वेदशास्त्रादिज्ञानं जीवस्य, सुखमपि तद्वत्। सात्विकसुखं जीवस्य, राजससुखं सितस्य। गुरुसितयोः सत्त्वरजोमयत्वात्। 'मदन'शब्देन सुरभिद्रव्यहृद्यान्नपानाम्बरभार्याविवाहकर्मभोगस्थानवाहनगीतकलादयो गृह्यन्ते। 'दुःखं दिनेशात्मज' इति। अत्र 'दुःख'शब्देन शवाशौचदीक्षाबन्धुनाशव्याधिमरणादयो विपद उच्यन्ते।

तथा चोक्तम् -

सम्पदे गुरुसंयोगः शनियोगो विपत्तये।
चिन्तितव्यं सदा पुंसां सर्वभावानुसारतः'। इति।

अत्र दिनकृदादयो वारक्रमेण कथिताः। तेन किञ्चित् प्रयोजनं विद्यते - दिनयामाधिपत्यविज्ञानम्।

तथा चोक्तम् -

'ग्रहा वारनाथादयो वासरस्य प्रमाणाष्टभागाधिनाथाः क्रमेण।
तथा यामवत्याश्च तत्पञ्चमाद्या य आद्यंशनाथस्स एवाष्टमस्य'।। इति।।

'दिनेशात्मज' इति दिनेशशब्देन अन्त्यांशस्य वारेशाधिपत्यमुक्तम्।

दुःखस्वरूपस्य शनेरात्मजत्वेन विद्यमानस्य गुलिकस्यापि दुःखत्वं सूचितम्। कालात्मा दिनकृदित्यादिना जातस्य जन्तोः शरीरावस्था सूचिता। प्रथममात्मानुप्रवेशः, ततो मनसः प्रादुर्भावः, ततस्सत्वमयाहंबुध्युद्भवः, ततो वचसस्समुद्भावः, ततः पदार्थविशेषज्ञानम् इदं दुःखमिदं सुखमिति विशेषावगतिश्च, अतो मदनविकारात् विषयसङ्गतिः, ततो वार्धकावस्थायां क्षीणो भूत्वा दुःखितो भवतीत्यादि। तत्र रविचन्द्रयोः वियोगयोगवशात् तिथयो नित्ययोगाश्चोपपद्यन्ते। नक्षत्राणि तु चन्द्रस्य नक्षत्रप्रवेशवशात्। तस्मात् रविचन्द्राभ्यां हि नक्षत्रतिथिकरणसम्भवः। तस्मात् कालस्यात्ममनोमयत्वमनयोर्युक्तम्।

'कालात्मा दिनकृत्' इति कालस्वरुपो हि रविरित्युक्तम्। तथा हि रविगतिवशात् अपमण्डलकल्पना दिवसकल्पना च। अपमण्डलस्थद्वादशराश्युदयवशात् अहोरात्रसिद्धिः। त्रिंशदहोरात्रैः मासः; मासद्वयेन ऋतुः, षड्भिः ऋतुभिः संवत्सर इत्यादि कालविभागकल्पनया हि लवादिब्रह्मप्रलयान्तः कालो निष्पद्यते। तस्मात् 'कालात्मा दिनकृत्' भवति। 'मनस्तुहिनगु'रिति पुरुषस्य मनःप्राधान्येन हि सर्वप्रवृत्तिः दृश्यते। तस्मात् चन्द्रबलक्षये अन्यग्रहबलेन न किञ्चित् प्रयोजनं विद्यते।

तथा चोक्तम् -

'अमृतकिरणवीर्याद्वीर्यमाश्रित्य सर्वे
विदधति फलमेते खेचराः साध्वसाधु।
निजनिजविषयेषु व्याप्रियन्ते यथामू-
न्यलमिह मनसैवाधिष्ठितानीन्द्रियाणि'।। इति।।

तस्मात् चन्द्रार्कयोर्बलं विशेषतश्चिन्त्यमित्युक्तं भवति। तथा चोक्तम् -

'चन्द्रार्कौ बलयुक्तौ कुजादयः प्रोक्तकालबलहीनाः।
शुभफलदास्ते सर्वे दशासु योगेषु सञ्चिन्त्याः'।।

'राजानौ रविशीतगू' इति। रविचन्द्रौ राजानौ; क्षितिजस्सेनापतिः; कुमारो युवराजः बुधः; गुरुशुक्रौ सचिवौ; प्रेष्यः शनिः।

तथा च सारावल्याम् -

'राजा रविश्शशधरश्च बुधः कुमारः
सेनापतिः क्षितिसुतः सचिवौ सितेड्यौ।



प्रेष्यस्तयोश्च रविजस्सबलो नराणाम्
कुर्वन्ति जन्मसमये निजमेव रूपम्'।। इति।।

जन्मकाले यो ग्रहो बलवान् जातः तत्समानरूपो भवतीति।

अन्यदप्यर्थान्तरमस्ति, तदपि सूचितम्। द्वादशराश्यात्मकस्य कालचक्रस्य राजानौ रविशीतगू अधिपतीत्यर्थः। दिनपतिर्निशापतिश्च द्वादशराशीनामधिपौ। तत्र रविः स्वस्थानात् सिंहादारभ्य क्रमात् षड्राश्यधिपतिः। ततः चन्द्रः स्वस्थानात् कुलीरादारभ्य व्युत्क्रमेण षड्राश्यधिपतिः। रविचन्द्राभ्यां दत्तमेव कुजादीनां राश्याधिपत्यम्। तद्यथा कुमारभूतस्य बुधस्य रविणा स्वस्थानात् धनस्थानं दत्तं, सचिवभूतस्य शुक्रस्य तृतीयं पराक्रमस्थानं दत्तं, सेनापतेः कुजस्य बन्धुस्थानं चतुर्थं दत्तं, बुद्धिसचिवस्य गुरोः बुद्धिस्थानं पञ्चम दत्तं, प्रेष्यकारकस्य शनेः प्रेष्यस्थानं षष्ठं दत्तम्। एवं चन्द्रेणापि व्युत्क्रमेण गणनया धनादिस्थानानि दत्तानीति।

तथा च सारावल्याम् -

'द्वादशमण्डलभगणः तस्यार्धे सिंहतो रविर्नाथः।
कर्कटकात् प्रतिलोमं शशभृदथास्यापि तद्दानात्।।
भानोरर्धे विहगैः शूरा तेजस्विनश्च साहसिकाः।
शशिनो मृदवस्सौम्याः सौभाग्ययुताः प्रजायन्ते'।। इति।।

**हेलिः सूर्यश्चन्द्रमाः शीतरश्मिर्हेमा वित् ज्ञो बोधनश्चेन्दुपुत्रः।**
**आरो वक्रः क्रूरदृक् चावनेयो कोणो मन्दः सूर्यपुत्रोऽसितश्च।। २।।**

**जीवोऽङ्गिराः सुरगुरुर्वचसां पतीज्यः**
**शुक्रो भृगुर्भृगुसुतः सित आस्फुजिच्च।**
**राहुस्तमोऽगुरसुरश्च शिखीति केतुः**
**पर्यायमन्यदुपलभ्य वदेच्च लोकात्।। ३।।**

'हेलिस्सूर्य' इति- सूर्यचन्द्रयोः द्वे द्वे संज्ञे प्रोक्ते। बुधजीवशुक्राणां चत्वारि

चत्वारि नामान्युक्तानि, मन्दारयोस्त्रीणि त्रीणि, राहोस्त्रयः, तमः अगुः असुरश्चेति केतोश्चैकं शिखीति अन्याः संज्ञाः लोकतो वेद्याः लोके प्रसिद्धत्वात्। प्रथममुक्तौ सूर्यचन्द्रौ प्रकाशकग्रहौ। पुनरुक्ताः पञ्चताराग्रहाः तदनन्तरं उक्तौ द्वौ तमोग्रहौ।

प्रथमोदितौ सूर्येन्दू सर्वसाधारण्येन सर्वत्र निरूपणीयौ। बुधोप्याश्रयवशात् सुखदुःखदो ज्ञेयः। तदनन्तरोदितौ कुजशनी ह्यनिष्टदौ सर्वत्र। तदनन्तरोदितौ गुरुभृगू सर्वत्र शुभफलदौ। तदनन्तरोदितौ राहुकेतू क्षेत्रोच्चादिहीनत्वात् अशुभफलदौ इति। 'पर्यायमन्यदुपलभ्य वदेच्च लोकात्' इति विधिना केवलमस्मिन् शास्त्रे यः पर्यायोऽत्र नोक्तः सः लोकात् शास्त्रेषु दर्शनात् ज्ञात्वा वदेत्। अत्रानुक्तानि यानि लक्षणानि तानि न निरूपणीयानि इति नावगन्तव्यम्। तानि ज्ञात्वा सर्वं वदेत् इत्युक्तम्।

रक्तश्यामो भास्करो गौर इन्दुर्नात्युच्चाङ्गो रक्तगौरश्च वक्रः।
दूर्वाश्यामो ज्ञो गुरुर्गौरगात्रः श्यामः शुक्रो भास्करिः कृष्णदेहः।। ४।।

रक्तश्याम इति ग्रहाणां वर्णा उक्ताः। किमस्य प्रयोजनमिति। यस्मिन् ग्रहे बलवति जातः सः तदानीं तत्तुल्यवर्णो भवति।

तथा च कृष्णीये -

'आत्माकृतिवर्णादीन् ग्रहस्तु न जहाति परगृहस्थोऽपि।
तत्स्वाम्याकृतिवर्णो व्रजतीत्यपरे व्यवस्यन्ति'।।

'चन्द्रसमेतनवांशपवर्णः' इत्यत्रायं गृह्यते।

उच्चगो रक्तः नीचगः श्यामः रविर्भवति। नात्युच्चाङ्गः कुजस्य इत्यर्थः। 'गौरगात्र' इति धवलगात्रः गौरावयवः इत्युक्तम्। भास्करिः कृष्णदेहः- अस्वच्छः अन्तस्स्वच्छ इत्यर्थः।

वर्णास्ताम्रसितातिरक्तहरितव्यापीतचित्रासिता
वह्न्यम्ब्वग्निजकेशवेन्द्रशचिकाः सूर्यादिनाथाः क्रमात्।
प्रागाद्या रविशुक्रलोहिततमस्सौरेन्दुवित्सूरयः
क्षीणेन्द्वर्कमहीसुतार्कतनयाः पापा बुधस्तैर्युतः।। ५।।



'वर्णास्ताम्र' इत्यादि - एवं ग्रहाणां निजशरीरवर्णानुक्त्वा तदधिदैवतान् वर्णानाह ताम्रादयो वर्णा इति। सूर्यादिनाथाः सूर्यादयो नाथाः एषां ते तथोक्ताः। अनेन ग्रहपूजादौ तद्वर्णकुसुमवस्त्रपश्वादयो ग्राह्याः। फलकथने उत्तरस्य वर्णकथनस्य पूर्वोक्तस्य रक्तश्यामेत्युक्तवर्णस्य चानुस्मृतिः कार्या। वर्णनिर्देशो हि सर्वत्र वस्त्ववस्त्ववगमनात् न शक्यते। पदार्थानां असङ्ख्यात्वात् पदार्थस्य प्रथमं साक्षात् कथनं दुष्करं स्यात्।

'वह्न्यम्बु' इत्यादि। वह्न्यम्ब्वग्निजकेशवेन्द्रशचिकाः सूर्यादिनाथाः भवन्ति। सूर्यादिनाथाः इत्यत्र षष्ठीतत्पुरुषसमासः। अत्र 'वह्नि' शब्देनाग्निश्च रुद्रश्च विवक्षितौ; कृशानुरेता हि भगवान् हरः। 'अम्बु' शब्देन च सूच्यते - शब्दैकदेशकथनात् - अम्बिका गौरीच। 'अग्निज' शब्देन कारणाश्रयत्वात् स्कन्दः उच्यते - कुण्डाश्रयत्वात् अग्निरधिष्ठानभूता भूमिश्च। 'केशव' शब्देन विष्णुरेव विवक्षितः। 'इन्द्र' शब्देन शक्रः ब्रह्मा वा देवानामाश्रयभूतत्वात्। 'शची' शब्देन इन्द्राणी इन्द्रो वा। 'क' शब्देन ब्रह्मा गृह्यते। शब्दैकदेशात् कालो वा इत्युक्तार्थानुसारेण शास्त्रान्तरे पक्षद्वयत्वेनोक्तम्।

तथा च शास्त्रान्तरम् -

'सूर्यादितः शिवशिवागुहविष्णुकेन्द्रकालाः क्रमेण पतयः कथिता ग्रहाणाम्।
वह्न्यम्बुभूमिहरिशक्रशचीविरिञ्चाः तेषां पुनर्मुनिवरैः प्रतिदेवताश्च'।। इति।।

द्वितीयपक्षानुसारेण पतयोऽत्र सुगमाः।

तथा च सारावल्याम् -

'पावकजलगुहकेशवशक्रशचीवेधसः पतयः।
सूर्यादिग्रहदैवतमन्त्रैः सम्पूज्य देवतामाशाम्।।
कनकगजवाहनादीन् प्राप्नोति नृपो गतश्शीघ्रम्'। इति।

'प्रागाद्या' इति। प्रागादि दिङ्नाथाः रव्यादयो भवन्ति। एते जातकविषयाः। अथ पक्षान्तरम्। रवेः प्राची। शुक्रस्य प्रतीची। लोहितस्याग्नेयी। तमसः ऐशानी। सौरस्य वायवी। इन्दोरुदीची। बुधस्य निऋतिः। सूरेरवाचीत्यन्वयः कथं उपदेशेन विना गृह्यते। केसरी भोगशेषो हि अयं पक्षो नष्टमुष्ट्यादिषु ग्राह्यः।

तथा च कृष्णीये -

'रविकुजगुरुशशितनयभृगुजसौरेन्दुसैंहिकेयानाम्।
प्रादक्षिण्येन दिशः प्राच्याद्याः कल्पिताश्चान्यैः'।। इति।।

एवं द्विविधग्रहदिक्कथने यां दिशं प्रति ग्रहो गच्छति सा तस्य दिक् इत्युपदेशः।

'क्षीणेन्दु' इत्यादि क्षीणेन्द्वादीनां उत्तरोत्तरं पापफलसूचकत्वमवगन्तव्यम्। अनेन प्रयोजनं तु शुभग्रहैः पापग्रहैश्च बलयुतैः फलभेद उच्यते। रविकुजसौराः निसर्गतः पापाः। चन्द्रबुधयोरवस्थान्तरेणैव पापत्वम्। गुरुशुक्रयोः सर्वदा शुभफलदत्वमवगन्तव्यम्। अत्र चन्द्रस्य क्षीणत्वे पापत्वं न स्वतो जायते। चन्द्रस्य क्षीणतायामन्ये ग्रहाः स्थानबलादिबलवन्तोऽपि विबलाः भवन्ति। तस्मात् सर्वे ग्रहाः शुभानि न दद्युः। तेन हि क्षीणचन्द्रस्य पापत्वं, क्षीणचन्द्रादपि अर्कस्य पापत्वं तस्मादपि कुजस्य, तस्मादपि शनेः।

रविकुजौ तु वह्निभूतस्वरुपौ क्षत्रकुलाधिपौ च। तथापि रवेः सत्वगुणमयत्वात् अत्यन्तं पापत्वं न विद्यते। कुजस्य तमोमयत्वात् अर्कादपि पापत्वमुच्यते। शनेस्तु तमोमयत्वात् वायुमयत्वात् दुःखमयत्वाच्च कुजादपि पापत्वं ज्ञायते। यवनपक्षे तु रवेः क्रूरत्वं कुजशन्योः पापत्वमिति विशेष उक्तः।

तथा च तद्वाक्यम् -

'क्रूरग्रहोर्कः कुजसूर्यजौ तु पापौ शुभाः शुक्रशशाङ्कजीवाः' इति।

अस्य प्रयोजनन्तु शुभग्रहैः पापग्रहैश्च बलयुतैः फलभेदाः उच्यन्ते।

तथा च सारावल्याम् -

'आचारसत्त्वशुभशौचयुतास्सुरुपास्तेजस्विनः कृतविदो द्विजदेवभक्ताः।
स्रग्वस्त्रगन्धजलभूषणसत्प्रियाश्च सौम्यग्रहैर्बलयुतैः पुरुषा भवन्ति।।
लुब्धाः कुकर्मनिरताः निजकार्यनिष्ठाः साधुद्विषस्सकलहास्यतमोभिभूताः।
क्रूरास्सदा वधरताः मलिना कृतघ्नाः पापग्रहैर्बलयुतैः पिशुनाः कुरुपाः'।।इति।।
'क्षीणेन्दु'रिति क्षीणेन्द्वोः प्रथमकथनं तस्याशुभसूचकम्।
अमायां च चतुर्दश्यां क्षीणचन्द्रो न सर्वदा'।



**बुधसूर्यसुतौ नपुंसकाख्यौ शशिशुक्रौ युवती नरास्तु शेषाः।**
**शिखिभूखपयोमरुद्गणानां वशिनो भूमिसुतादयः क्रमेण।। ६।।**

'बुधसूर्यसुतौ' इति ग्रहाणां नपुंसकस्त्रीपुरुषत्वमुच्यते। बुधसूर्यसुतौ नपुंसकौ; शशिशुक्रौ युवती; नरास्तु शेषाः। अत्र तु अर्थविशेषो ध्वन्यते। शेषा रविकुजगुरवः पुरुषाः। तेषां मध्येऽर्कः पिता, कुजो भ्राता, गुरुः सुतः, शशिशुक्रौ युवती, शशी माता, शुक्रो भार्या। यथात्र स्त्रीग्रहकथनान्तरं पुंग्रहविधिः। तथापि नपुंसको बुधः स्त्रीनपुंसकः। सूर्यसुतः पुंनपुंसकः। अर्थात् बुधशन्योर्नपुंसकत्वविधानात् चेष्टामात्रबलानां तिरश्चामपि सूचकत्वमूह्यम्। अथ स्त्रीपुरुषसंयोगाल्लब्धानां दत्तपुत्रादीनामपि कारकत्वं तर्कणीयम्। पुंस्त्रीनपुंसकचिन्तायां सर्वत्रायं विधिः। 'शिखी'त्यादिना ग्रहाणां भूतसम्बन्ध उच्यते। शिखिभूप्रभृतीनां भूमिसुतादयो वशिनो भवन्ति। 'गण' शब्दः पादपूरणार्थ इति केनचित् व्याख्यातम्। तदसत्। यतो'र्थबहुलं स्वल्पं शास्त्रप्लवं प्रारभ' इत्युक्तवताचार्येण न केवलं पादपूरणार्थमयं शब्दः प्रयुक्त इति प्रतिभाति। तस्मादयमर्थोऽत्र गम्यते। गणशब्दः प्रत्येकं योजनीयः। शिखिगणस्तावत् वह्निरुपः चक्षुरिन्द्रियपादव्यानमनोमयकोशाः। भूगणस्तु पृथिवीगन्धघ्राणेन्द्रियोपस्थप्राणान्नमयकोशाः। खगणोप्याकाशशब्दश्श्रोत्रेन्द्रिय-वाक्समानानन्दमयकोशाः। पयोगणः खल्वब्रसनेन्द्रिय- पाय्वपानप्राणमयकोशाः। मरुद्गणो वायुस्पर्शत्वगिन्द्रियपाण्युदानविज्ञानमयकोशाः। एवं उपदेशसिद्धोऽर्थः। मेषादिराशीनामपि स्वामिग्रहोक्तान्येव भूतानि इत्यवगन्तव्यं राशीनां भूतान्युपदेशात्।

तथा च कृष्णीये -

'क्वम्बुपवनपावकवियन्ति भूतानि पञ्च कथितानि।
बुधभृगुयमभौमानां जीवस्यैषां ग्रहाणां च'।। इति।।

कुलीरसिंहयोर्जलाग्निभूते 'वह्न्यम्बु' इत्यादिना रविचन्द्रयोः पूर्वमेव कृते।

तत्र ग्रहाणां शुष्कार्द्रत्वमप्यनया भूतोक्त्यैव सिद्धमेव। कथं? अग्निमयत्वात् अर्ककुजयोः वायुमयत्वात् शनेश्च शुष्कत्वमवगन्तव्यम्। जलात्मकत्वात् शशिशुक्रयोरार्द्रत्वमवगन्तव्यम्। गुरुबुधयोराकाशपृथ्वीमयत्वात् आश्रयतुल्यत्वमवगन्तव्यम्।

तथा च कृष्णीये-

'शुष्का रविकुजसौरा भृगुचन्द्रमसौ जलात्मकौ ज्ञेयौ।

आश्रयगौ गुरुसौम्यौ सबलावित्युक्तमाचार्यैः'।। इति।।

अनेन भूतकथनेन एवं ग्रहाणां सजलविजलात्मकत्वमवगन्तव्यम्। राशीनाञ्च रविकुजमन्दाः अग्निवायुमयत्वादतोयाः; शुक्रचन्द्रावाप्यत्वात् जलमयौ; गुरुबुधौ क्षित्याकाशमयत्वात् आश्रयतुल्यौ। एवं राशीनाञ्च।

तथा च ग्रन्थान्तरे -

'मीनकर्किमृगान्त्यार्धवृषजूकालियोषितः।

कुम्भश्च तोयभानि स्युर्ग्रहेषु शशिभार्गवौ।।

तोयात्मकौ ज्ञजीवौ तु सतोयौ तोयराशिगौ।

वितोयावन्यराशिस्थौ शुष्काः शन्यर्कभूमिजाः'।। इति।।

भूमिषु जलप्रश्ने वर्षप्रश्ने चास्य विनियोगः।

पुनरप्युपदेशो प्रदर्श्यते। यत्र रविकुजौ दुःस्थौ तत्राग्नेयाः पैत्तिकरोगाः। यत्र चन्द्रशुक्रौ दुःस्थौ तत्र जलप्रधानरोगाः; यत्र बुधो दुःस्थः तत्र त्रिदोषप्रधानाः। यत्र शनिः दुःस्थः तत्र वातप्रधानाः। यत्र गुरुः दुःस्थः तत्राकाशप्रधानबधिरत्वादयो रोगा भवन्ति। एवं भूतवशात् बहुधा फलञ्चिन्त्यते। उदयादारभ्य पादोनचतुर्घटिकाकालं पृथिव्यादीनि पञ्चभूतानि क्रमोत्क्रमाभ्यामुद्यन्ति।

तथा चोक्तम् -

'पदाभ्यधिकमथैकं त्रिपादमर्धं च पादं च।

भूम्यादीनामुदये घटीमानं विदुरिह क्रमोत्क्रमशः'।। इति।।

शरीरभूतोदयोऽपि निरूप्यते। तथा च भगवत्पादाचार्याः -

'पुटयोरुभयोश्च दण्डसंस्था पृथिवी तोयमधः कृशानुरूर्ध्वम्।

पवनस्त्वथ पार्श्वगोऽतिमध्ये गगनं भूतगतिस्तनूद्भवेयम्'।।

'न मृतिर्न रोगशान्तिर्धरणेरुदये जलोदये तु पुनः।

ईप्सितमचिरात् सिद्ध्यति वह्नेरुदये मृतिर्विरोधश्च।।

वायोरुदये सर्वं सिद्ध्यति गमनागमादिचलकार्यम्।



व्याध्यारम्भो नाशो द्रव्याणामाहवश्चात्र।।

आकाशोदयकाले सिद्ध्यत्यशुभं विशेषेण'। इति अलमतिप्रसङ्गेन।

**विप्रादितः शुक्रगुरू कुजार्कौ शशी बुधश्चेत्यसितोऽन्त्यजानाम्।**
**चन्द्रार्कजीवा ज्ञसितौ कुजार्की यथाक्रमं सत्त्वरजस्तमांसि।। ७।।**

'विप्रादितः' इति। विप्रादितश्शुक्रगुर्वादयो वर्णाधिपाः। शुक्रगुरू विप्राधिपौ, कुजार्कौ क्षत्रियाधिपौ, शशी वैश्याधिपः, बुधश्शूद्राधिपः, शनिरन्त्यजानामधिपः इति।

तथा चोक्तम् -

'विप्राह्वयौ गुरुसितौ नृपती कुजार्कौ।

वैश्यः शशी शशिसुतो वृषलोर्कजोऽन्त्यः'।। इति।।

शशीबुधश्च वैश्याधिपौ, शनिश्शूद्राधिपतिरिति केचित्।

तथा च कृष्णीये -

'विप्रौ भृगुदेवगुरू क्षत्रियभावौ दिवाकरोर्वीजौ।

वैश्यौ बुधचन्द्रमसौ शनैश्चरः शूद्रसङ्करकृत्'।। इति।।

पक्षद्वयानुसारेण 'शशी बुधश्चे'त्यसमासनिर्देशः

'शुक्रगुरू' इत्यत्र शुक्रो मध्यमब्राह्मणः गुरुरुत्तमब्राह्मणः राशिग्रहसम्बन्धवशात् विशेषः। कुजार्कावित्यत्रायं न्यायो द्रष्टव्यः। कुजो माण्डलिकः, रविस्सार्वभौमः। सामाद्युपायचतुष्टयाधिपत्यं अनेन सूचितम्। शुक्रगुर्वोः विप्रत्वात् सामाधिपत्यमूह्यम्। कुजार्कयोः क्षत्रियत्वात् दण्डाधिपत्यमवगन्तव्यं; शशिनो वैश्यत्वात् दानाधिपत्यं ज्ञेयं; बुधशन्योरन्त्यवर्णाधिपत्यात् भेदाधिपत्यं वेद्यम्।

तथा च सङ्ग्रामविजये -

साम्नो भृग्वङ्गिरसौ दण्डाधीशौ दिवाकरोर्वीजौ।

दानाधिपः शशाङ्को भेदस्य बुधार्कपुत्रौ च।।

अथ ग्रहाणां द्विपदचतुष्पदपक्षिसरीसृपत्वमप्यनेन सूचितम्। विप्रशब्देन द्विपात्प्रवरो हि ब्राह्मणः। द्विपदादितः इति यावत्। शुक्रगरू द्विपदौ। कुजार्कौ चतुष्पदौ। शशी सरीसृपः बुधासितौ पक्षिणौ इति।

तथा च कृष्णीये -

'सूर्यात्मजेन्दुपुत्रौ पक्षिसमानौ सरीसृपश्चन्द्रः।

द्विपदौ भृगुदेवगुरू चतुष्पदौ भूमिपुत्रार्कौ'।। इति।।

जातिनिर्णये अस्य विनियोगः। 'चन्द्रार्कजीवाः' इत्यादि ग्रहाणां त्रिगुणात्मकत्वमनेन विधीयते। यस्मिन् ग्रहे बलवति पुरुषो जातः तद्गुणस्वभावोऽसौ भवति। त्रिविधा हि पुरुषा भवन्ति सात्विकाः राजसिकास्तामसिकाश्च। तत्स्वभावो हि संहितायामुक्तं च। तद्वाक्यम् -

'यस्सात्विकः तस्य भवेत् स्थिरत्वं सत्यार्जवे ब्राह्मणदेवभक्तिः।

रजोऽधिकः काव्यकलाक्रतुस्त्रीसंसक्तचित्तः पुरुषोतिशूरः।।

तमोऽधिको वञ्चयिता परेषां हिंस्रोऽलसः क्रोधपरोऽतिनिद्रः।

मिश्रैर्गुणैर्मिश्रगुणस्वभावा भवन्ति सर्वेऽपि शरीरभाजः'।। इति।।

लग्ने ग्रहदृष्टियोगाभ्यां जन्मलग्नाधिपाभ्यां वा बलवद्ग्रहवशात् त्रिगुणाधिपत्यञ्चिन्त्यम्। अथवा यस्य त्रिंशांशे रविः तद्गुणप्रधानः पुरुषो भवति। तथा च स्वल्पजातके-

'सत्त्वं रजस्तमो वा त्रिंशांशे यस्य भास्करस्तादृक्।

बलिनः सदृशीमूर्तिः बुध्वा वा जातिकुलदेशान्'।। इति।।

देवताविशेषचिन्तायां तु गुणदृष्टियोगवशात् अनुकूलस्थाने ग्रहाणां स्थितिवशात् विशेषा ऊह्याः। पुंस्त्रीराशिग्रहवशात् देवताः पुंस्त्रीविभागाः कल्प्याः। तत्र चन्द्रस्सात्विकप्रकृतिः रविः सात्विकः शिवः गुरुस्सात्विकः विष्णुरित्यादि। जातकेषु ग्रहवशात् त्रिगुणाधिपत्यं विज्ञाय पुरुषस्य शुभाशुभफलं चिन्त्यम्।

**मधुपिङ्गलदृक् चतुरश्रतनुः पित्तप्रकृतिः सवितात्पकचः।**
**तनुवृत्ततनुर्बहुवातकफः प्राज्ञश्च शशी मृदुवाक् शुभदृक्।।८।।**

अथ ग्रहस्वभावाः उच्यन्ते मधुपिङ्गलेति। मधुवत् पिङ्गला दृक् यस्य सः। चतुरश्रतनुः चतुष्कोण इत्यर्थः। पुनर्भावफलाध्याये 'शूरस्तब्धः' इति वक्ष्यति तदत्र योज्यम्।



'शूरस्तब्धः' प्रधानः इत्यर्थः गम्भीरश्च। पित्तप्रकृति इत्यनेन देहचपलत्वञ्च सूच्यते। आकृतिगुणधातुवर्णस्वभावान् समुच्चित्यैकेन श्लोकेन सारावल्यामुक्तम्। तथा च तद्वाक्यम् -

'अल्पाकुञ्चितमूर्धजः पटुमतिः सत्त्वस्वरुपश्चलो

नात्युच्चो मधुपिङ्गचारुनयनः शूरः प्रचण्डोऽस्थिरः।

रक्तः श्यामतनुर्निगूढचरणः पित्तास्थिसारो महान्

गम्भीरश्चतुरस्रकः पृथुकरः कौसुम्भवासा रविः'।। इति।।

व्याधिप्रश्नोपयोगार्थं अन्यार्थो ध्वन्यते। 'मधुपिङ्गल' इति नयनविकलः; 'अल्पकचः' नष्टकचः; ज्वलनप्रकृतिः पित्तप्रकृतिः पित्तप्रधानाः दाहोष्णज्वरादयः। चतुरश्रकथनेन भोजननष्टादिषु पात्रद्रव्याकृतिज्ञानं प्रयोजनम्। 'तनुवृत्ततनुः' इति तनुः लघुः, वृत्तं वर्तुलं, प्राज्ञः त्रिकालवित् मृदुवाक् मधुरवचाः शुभदृक् सुनयनः। तथा च सारावल्याम् -

'सौम्यः कान्तविलोचनो मधुरवाग् गौरः कृशाङ्गो युवा

प्रांशुः सूक्ष्मविकुञ्चितासितकचः प्राज्ञो मृदुः सात्विकः।।

चारुर्वातकफात्मकः प्रियसुखो रक्तैकसारो घृणी

वृद्धस्त्रीषु रतश्चलोऽतिसुभगः चित्राम्बरश्चन्द्रमाः'।। इति।।

**क्रूरदृक् तरुणमूर्तिरुदारः पैत्तिकः सुचपलः कृशमध्यः।**
**श्लिष्टवाक् सततहास्यरुचिर्ज्ञः पित्तमारुतकफप्रकृतिश्च।। ९ ।।**

'क्रूरदृक्' इति। 'क्रूरदृक्' अशुभदृष्टिः। तरुणमूर्तिः युवा, उदारो दाता, पैत्तिकः पित्तप्रकृतिः, सुचपलः अस्थिरः, कृशमध्यः दुर्बलकटिः। क्रूरं पश्यतीति क्रूरदृक्। तरुणमूर्तिः बालाकारः इति केचित्। अथवा क्रूरदृगिति। क्रूरा दृगस्येति कुजदृष्टेरशुभत्वं सूचितम्। अथवा लोचनस्य रक्तत्वात् 'क्रूरदृक्'। 'तरुणमूर्तिर्दृढवपुः' 'पैत्तिकः' इत्यङ्गानुदीप्तिः सूचिता। 'उदार' शब्देन पटुतरत्वं सूचितम्। 'चपल' अविमृश्यभाषी अनिष्पन्नवागित्यर्थः। 'तरुण' शब्देन कुञ्चितकेशत्वम्। अथवा 'क्रूरदृगि'ति चण्डः विघातकुशलः साहसिक इत्यादि।

तथा च सारावल्याम् -

'ह्रस्वः पिङ्गललोचनो दृढवपुर्दीप्ताग्निकान्तिश्चलो
मज्जावानरुणाम्बरः पटुतरश्शूरस्त्वनिष्पन्नवाक्।
हिंस्रः कुञ्चितकेशदीप्ततरुणः पित्तात्मकस्तामसः
चण्डः साहसिको विघातकुशलः संरक्तगौरः कुजः'।। इति।।

'श्लिष्टवागि'ति श्लिष्टवाग्यस्येति प्रियवाक् इत्यर्थः। अथवा श्लिष्टा युक्तियुक्ता वाग्यस्येति अथवा श्लिष्टा यथास्थानप्राप्ताक्षरा वाग्यस्येति। 'सततहास्यरुचिः' सततं सर्वदा हास्ये हसने रुचिरस्येति हसनशील इत्यर्थः। हृष्टात्मा वा। अथवा हास्यरसे रुचिश्शोभा यस्येति सर्वेषामनुकरणेन हास्यरसजनक इत्यर्थः। 'पित्तमारुतकफप्रकृतिश्च' 'च' शब्देन मध्यमरूप इत्यपि सूचितम्। एवं बुधस्वरूपम्।

तथा च सारावल्याम् -

'रक्तान्तायतलोचनो मधुरवाग् दूर्वादलश्यामलः
त्वक्सारोऽतिरजोऽधिकः स्फुटवचाः स्फीतस्त्रिदोषात्मकः।
हृष्टो मध्यमरूपवान् सुनिपुणो वृत्तस्सिराभिस्ततः
सर्वस्यानुकरोति वेषवचनैः पालाशवासा बुधः'।। इति।।

**बृहत्तनुः पिङ्गलमूर्धजेक्षणो बृहस्पतिः श्रेष्ठमतिः कफात्मकः।**
**भृगुस्सुखी कान्तवपुः सुलोचनः कफानिलात्मासितवक्रमूर्धजः।। १०।।**

'बृहत्तनुः' इति बृहस्पतिरुपमुच्यते। विशालकुक्षिः पीनोन्नतवक्षाः। 'पिङ्गलमूर्धजेक्षणः मधुनिभाक्षः पिङ्गलमूर्धजश्च। श्रेष्ठमतिः अतिधर्मबुद्धिः नयशास्त्रज्ञः क्षमावान् वेदशास्त्रज्ञश्च उक्तः। कफात्मक इति श्लेष्मप्रकृतिः दयापरश्च। एवं बृहस्पतिस्वरूपम्।

तथा च सारावल्याम् -

'ईषत् पिङ्गललोचनः श्रुतिपरः सिंहाब्दनादः स्थिरः
सत्त्वाढ्यः सुविशुद्धकाञ्चनवपुः पीनोन्नतोरस्थलः।



ह्रस्वो धर्मपरः सुनीतिनिपुणो बद्धोत्कटाक्षः क्षमी
व्यापीताम्बरभृत् कफात्मकतनुर्मेदप्रधानो गुरुः'।।

'भृगुस्सुखी'ति शुक्रस्वरुपमुच्यते। गीतेन सुरभिद्रवैरन्नपानैश्चाम्बरैः स्त्रीभिश्च मदनोपकरणैरन्यैश्च काव्यादिभिरिष्टजनैश्च 'सुखी' इत्युक्तम्। 'कान्तवपु'रिति ललितदेहः कान्तिमान् लीलावान् स्त्रीणां मनोहरश्चोक्तः। 'सुलोचनः' इति विशालनयन उक्तः। कफानिलात्मा इति कफप्रधानः वातप्रकृतिरुक्तः। असितवक्रमूर्धजः इति।

तथा चोक्तं सारावल्याम् -

'चारुर्दीर्घभुजः पृथूरुवदनः शुक्लाधिकः कान्तिमान्
कृष्णाकुञ्चितसूक्ष्मलम्बितकचो दूर्वाङ्कुरश्यामलः।
कामी वातकफाधिकोऽतिसुभगश्चित्राम्बरो राजसो
लीलावान् मतिमान् विशालनयनः स्थूलात्मदेहस्थितिः'।।इति।।

**मन्दोऽलसः कपिलदृक् कृशदीर्घगात्रः**
**स्थूलद्विजः परुषरोमकचोऽनिलात्मा।**
**स्नाय्वस्थ्यसृक्त्वगथ शुक्लवसे च मज्जा**
**मन्दार्कचन्द्रबुधशुक्रसुरेड्यभौमाः।। ११।।**

'मन्दोऽलसः' इति मन्दस्वरुपमुच्यते। एवं गुणो मन्दः 'अलसः मन्दोत्साहः। 'अलस' इति परिभ्रमणशीलः। क्रोधपरश्चोक्तः। 'मन्दः' इति पिशुनः चपलः अज्ञः रौद्रश्च उक्तः। 'कपिलदृक्' कपिलः निम्नलोचनः अथवा कपिलदृगिति कपिला कलुषेति अप्रसन्ना दृक्यस्येति। 'कृशदीर्घगात्र' इति कृशं दीर्घं सिरालं रौद्रं गात्रमस्येति, स्थूलद्विजः इति। 'स्थूलाः द्विजाः' नखदन्तादयो यस्यासौ स्थूलद्विजः उक्तः। 'परुषरोमकच' इति परुषा रूक्षाश्च पिङ्गला रोमकचा यस्यासावुक्तः। 'रोमकचः' इत्यत्र किमर्थं रोमशब्दः कचशब्दश्च सहप्रयुक्ताविति चेदुच्यते। कण्ठस्याधोभागे परुषाणि रोमाणि बहूनि सन्तीति ज्ञापनार्थम्। एवं मन्दस्वरुपम्।

तथा च सारावल्याम् -

'पिङ्गो निम्नविलोचनः कृशतनुर्दीर्घः सिरालोलसः
कृष्णाङ्गः पवनात्मकोऽतिपिशनः स्नाय्वात्मको निर्घृणः।
मूर्खः स्थूलनखद्विजोऽतिमलिनो रूक्षोऽशुचिस्तामसो
रौद्रः क्रोधपरो जरापरिणतः कृष्णाम्बरो भास्करिः।। इति।।

अत्र 'अल्पाकुञ्चितमूर्धज' इत्यादि श्लोकाः इह स्वरूपप्रदर्शकाः सारावलीगताः ये मया लिखिताः तेषूक्तग्रहवर्णगुणधातुवस्त्राणि आचार्येणाप्युपदिष्टानि। 'रक्तश्याम' इत्यादिना वर्णाः। 'चन्द्रार्कजीव' इत्यादिना गुणाः। 'स्नाय्वस्थी' त्यादिना धातुः। 'वर्णास्ताम्र' इत्यादिना वस्त्रवर्णविशेषाश्च कथिताः। अनेन ग्रहस्वरूपकथनेन प्रयोजनं प्रश्नजातकादौ देहस्वभावकथनम्।

तथा च कृष्णीये -

'एते ग्रहा बलिष्ठाश्चिन्ताकाले स्वमूर्तिसमान्।
कुर्युर्देहान्नियतं बहवस्तु समागता मिश्रम्'।। इति।।

'स्नाय्वस्थी'ति ग्रहाणां धातवः। बलवद्ग्रहधातुसारो जातः। रोगप्रश्ने तु दुःस्थग्रहधातुगतो रोगो भवति। अथवा रोगप्रदग्रहनवांशाधिपतिधातुगतो रोगो भवति।

**देवाम्ब्वग्निविहारकोशशयनक्षित्युत्कराः स्युः क्रमा-**
**द्वस्त्रं स्थूलमभुक्तमग्निकहतं मध्यं दृढं पाटितम्।**
**ताम्रं स्यान्मणिहेमशुक्तिरजतान्यर्कात्तु मुक्तायसी**
**द्रेक्काणैः शिशिरादयः शशुरुचज्ञग्वादिषूद्यत्सु वा।। १२।।**

'देवाम्ब्वग्नी'ति अर्कादारभ्य ग्रहाणां स्थानानि। 'देव' शब्देन देवगृहं राजगृहं च सूच्यते। क्षित्युत्करः पांसूत्करः उपस्करो वोक्तः। यत्र सर्पादीनां नष्टादीनां वा स्थानजिज्ञासा तत्र ग्रहवशात् स्थानकथनेऽयं विधिः। 'देवाम्ब्वा'देस्समीपं वा गृहं वा स्वरूपं वा यथायोग्यं ऊह्यम्। 'वस्त्रं स्थूलं' इत्यादि। 'स्थूलं' परुषं 'अभुक्तं' अननुभूतं नवम्। 'अग्निकहतं' दग्धं छिन्नं वा अरक्षितत्वात् 'कहतं' मलिनं छिन्नं वा।



तथा च कृष्णीये -

'मलिनच्छिन्नदृढादग्धस्थूलाम्बुधौतजीर्णानि।
सौम्येन्दुगुरुभुजङ्गमकुजरविभृगुसूर्यजानां स्युः'।। इति।।

'स्थूल'शब्देन चर्म च सूचितम्। 'अभुक्त'शब्देनाक्षाल्या दुकूलपट्टादयो गृह्यन्ते। 'अग्निकहतं' अग्निहतं 'हन हिंसागत्योः' इति गत्यर्थस्य निष्क्रान्तरूपं हतमित्युच्यते। काष्ठादग्निर्जायते कारणकार्याभेदोपचारात् वृक्षत्वगित्यर्थः। 'कहतं' जलवन्मृदुप्रवालं जलसम्बन्धे हिंसितमिति वा। 'मध्यं' कौशेयम्। 'दृढं' प्रसिद्धं कार्पासकृताम्बरम्। 'पाटितं' वल्कलमित्यर्थान्तरमपि सूचितम्।

तथा च कृष्णीये -

'वल्कलमार्किकुजाभ्यां गुरुणा कौशेयमिन्दुजे वालम्।
शशिना दुकूलपट्टं रविणा चर्माम्बरं भृगुणा'।। इति।।

'ताम्रं स्यात्' इत्यादि 'ताम्र'शब्देन पाषाणाद्यञ्च गृह्यते। अन्यानि द्रव्याणि च। रवेस्तावत् सूर्यकान्तमार्यकूटं वैडूर्यञ्च गृह्यते। चन्द्रस्य जलस्वरूपत्वात् मुक्ताशङ्खस्फटिक कांस्यत्रपूणि। ताम्रेष्टकादि भौमस्य। मुक्तकादि बुधस्य। रक्तमणिकनककाचादि बलवतो बृहस्पतेः। स्फटिकरजतमुक्तकादि शुक्रस्य। अञ्जनलोहेन्द्रनीलादि शनेः इत्यादि। सामान्यबलस्थस्य बृहस्पतेः रजतं शास्त्रान्तरादवगन्तव्यम्।

आग्नेयग्रहयोः सूर्यभौमयोः वर्गं भौमो वीक्षते चेत् धाम्यो धातुः। जलस्वरूप-चन्द्रशुक्रयोः वर्गं चन्द्रशुक्रौ वीक्षेते चेदधाम्यो धातुरित्याद्यनुक्तं पञ्चभूतग्रहयोरभेदत्वादूह्यम्। 'छायां महाभूतकृताञ्च सर्वेऽभिव्यञ्जयन्ति स्वदशामवाप्य' इत्युक्तत्वात् 'वर्णास्ताम्रे'त्यादि धातूनां वर्णाश्च चिन्त्याः। 'द्रेक्काणैः शिशिरादय' इति शनिशुक्ररुधिरचन्द्रज्ञगुरुभि-र्नामाद्यक्षरोक्तैः एभिः शिशिरादिषडर्तवो ज्ञेयाः। तेषां द्रेक्काणैर्वा तेषां उदयाद्वा इत्यर्थः।

'एषामृतुषु ग्रहानुगणैः अभ्यूह्याः। शीतं हिमाधिक्यात् तदृतौ मन्दस्य दुःखकारकत्वेन दुःखकालः, शुक्रस्य मदनरूपत्वात् तदृतौ मदनोदयः, रुधिरस्याग्नेयत्वात् तदृतौ तैक्ष्ण्यं, चन्द्रस्य जलमयत्वात् तदृतौ वर्षागमः, ज्ञस्य वैमल्यात् तदृतौ वैमल्यं, गुरोः ज्ञानस्वरूपत्वात् तदृतौ बुद्धेस्सात्विकत्वं इत्यादि। यो ग्रहो व्याधिप्रश्ने दुःस्थः तदृतौ तद्रोगविकारः इति।

**त्रिदशत्रिकोणचतुरश्रसप्तमा-**
**न्यवलोकयन्ति चरणाभिवृद्धितः।**
**रविजामरेड्यरुधिराः परे च ये**
**क्रमशो भवन्ति किल वीक्षणेऽधिकाः।। १३।।**

'त्रिदशत्रिकोणचतुरश्र' इति। चरणाभिवृद्धितः अवलोकयन्तीत्यत्र परे च ये ग्रहाः इति सिद्धं भवति। तत्रायं विशेषः। रविजामरेड्यरुधिराः ये परे च वीक्षणेऽधिकाः। त्रिदशयोः; त्रिकोणयोः; चतुरश्रयोः; सप्तमे च वीक्षणे अधिकफलप्रदाः भवन्तीति समग्रफलदाः इत्यर्थः। अत्र न केवलं सप्तमदृष्टेर्विनियोगः ; अन्यानां पादार्धपादोनदृष्टीनामपि जन्मकाले निरुपणीयत्वमस्त्येव।

तथा च सारावल्याम् -

'वृषे शशी लग्नगतस्सुपूर्णः सितेन दृष्टे वणिजस्थितेन।
बुधोऽपि पातालगतो यदि स्यात् तदन्यजातो भवति क्षितीशः'।।

अस्य योगस्य वृषस्थस्य शशिनः सुपूर्णत्वे सूर्यस्य वृश्चिकस्थितिरेव सङ्गच्छते। ततो बुधस्य सिंहस्थितिर्न घटत इत्यसम्भावित्वं विद्यते इति चेदस्तु। पूर्वशास्त्रानुसारेण कृतोऽयं योगः। दृष्टिप्रामाण्याय पुनरपि योगान्तरमस्ति।

तथा हि तत्रैव सारावल्याम् -

'एकः स्वोच्चे शुभगगनगः संस्थितो निर्मलांशुः
केन्द्रे भानुः प्रकटितबलः केवलः पूर्णवीर्यः।
दृष्टः कुर्यादमरगुरुणा पञ्चमस्थेन जातं
भूमेर्नाथं बहुगजयुतं सर्ववन्द्यं कृतार्थम्'।।इति।।

'किल' शब्देन ग्रहदृष्टेः निश्चितत्वं सूचितम्। सर्वप्रश्नजातकनिरूपणे अवश्यं विचार्यत्वं सूचितम्। 'लग्नात् पुत्रकलत्रभे शुभपतिप्राप्तेऽथवालोकिते चन्द्राद्वा यदि सम्पदस्ति हि तयोः ज्ञेयोऽन्यथासम्भवः' इति। अत्र दृष्ट्यानयनं कर्तव्यम्। 'दृष्ट्या समानं प्रवदेच्च सङ्ख्याम्' इति। अत्रादौ दृष्टिसङ्ख्या ज्ञातव्या-



'चतुरेकविंशषोडशनवसङ्ख्याः पञ्चसप्तदशकिरणाः।
मन्दगति चन्द्रभार्गवशशिसुतरविभौमजीवानाम्'।। इति।।

ग्रहाणां स्थितिभेदात् रश्मिविधौ पक्षान्तरमस्ति। 'विंशतिरष्टादशदशदशमनुषोडशैकादशकिरणास्स्युः सूर्यादीनां ज्ञेया' इति।

'त्रिदशत्रिकोणचतुरश्रसप्तमानि'त्यादि ग्रन्थेनाचार्येण ग्रहदृष्टेरानयनं सूचितम्। तदत्र वक्ष्यामः - त्रिदशत्रिकोणचतुरश्रसप्तमान् सर्वे ग्रहाश्चरणाभिवृद्धितः अवलोकयन्ति। ग्रहस्य स्वस्थानात् तृतीयभावारम्भे पाददृष्टिः। तस्माद्वृद्धिं प्राप्य तृतीयचतुर्थभावसन्धौ पादोनदृष्टिः पूरिता भवति। पुनर्ह्रासं प्राप्य चतुर्थपञ्चमसन्धौ अर्धदृष्टिर्जायते। सा च ह्रासं प्राप्य पञ्चमषड्भावसन्धौ शून्या भवति। षष्ठादेरारभ्य षष्ठसप्तमभावसन्धौ पूर्णा भवति। पुनः सप्तमादारभ्य ह्रासेन सप्तमाष्टमसन्धौ पादोना जायते। तस्मादपि ह्रासेन नवमादावर्धदृष्टिर्जायते। तस्मादपि नवमदशमादौ पाददृष्टिर्जायते। श्लोकपूर्वार्धस्यैवायमभिप्रायः।

अपरार्धस्य तु 'रविजामरेड्यरुधिराः परे च क्रमशो वीक्षणेऽधिकाः भवन्ति'। तृतीयदशमयोः रविजोऽधिकः, त्रिकोणयोः गुरुरधिकः, चतुरश्रयोः रुधिरोऽधिक इति। अस्यैवमभिप्रायः। तृतीयदशमयोः रविजस्य दृष्टिरधिका। तृतीये तु भावादौ पूर्णदृष्टिः भावान्ते ह्रासेन पादोना जायते। दशमे तु भावादौ षष्टिः तदन्ते शून्या। गुरोस्तु पञ्चमादौ पूर्णदृष्टिरन्त्ये शून्या। नवमे तु भावादौ पूर्णा। भावान्ते ह्रासवशात् पाददृष्टिर्भवति। रुधिरस्य चतुर्थे भावादौ पूर्णदृष्टिः। पुनः ह्रासवशात् भावान्तेऽर्धदृष्टिः। अष्टमे तु भावादौ पूर्णदृष्टिर्भूत्वा चतुर्थदृष्टिवशात् अष्टमान्ते अर्धदृष्टिर्भवति। उपरितनभावदृष्ट्यनुगुणेन दृष्टेर्वृद्धिह्रासौ कल्प्याविति। अत्र द्वादशैकादशलग्नेषु वराहमिहिराचार्येण ग्रहदृष्टिर्नोक्ता। एष्वप्यस्तीति केचिद्वदन्ति।

तथा च यवनाचार्याः -

'पादार्धञ्च तदर्धञ्च पूर्णमाये व्यये तनौ' इति।

अत्र लग्ने ग्रहस्थितिभावसमांशके पूर्णदृष्टिः व्यये षोडशांशदृष्टिः, एकादशेऽष्टमांशदृष्टिः व्ययायलग्नेषु ग्रहदृष्टिः श्रीपतिनापि नाङ्गीकृता 'दिग्भ्योऽधिकं पश्यति नो ग्रहेन्द्र' इत्युक्तत्वात्।

तथा दृष्ट्यानयनप्रक्रियां पराशरमुनिराह -

'दृश्याद्विशोध्य द्रष्टारं षड्राशिभ्योऽधिको भवेत्।
दिग्भ्यो विशोध्य द्वाभ्यां तु भागीकृत्य च दृष्टयः।।
शराधिके विना राशिं भागा द्विघ्नाश्च दृष्टयः।
वेदाधिके त्यजेद् भूताद् भागा दृष्टिस्त्रिभाधिके।।
विशोध्य युगतो द्वाभ्यां लब्धं त्रिंशद्युतं भवेत्।
कराधिके विना राशिं भागाश्च तिथिसंयुताः।।
एकाधिके विना राशिं भागा द्वाभ्यां विभाजिताः'।
'त्रिदशे च त्रिकोणे च चतुरश्रे क्रमादथ।
शरवेदाः खरामाश्च तिथयो योजिताः क्रमात्।।
शनिदेवेड्यभूजानामादौ दृष्टिस्स्फुटा भवेत्'।

अतोऽपि स्पष्टतरं श्रीधरपद्धत्यामुक्तो दृष्ट्यानयनप्रकारमत्रोच्यते -

'दृश्याद्विशोध्य द्रष्टारं ग्रहाद् भावादथापि वा।
रुपात्त्यक्त्वा करघ्नास्स्युर्भागरुपाधिके सति।।
विना राशिं कराप्तां द्वौ राशी चेत्तिथिसङ्ख्यकाः।
कराधिके विना राशिं भागस्स्थितियुताः क्रमात्।।
विनार्किमार्केः षष्टिस्सा करसङ्ख्याधिके करौ।
हित्वा विभक्तिहीना सा षष्टिर्दृष्टिर्भवेदथ।।
त्रिराशयश्चेत् तद्भागाः भक्त्वा द्वाभ्यां च दृष्टयः।
राशित्रयोधिको राशीन् भागीकृत्य दलीकृता।।
भागार्धं वर्जयेद् भौमं विना तस्याधिके सति।
दृष्टिस्तमधिकेंशाश्च वर्जयेत् षष्टितो भवेत्।।
वेदसङ्ख्ये गुरोः षष्टिरन्येषां त्रिंशदेव च।
वेदाधिक्ये त्यजेद् भूतादन्येषामंशको गुरोः।।
द्विघ्नाश्च राशेर्नास्त्येव दृष्टिः पञ्चाधिके तथा।
राशिं विनांशाद्विघ्नास्स्युः षट्के षष्टिदृशः स्मृतः।।



दिग्भ्यस्तदधिके शोध्याद्द्वाभ्यां लब्धाश्च दृष्टयः।
भौमस्य सप्त चेत् षष्टिरधिके भागवर्जिताः।।
अष्टौ यदि गुरोः षष्टिरधिकोंशास्त्रिसङ्गुणाः।
द्वाभ्यां लब्धोनिता षष्टिः शनेः षष्टि च खे स्मृताः।।
अधिकांशाः करघ्नास्स्युः शोध्या दृष्टिश्च षष्टितः।
राशयो दशके च स्याच्चक्रात्तधिके सति।।
विशोध्योर्वी विभक्ताश्च भागानेव च दृष्टयः।
एकादशाधिके चक्राद्विशोध्याष्टविभाजिता'।।इति।।

तत्र त्रिदशादिस्थानेषु ग्रहाणां या दृष्टिरुक्ता सा मुहूर्तादौ न गृह्यते। तत्र सप्तमदृष्टिरेव गृह्यते। अत्रानीतया ग्रहदृष्ट्या नष्टादिद्रव्यसङ्ख्यानिर्णयः क्रियते। ग्रहदृष्टिसमान रश्मिसङ्ख्यातुल्या द्रव्यसङ्ख्येति रश्मिसङ्ख्या शास्त्रान्तरादवगन्तव्या।

तथा च कृष्णीये पद्यं पूर्वमुक्तम्।

'चतुरेकविंशषोडशनवसङ्ख्यापञ्चसप्तदशकिरणाः।
मन्दगतिचन्द्रभार्गवशशिसुतरविभौमजीवानाम्'।। इति।।

'लग्नात् पुत्रकलत्रभे शुभपतिप्राप्तेऽथवालोकिते चन्द्राद्वा यदि सम्पदस्ति हि तयोर्ज्ञेयोऽन्यथा ऽसम्भवः' इत्यत्र दृष्ट्यानयनं कर्तव्यम्। 'दृष्ट्या समानं प्रवदेच्च सङ्ख्या'मित्यत्रापि दृष्टिसङ्ख्या ज्ञातव्या। अत्रोक्तानां रश्मीनां ग्रहाणाञ्चारवशात् अधिककिरणास्स्युः ऊनाधिकत्वमस्ति मित्रगृहे पादसङ्ख्या; स्वगृहे पादोनसङ्ख्या; उच्चे सम्पूर्णसङ्ख्या; त्रिकोणेर्धसङ्ख्या; रश्मयः नीचराशौः विफलाः शत्रुक्षेत्रेऽल्पफलाः ग्रहनिहताः। ग्रहतिरस्कृताः ग्रहापसव्यगताश्चाफलाः

तथा च कृष्णीये -

'मित्रस्वर्क्षोच्चस्त्रिकोणसहिता ग्रहाः फलं दद्युः।
पादं पादेनोनं सम्पूर्णफलन्तथार्धं च।।
नीचर्क्षगता विफलाः रिपुभवनगता भवन्ति चाल्पफलाः।
निहता ग्रहेण हीनांशवोपसव्येन संयुक्ताः'।। इति।।

ग्रहदर्शने बलवतामार्न[illegible]रश्मिरनुक्रमेण दृष्टिवशात् चतुर्भिर्विभज्य वा त्रिभिर्हत्वा

चतुर्भिर्विभज्य वा द्वाभ्यां विभज्य वैकेन विभज्य वा पाददृष्टौ पादोनदृष्टौ अर्धदृष्टौ समस्तदृ
च क्रमेण फलं लब्धं ग्राह्यम्। तन्नष्टद्रव्यादिसङ्ख्यामानमिति उत्तरत्र वक्ष्यति च।

'उच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः।
शुभं सम्पूर्णपादोनदलपादाल्पनिष्फलम्'।। इति।।

अपि च अनेन श्लोकेन ग्रहाणां कक्ष्याक्रमं कालहोराधिपत्यक्रमञ्च सूचयति
सर्वेषामुपरि नक्षत्राणि, तदधश्शनैश्चरः, तदधो गुरुः, तदधो भौमः, तदधो रविः, तदध
शुक्रः, तदधो बुधः, तदधश्चन्द्रः। तदुक्तम् - 'रविजामरेड्यरुधिराः' ये परे च ते वीक्षण
दर्शने यथाक्रमं अधिका भवन्ति। आसन्नक्रमेण शनैश्चरादधिकवीक्ष्यो गुरुः; गुरोरधिक
वीक्ष्यो भौमः; ततोऽधिकवीक्ष्यो रविः ततोऽधिकवीक्ष्यो भृगुः; ततोऽधिकवीक्ष्योः बुधः
ततोऽधिकवीक्ष्यश्चन्द्रः।

तथाचार्यभटः -

'भानामधः शनैश्चरः सुरगुरुभौमार्काः शुक्रबुधचन्द्राः।
तेषामधश्च भूमिर्मेधीभूता खमध्यस्था'।।

कथमत्र 'परे च' इत्युक्तिवशात् अर्कशुक्रबुधचन्द्राणां क्रमो विज्ञायते। उच्यते
'रविजामरेड्यरुधिरा' इत्यत्र यो क्रमोभिप्रेतः स तत्र विज्ञेयः। रविजात् षष्ठोमरेड्यः
तस्मात् षष्ठो रुधिरः, तस्मात् षष्ठो रविः, ततः षष्ठो भृगुः, ततः षष्ठो बुधः, तत
षष्ठश्चन्द्रः, 'च' शब्देन वा चन्द्रोऽभिप्रेतः इति। कालहोराधिपत्यक्रमोप्ययमेव। अत्र
पूर्वार्धे 'चरणाभिवृद्धित'इत्यनेन कालहोराधिपत्यप्रमाणमूह्यम्। चरणः, अर्धं, पादोनरूपं
रूपम्। चरणमर्धेन सहितं पादोनरूपम्। तत् पादोनरूपसहितं सार्धं रूपम्। तद्रूपसहितं
सार्धं, रूपद्वितयम्। सार्धं घटिकाद्वयं प्रायः कालहोरेति सूचितं भवति।

**अयनक्षणवासरर्तवो मासोर्धं च समा च भास्करात्।**
**कटुकलवणतिक्तमिश्रिता मधुराम्लौ च कषाय इत्यपि।। १४।।**

अयनक्षणेत्यादि भास्करादारभ्य ग्रहाणामेकमेकं कालप्रमाणमुच्यते। अयनं षण्मासः,



क्षणो मुहूर्त इत्यादि। अस्य प्रयोजनं रिपुजयादिषु कालज्ञानम्। लग्नराशौ स्वभुक्तनवांशकपतेः ग्रहस्य यः काल उक्तः सः लग्नोदितांशेन गुणितैः कार्यावाप्तौ रिपुजयादिषु च कालप्रमाणम्। अन्ये अन्यथा कालं निर्णयन्ति। येन ग्रहेण फललब्धिरूह्यते, तस्य ग्रहस्य यः काल अयनादिकः स्वावस्थितराशौ स्वभुक्तनवांशकैर्गुणितैः प्रष्टुः फललब्धेः काल इति।

तथा च कृष्णीये -

'क्षणदिवसपक्षमासर्त्वयनाब्दानां नवांशकैर्वाच्यम्।
शशिभौमशुक्रगुरुबुधरविसौरैः क्रमाद्भुक्तैः'।। इति।।

अनेन श्लोकेन गर्भकालोऽपि सूचितः। अयनक्षणादि समुचितः कालो नाडिकाद्वितयं षोडश दिवसाः मासा नव एव गर्भकालः इति। 'कटुक' इत्यादि सूर्यादारभ्य ग्रहाणां' रसा जन्मकाले केन्द्रगतग्रहरसाभिरुचिः। भोजनप्रश्नादावुदयारूढवशाद्वा केन्द्रगतैः ग्रहैर्वा षष्ठस्थानेन वा षड्रसाश्चिन्त्याः। उदयारूढयोर्बलवति राशावोजे रूक्षमन्नं, युग्मे सौम्यं 'क्रूरस्सौम्य'इत्युक्तत्वात्। जलराशौ जलग्रहदृष्टियोगे वार्द्रम्।

तथा चोक्तम् -

'शुभोदये भवेन्मृष्टं भोजनं जीवनाश्रयम्।
शुभराश्युदये तद्वदार्द्रं युग्मजलर्क्षयोः।।
पापोदये क्रूरलग्ने रूक्षमत्युष्णकारकम्'। इति।

'भौमस्यारिविमर्द' इत्यादिश्लोके आविकाजाधिपत्यमुक्तं भौमस्य। तस्मात् भौमसम्बन्धे माहिषदध्यादि; चन्द्रसम्बन्धे 'इक्षुक्षीरविकारा'दि चिन्त्यमित्याद्यूह्यम्। 'निगदितमिह चिन्त्यं सूतिकालेऽपि युक्त्या' इत्युक्तत्वात् सर्वत्र देशजातिदशाकालाः निरूपणीयाः। चतुष्पाद्राशौ रौद्राः वाच्याः। 'अन्तस्सारान्' इत्यादिना उपदंशभेदाश्चिन्त्याः। 'ते चरागद्विदेहा' इत्युक्तविधिना आसन्नत्वचरादिकं चिन्त्यम्। 'जीर्णं संस्कृत'मित्यादिना गृहविशेषाश्चिन्त्याः। 'प्रागाद्या' इत्यादिना राशिप्लववशेन च भोक्तुः प्रागाद्याभिमुखत्वमुक्तम्। 'मधुराम्लौ' इति समासः द्वयोः गुरुशुक्रयोर्मधुराम्लसम्बन्धोऽभिप्रेतः।

**जीवो जीवबुधौ सितेन्दुतनयौ व्यर्का विभूजाः क्रमा-**
**द्वीन्द्वर्का विकुजेन्द्विनाश्च सुहृदः केषाञ्चिदेवं मतम्।**

**सत्योक्ते सुहृदस्त्रिकोणभवनात् स्वात् स्वान्त्यधीधर्मपाः**
**स्वोच्चायुस्सुखपाश्च लक्षणविधेर्नान्यैर्विरोधादिति।। १५।।**

'जीवो जीवबुधा'विति। 'केषाञ्चि'दिति यवनेश्वरादीनामित्यर्थः। सत्योक्त इति सत्यमतम्। प्रश्नादौ केचित् यवनमतेन नैसर्गिकबन्धुभावमङ्गीकृत्य सत्यमतेन तत्कालबन्धुभावं परिकल्पयन्ति। अस्मिन् पक्षे स्वान्त्यादिस्थानानामधिपतयो न गृह्यन्ते; तेषु स्थिताः गृह्यन्ते। एतदुक्तं भवति। यस्य ग्रहस्य यस्त्रिकोणराशिस्तस्य ग्रहस्य, तस्मात् त्रिकोणात् स्वान्त्यादिस्थानगताः तत्कालबन्धवो भवन्ति। अन्यस्थानगताः शत्रवो भवन्ति। तथा च कृष्णीये -

'मूलत्रिकोणभवनाच्चतुर्थपञ्चमधनव्ययाष्टमगाः।
स्वोच्चे धर्मे च गता ग्रहास्तु तात्कालिकाः सुहृदः'।। इति।।

जातकेषु सत्यमतेन नैसर्गिकबान्धवं परिकल्प्य 'अन्योन्यस्ये' ति वक्ष्यमाणविधिना तत्कालबान्धवं परिकल्पयन्त्येते। अन्ये तु यवनमतेन बन्धुशत्रुभावं 'मूलत्रिकोणभवना' दित्यादि विधिना तत्कालबान्धवञ्च परिकल्प्य प्रश्नजातकादिफलं निरूपयन्तीति।

**शत्रू मन्दसितौ समश्शशिसुतो मित्राणि शेषा रवे-**
**स्तीक्ष्णांशुर्हिमरश्मिजश्च सुहृदौ शेषास्समाश्शीतगोः।**
**जीवेन्दूष्णकराः कुजस्य सुहृदो ज्ञोऽरिस्सितार्की समौ**
**मित्रे सूर्यसितौ बुधस्य हिमगुश्शत्रुस्समाश्चापरे।। १६।।**

**सूरेः सौम्यसितावरी रविसुतो मध्यः परेत्वन्यथा**
**सौम्यार्की सुहृदौ समौ कुजगुरू शुक्रस्य शेषावरी।**
**शुक्रज्ञौ सुहृदौ समस्सुरगुरुः सौरस्य चान्येऽरयो**
**ये प्रोक्तास्सुहृदस्त्रिकोणभवनात्तेमी मया कीर्तिताः।। १७।।**

'शत्रूमन्दसितौ' इत्यादि श्लोकद्वयं स्पष्टार्थम्।



**अन्योन्यस्य धनव्ययायसहजव्यापारबन्धुस्थिता-**
**स्तत्काले सुहृदः स्वतुङ्गभवनेप्येकेऽरयस्त्वन्यथा।**
**द्व्येकानुक्तभपान् सुहृद्समरिपून् सञ्चिन्त्य नैसर्गिकां-**
**स्तत्कालेन पुनस्तु तानतिसुहृन्मित्रादिभिः कल्पयेत्।। १८।।**

'अन्योन्यस्ये'ति। अन्योन्यं धनव्ययादिगतास्तत्कालसुहृदः। धनव्ययादिव्यतिरिक्त-स्थानगतास्तत्कालशत्रवः। 'द्व्येकानुक्तभपान्' इत्यादि। अस्य श्लोकापरार्धस्यैवायमर्थः- 'सत्योक्ते सुहृदः' इत्यादिना 'द्व्येकानुक्तभपान् सुहृद्समरिपून्' नैसर्गिकान् सञ्चिन्त्य तत्कालेन जातैरतिसुहृन्मित्रादिभिरुपलक्षितांस्तानुपकल्पयेत्। अस्मिन् श्लोके किञ्चिदर्थान्तरमपि सूचितम्। लग्नेशाद्धनव्ययादिस्थानेषु यद् भावाधिपः स्थितस्तद्भावसमृद्धिः। पित्रादिकारकाः सूर्यादयो बलवन्तः शुभदृष्टाः लग्नेशादुक्तस्थानेषु गताश्चेत् पित्रादयः अतिसुहृदो भवन्ति। तत्तद्भावादपि धनव्ययादिस्थानगताः पित्रादिकारकाश्चेत् पित्रादयोऽतिसुहृदो भवन्ति।

**स्वोच्चसुहृत्स्वदृगाणनवांशैः स्थानबलं स्वगृहोपगतैश्च।**
**दिक्षु बुधाङ्गिरसौ रविभौमौ सूर्यसुतः सितशीतकरौ च।। १९।।**

अथ बलाबलं वक्ष्यति। 'स्वोच्चसुहृदि'ति चतुष्प्रकारं बलमुच्यते- दिग्बलं, स्थानबलं, चेष्टाबलं, कालबलञ्चेति। अस्य श्लोकस्य पूर्वार्धेन स्थानबलमपरार्धेन दिग्बलमुच्यते। स्वोच्चे, सुहृद्गृहे, स्वद्रेक्काणे, स्वनवांशे च स्थितो ग्रहः स्थानबलयुक्तो भवति। 'स्वगृहोपगतैश्च' स्थानबलं भवति इति। स्वगृहे च स्थितः स्थानबलयुक्तो भवतीत्यर्थः। अत्र चतुर्षु बलेषु स्थानबलस्य प्राधान्यं चन्द्रस्य पक्षबलस्य प्राधान्यम्।
तथा चोक्तम् -

'पक्षोद्भवं हिमकरस्य विशिष्टमाहुः
स्थानोद्भवं तु बलमभ्यधिकं परेषाम्।
तत्सम्प्रयुक्तमितरैरधिकाधिकं स्या-
दन्यानि तेन सदृशानि बहूनि चेत्स्युः'।। इति।।

'सुहृदरिपरकीयस्वर्क्षतुङ्गस्थितानां फलमनुपरिचिन्त्यं लग्नदेहादिभावैः'। इति वक्ष्यति। तेनापि स्थानबलप्राधान्यमूह्यम्।

चन्द्रस्य पक्षबलप्राधान्यन्तु - 'विपुलकरा' इति चेष्टाबलकथने, 'बहुलसितगतास्स्युः क्रूरसौम्याः क्रमेण' इति कालबलकथने च चन्द्रस्य पक्षबलस्यान्तर्भावात् न कथितम्। ननु तदन्तर्भावसामान्य एव। तस्मात् कथं प्राधान्यं व्यज्यते। उच्यते - 'शरुबुगुशुचसाद्याः वृद्धितो वीर्यवन्तः' इति। निसर्गबलकथने मण्डलवृद्धिरप्युक्ता। तेन चन्द्रस्य ताराग्रहेभ्यो मण्डलवृद्धिरस्तीति सिद्ध्यति। बहुलपक्षे तु मण्डलस्य क्षीयमाणत्वात् प्रत्यक्षतोऽपि बलहानेस्सिद्धत्वे कथमुपदेष्टव्यता इति नोक्तम्। 'स्वगृहोपगतै'श्चेत्यत्र स्त्रीराशौ युग्मराशौ स्त्रीग्रहौ चन्द्रशुक्रौ अन्ये ग्रहाः पुरुषराशावोजराशौ बलवन्त इत्युक्तं भवति। 'स्वगृहोपगतैश्च' इत्यत्र 'गत'शब्देन राशिगतिवशात् ग्रहाणां बलभेदोऽस्तीति ज्ञापितम्। आदिद्रेक्काणे स्त्रीग्रहस्य बलं; मध्यद्रेक्काणे नपुंसकग्रहस्य बलं; अन्त्यद्रेक्काणे पुरुषग्रहस्य बलम्। तथा च सारावल्याम् -

'स्त्रीपुन्नपुंसकाख्याः क्षेत्रेष्वाद्यन्तमध्यसम्प्राप्ताः'। इति।

अत्र 'स्वोच्चसुहृत्स्वदृगाणनवांशैः' इत्यत्र त्रिकोणगृहं कस्मान्नोक्तम्? स्वोच्चस्वगृहयोः त्रिकोणगृहस्यान्तर्भावात् 'उच्चत्रिकोणस्वसुहृदित्यत्र' त्रिकोणगृहं वक्ष्यति। उच्चादिराशिषु ग्रहबलस्य बलसाम्यन्न भवति। उच्चेऽतिबलम्। तस्मान्न्यूनं त्रिकोणे, तस्मान्न्यूनं स्वगृहे, तस्मान्न्यूनमतिसुहृद्गृहे, तस्मान्न्यूनं सुहृद्गृहे,तस्मान्न्यूनं समगृहे, तस्मान्न्यूनं अरिगृहे, तस्मान्न्यूनमतिरिपुगृहे, नीचराशौ शून्यं भवति। इति नवप्रकारं स्थानबलम्। तथा च श्रीपतिपद्धतौ बलवशात् शुभफलमुच्यते -

'स्वोच्चे रूपं चरणरहितं स्वत्रिकोणे स्वभेऽर्धं
नागांशानां त्रयमतिसुहृद्गेहगे मित्रभेऽङ्घ्रिः।
अंशोष्टानां समगृहगते भूपभागोऽरिगेहे
दन्तांशस्स्यादतिरिपुगृहे नीचभे शून्यमेव'।। इति।।

उच्चक्षेत्रयोरेकमेव त्रिकोणगृहं भवति। तस्मात् कथं त्रिकोणगृहे फलविशेषोऽवगम्यते। उच्यते। उच्चत्रिकोणयोर्विभागोऽस्ति - तथा चाचार्येण नोक्तम्। अन्यशास्त्रेऽप्युक्तम्।



तथा च सारावल्याम् -

'विंशतिरंशाः सिंहे त्रिकोणमपरे स्वभवनमर्कस्य।
उच्चं भागत्रितयं वृष इन्दोस्स्वत्रिकोणमपरेंशाः।।
द्वादशभागा मेषे त्रिकोणमपरे स्वभवनमारस्य।
उच्चबलं कन्यायां बुधस्य तुङ्गांशकैस्सदा चिन्त्यम्।
परतस्त्रिकोणजातं पञ्चभिरंशैस्स्वराशिजं परतः।।
दशभागा जीवस्य त्रिकोणमपरे स्वभं चापे।
शुक्रस्य तु विषयांशास्त्रिकोणमपरे स्वराशिजं जूके।
कुम्भे त्रिकोणनिजभे रविजस्य रवेर्यथा सिंहे'।। इति।।

किमेतदाचार्यस्याभिप्रेतम्। अभिप्रेतमेव। उत्तरत्र कारकाध्याये 'स्वर्क्षतुङ्ग-मूलत्रिकोणगा' इति वक्ष्यति। अन्यथा तत्र त्रिकोणशब्दो निरर्थकः स्यादिति। अत्रस्थानां ग्रहाणां फलभेदमपि संक्षेपतो वक्ष्यति।

'उच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः।
शुभं सम्पूर्णपादोनदलपादाल्पनिष्फलम्'।।

अथ दिग्बलमुच्यते। 'दिक्षु बुधाङ्गिरसौ' इति 'दिक्'शब्देन लग्नदशम-सप्तमचतुर्थराशयः उच्यन्ते। तेषु यथाक्रमं एकैकपदोक्ताः बुधाङ्गिरसावित्यादयो बलवन्तः। तथा च सारावल्याम् -

'लग्ने जीवबुधौ दिवाकरकुजौ व्योम्न्यस्तभे भास्करि-
र्बन्धाविन्दुसितौ दिशाकृतमिदं स्वोच्चे त्रिकोणे स्वभे।
मित्रस्वांशकसंस्थितः शुभखगैर्दृष्टो बलीयान् ग्रहः
स्त्रीक्षेत्रे शशिभार्गवौ नरगृहे शेषा बले स्थानजे'।। इति।।

ननु च एतस्मिन् श्लोके पूर्वार्धेन स्थानबलमपरार्धेन दिग्बलं चोच्यते। तत्र पूर्वार्धे 'स्वोच्चसुहृदि'त्यादौ प्रथमाविभक्तेः विशेषणपदं बलयुतावित्यादि कस्मात्गृह्यते, उच्यते। उत्तरश्लोके 'चेष्टितवीर्ययुताः' इति वक्ष्यति। तस्मात् 'वीर्ययुता' इत्याकृष्य सम्बध्यते। अस्तु तर्हि किमर्थं अस्मिन् श्लोके बलशब्देन सह हेतुतृतीया प्रयुक्ता। एतत्

स्थानबलप्राधान्यार्थमिति विद्धि। बलं भवतीति भवनक्रियायाः कर्तृभूतो बलशब्द इति प्राधान्यम्। 'चेष्टितवीर्ययुता' इत्यत्र वीर्यशब्दसगुणत्वमिति विशेषः। अन्यच्च दिग्बलस्य चेष्टाबलेन सादृश्यमिति।

**उदगयने रविशीतमयूखौ वक्रसमागमगाः परिशेषाः।**
**विपुलकरा युधि चोत्तरसंस्था श्चेष्टितवीर्ययुताः परिकल्प्याः।।२०।।**

अथ चेष्टाबलमुच्यते। 'उदगयन' इति। उत्तरमार्गेन गच्छन्तौ बलवन्तौ चेष्टाबलयुक्तौ। उत्तरायणे मृगादिमासषट्के इति केचित्। तत् सूर्यस्य युक्तं, चन्द्रस्य न घटते चेष्टाबलत्वात्, चन्द्रस्यापि रवेरुत्तरायणे बलमिति विवक्षा चेत् एतत् कालबलं स्यात्। तस्मादुत्तरमार्गेण गतिरुदगयनमित्युक्तम्। चन्द्रचेष्टाबलं सितपक्षे तत्र नोक्तम्। कालबलेऽन्तर्भावात्। 'वक्रसमागमगाः परिशेषा' इति। 'वक्रगा' विलोमगतयः, 'समागमगा'श्चन्द्रसहिताः; विपुलकराः विस्तीर्णरश्मयः, 'युधि चोत्तरसंस्था'युद्धे उत्तरमार्गगताः, 'च'शब्देन विपुलकरत्वेन दक्षिणदिक्स्थस्यापि विजयित्वमस्ति। एतत् शुक्रस्य सम्भवति। एते चेष्टावीर्ययुताः। 'विपुलकरा' इत्यत्र उच्चनीचवशाद्रश्म्यानयनमस्ति, तच्च गृह्यते। विपुलकराः बहुरश्मयः इत्युक्ताः तदानयनं सारावल्यामुक्तम्।
तच्चात्र लिख्यते -

'स्वोच्चस्थे दश सूर्ये नव चन्द्रे पञ्च भूमितनये च।
पञ्चेन्दुजे तथेड्ये सप्ताष्टौ भार्गवे शनौ पञ्च।।
एवं महेन्द्रशास्त्रे मणिन्थयवनेन्द्रबादरायणप्रोक्ते।
सप्त प्रत्येकस्था निर्दिष्टा रश्मयो ग्रहेन्द्राणाम्।।
अभिमुखरश्मिर्नीचात् भ्रष्टः स्वोच्चात् पराङ्मुखो ज्ञेयः।
अन्तरगतेऽनुपातो यथा तथा सम्प्रवक्ष्यामि।।
नीचविहीनश्चक्रात् शोध्यः षड्भवनतो यदाभ्यधिकः।
आत्मीयरश्मिगुणितात् षड्भक्ताद्रश्मयस्तस्मात्'।। इति।।



हरणगुणने च कर्तव्ये तदपि शास्त्रान्तरे कथितम्।

'मूढानां रश्मयो नष्टा दलं शुक्रार्कपुत्रयोः।
शत्रुनीचद्वादशांशगतः षोडशभागहृत्।।
यो ग्रहो वक्रनिर्मुक्तः सोष्टमांशं हरत्यथ।
क्षेत्रोच्चद्वादशांशस्थे ग्रहे रश्मिचतुर्गुणः।।
मित्रद्वादशभागस्थे द्विघ्नो वक्रोच्चगे तथा।
सुकृती यस्य जनने रश्मिः पञ्चदशाधिकः।।
स शून्यो यस्य जनने रश्मिः पञ्चदशोनितः।
रश्मीनां यावदाधिक्यं तावत् सुकृतिनो जनाः।।
रश्मीनां यावदल्पत्वं तावत् दुष्कृतिनो जनाः'।।

इति चेष्टाबलम्।

**निशि शशिकुजसौराः सर्वदा ज्ञोऽह्नि चान्ये**
**बहुलसितगतास्स्युः क्रूरसौम्याः क्रमेण।**
**स्वदिवससमहोरामासपैः कालवीर्यं**
**शरुबुगुशुचसाद्या वृद्धितो वीर्यवन्तः।। २१।।**

अथ कालबलमुच्यते। 'निशि शशिकुजे'ति। शशिकुजसौराः निशि बलिनः। बुधो निशि दिवा च बलवान्। रविशुक्रजीवाः अह्नि वीर्ययुताः इति पूर्वश्लोकादाकृष्य सम्बध्यते। बहुलसितगताः कृष्णशुक्लपक्षगताः क्रूराः सौम्याश्च क्रमेण बलवन्तः। 'क्रम' शब्दोत्र क्रूरसौम्यकृष्णशुक्लपक्षविषयः। अथवा बहुलपक्षे दिनक्रमेण प्रतिपदादिषु तिथिषु क्रूराः क्रमेण बलवन्तः। शुक्लपक्षे सौम्याश्च तद्वदिति सूचितम्। 'स्वदिवससमहोरामासपैः कालवीर्यं' स्वदिवसः स्ववारः, स्वसमाः स्वसंवत्सरः, स्वहोरा स्वमासश्च एतैः ग्रहाणां कालवीर्यं भवति। एतेषु यदल्पकालः तस्मिन् काले बलाधिक्यम्। ततः क्रमेण कालाऽधिकेषु बलस्य न्यूनत्वञ्चाभिप्रेतम्। कालहोरायां यत् कालबलं ततो न्यूनं स्वदिवसे, ततो न्यूनं स्वमासे, ततो न्यूनं स्वसंवत्सरे, कालबलमिति।

तथा श्रीपतिपद्धतौ -

'पादं स्ववर्षेऽथ दलं स्वमासे दिने स्वकीये चरणोनरूपम्।

रूपं स्वहोरास्विति कालवीर्यमुक्तं हि होरानिपुणैः पुराणैः'।। इति।।

इति बलचतुष्टयमुपदिष्टम्। अनुपदिष्टमयनबलम्। उपदिष्टमाचार्येण गूढत्वान्न विज्ञायते इति वा। सर्वशास्त्रान्तरादवगम्य लिख्यते 'उत्तरेण गच्छन्तः शुक्रकुजार्केन्द्रमन्त्रिणो बलिनः। याम्येन गच्छन्तौ चन्द्रशनी बलिनौ। उभयमार्गेण गच्छन् बुधो बली'।।

तथा चोक्तम् -

'उत्तरेण गच्छन्तः शुक्रकुजार्केन्द्रमन्त्रिणो बलिनः

याम्यगतौ चन्द्रशनी उभयत एवं बुधश्चापि'।। इति।।

तथा च सारावल्याम् -

'प्राग्रात्रिभागेऽतिबलश्शशाङ्कः शुक्रो निशार्धेऽवनिजो निशान्त्ये।

प्रातर्बुधो मध्यदिनेऽथ सूर्यः सर्वत्र जीवोऽर्कसुतो दिनान्ते'।।

एवं चतुष्प्रकारं बलमुक्तम्। एषु चतुर्षु बलेषु प्राधान्येन निरूपणीयं स्थानबलम्। तथा चाचार्येण बहुधा सूचितमेव। 'उच्चत्रिकोणस्वसुहृदि'त्यादिना 'सुहृदरिपरकीय' इत्यादिना च 'कुलसमकुलमुख्य' इत्यादिना च अन्यैश्च स्थानबलस्य प्राधान्यमूह्यम्। चेष्टाबलेषु वक्रबलमुच्चबलतुल्यमेव। 'स्वतुङ्गवक्रोपगतैस्त्रिसङ्गुणं' इत्यादिनैतत् सिद्ध्यति।

तथा च सारावल्याम् -

'उच्चे राशौ विलोमे च फलन्नान्यैर्भविष्यति।

कालस्यातिबलत्वं स्यात्तस्मात्स्वोच्चेऽतिवक्रिते।

वक्रिणस्तु महावीर्याः शुभा राज्यप्रदा ग्रहाः'।।इति।।

तथा चोक्तमन्यत्र -

'नीचारातिगृहेषु वक्रगमनं पुष्णाति नैसर्गिकं

वीर्यं तद्विगुणन्तु मध्यमगृहे तुङ्गोपमं मित्रभे।

स्वर्क्षेऽत्युच्चसमं भवेद्दशगुणं स्वोच्चे तदुच्चांशके

तच्चान्यैरपि संयुतं यदि बलैस्तत् स्यादनन्तं बलम्'।। इति।।

उच्चादिस्थानसंज्ञाभेदात् फलभेदाश्च सन्ति। तदत्र 'स्वोच्चसुहृद्' इत्यादिना बलमुपदिष्टम्। तदत्र शास्त्रान्तरात् शिष्यहिताय लिख्यते।



तथा च सारावल्याम् -

'स्वोच्चे तु भवति दीप्तः स्वस्थः स्वगृहे सुहृद्गृहे मुदितः।

शान्तश्शुभवर्गस्थश्शक्तः स्फुटकिरणजालश्च।।

विकलो रविलुप्तकरो ग्रहाभिभूतः प्रपीडितश्चैव।

पापगणस्थश्च खलो नीचे भीतः समाख्यातः'।। इति।।

'दीप्ते विचरति पुरुषः प्रतापविषमाग्निदग्धरिपुनिचयः।

लक्ष्म्यालिङ्गितदेहो गजमदसंसिक्तभूपृष्ठः।।

स्वस्थः करोति जन्मनि सुखानि रत्नाश्वकनकपरिवारान्।

नृपतेर्दण्डपतित्वं गृहधान्यकुटुम्बपरिवृद्धिम्।।

मुदितैर्विलसति मुदितो विलासिनीकनकरत्नपरिपूर्णः।

विजितसकलारिपक्षः समस्तसुखभाङ्नरो भवति।।

शान्ते प्रशान्तचित्तः सुखधनभोगी महीपतेस्सचिवः।

विद्वान् परोपरकारी धर्मपरो जायते मनुजः।।

स्त्रीवस्त्रगन्धमाल्यैर्विलसति सदा विततकीर्तिः।

दयितस्सर्वजनस्य च शक्ताख्ये भवति विख्यातः।।

दुःखैर्व्याधिभिररिभिः प्रपीड्यते पीडितो मनुजः।

देशाद्देशं विचरति बन्धुवियोगाभिसन्तप्तः।।

बहुसाधनोऽपि राजा ग्रस्तबलः प्रपीडितो रिपुणा।

नाशमुपयाति विजितो भीते दैन्यं परं प्राप्तः।।

स्वस्थानपरिभ्रष्टः क्लिष्टो मलिनः प्रयाति परदेशम्।

विध्वस्तबलो विकलो रिपुभयसञ्चकितचित्तश्च।।

स्त्रीभरणदुःखतप्तस्समस्तधननाशकलुषितमनस्कः।

न जहाति शोकभारं कथमपि खलसंज्ञिते पुरुषः'।। इति।।

पुनरपि राश्याश्रयफलमस्ति-

'उच्चबलेन समेतः परां विभूतिं ग्रहः प्रसाधयति।

विहगस्त्रिकोणबलवान् साचिव्यं बलपतित्वं वा।।

स्वक्षेत्रबलेन सहितः प्रमुदितधनधान्यसम्पदाक्रान्तम्।
मित्रबलेन च युक्ते जनयति कीर्त्यान्वितं पुरुषम्।
स्वद्रेक्काणबली स्यात् गुणभाजनं ग्रहः कुरुते।।
तेजस्विनमतिसुखिनं सुस्थिरविभवं नृपाच्च लब्धधनम्।
निजहोराबलयुक्तो जनयति विक्रान्तमतिं च।।
स्वनवांशबलयुक्तः करोति पुरुषं प्रसिद्धम्।
शुभदर्शनबलसहितः पुरुषं कुर्याद्बलान्वितं ख्यातम्।।
विभवप्रधानमखिलं सुरूपदेहं सुसौख्यञ्च।
पुंस्त्रीभवनबलेन च करोति जनपूजितं कलाकुशलम्।।
पुरुषं प्रसन्नचित्तं कल्यं परलोकभीरुञ्च।
आशाबलसमुपेतो नयति स्वदिशन्नभश्चरः पुरुषम्।।
नीत्वा तं वसुभूषणवाहनसौख्यान्वितं कुरुते।
क्वचिद्राज्यं क्वचित् पूजां क्वचिद्द्रव्यं क्वचिद्यशः।।
ददाति विहगश्चित्रं चेष्टावीर्यसमन्वितः।
वक्रिणश्च महावीर्याश्शुभा राज्यप्रदा ग्रहाः।।
पापाः प्रवासिनां पुंसां कुर्वन्ति च वृथाटनम्।
सुस्थः समागमसुकरोद्भवविजयबलेन विदधाति।।
शुभमखिलं विहगेन्द्रा राज्यं च विनिर्जितारातिम्।
रात्रिदिवा बलपूर्णे भूगजलाभेन शौर्यपरिवृध्या।।
मलिनयति शत्रुपक्षं भजति च लक्ष्मीं नभश्चरैः पुरुषः।
द्विगुणं द्विगुणं दद्युर्वर्षाधिपमासदिवसहोरेशाः।।
क्रमपरिवृध्या सौख्यं स्वदशासु धनञ्च कीर्तिञ्च।
पक्षबलाः रिपुनाशं रत्नाम्बरहस्तिसम्पदं दद्युः।।
स्त्रीकनकभूमिलाभान् कीर्तिञ्च शशाङ्कधवलाभाम्।
सकलबलैः समुपेता निर्मलकरजालभासुरास्सततम्।।
राज्यं ग्रहाः प्रदद्युः सौख्यञ्च मनोरथातीतम्'।। इति।।



ननु सर्वे ग्रहाः बलवन्तश्शुभं कुर्वन्ति चेत् किमर्थं शुभपापिविभागः कृतः। इयान् विशेषः कथितः सारावल्याम् -

'आचारसत्वशुभशौचयुतास्सुरूपास्तेजस्विनः कृतविदो द्विजदेवभक्ताः।
स्रग्वस्त्रगन्धजलभूषणसत्प्रियाश्च सौम्यग्रहैर्बलयुतैः पुरुषा भवन्ति।।
लुब्धाः कुकर्मनिरताः निजकार्यनिष्ठाः साधुद्विषः सकलहाश्च तमोभिभूताः।
क्रूराः सदा वधरता मलिनाः कृतघ्नाः पापग्रहैर्बलयुतैः पिशुनाः कुरूपाः'।। इति।।

ननु बलसहिता ग्रहाः शुभं कुर्वन्ति, दुःखं नाशयन्ति; बलहीनाः विपरीतं कुर्वन्ति इति नियमो विद्यते। एवन्न नियमाः। येन ग्रहेण भावस्थानालोकयोगादिभिश्शुभफलमुच्यते। स बलवांश्चेत् सफलं सम्पद् न चेत्तदभाव इत्येव। स न वा फलदो भवति। एतद्विपरीतमशुभफले विनियमः।

तथा च सारावल्याम् -

'औत्पादिकाः सवितृलुप्तकरा विरूक्षा नीचं गता रिपुगृहं च नभश्चरेन्द्राः।
युद्धे जिताश्शुभफलानि विनाशयन्ति पापानि यानि सुतरां परिवर्धयन्ति'।। इति।

बलवशतः फलविभागः क्रियत इति। बलकथनं शास्त्रान्तरादादाय लिखितमस्माभिः। अस्मिञ्छास्त्रे आपाततो निरूपिते इदं सर्वं सिद्ध्यति तन्मन्दबुद्धीनां दुरवबोधमिति। 'शरुबुगुशुचसाद्यनामाक्षरैः ग्रहा अवगन्तव्याः। एते 'वृद्धितो'ऽधिकमधिकं वीर्यवन्तः। एतेषां यथोत्तरं बलवृद्धिरित्यर्थः। बहुषु फलाधिकग्रहनिरूपणेषु अनेन प्रयोजनं, न स्वफलनिरूपणे।

तथा च कृष्णीये -

'मन्दारसौम्यवाक्पतिसितशशिरवयो यथोत्तरं बलिनः।
नैसर्गिकबलमेतत् बलसाम्येऽस्मादधिकचिन्ता'।।

एवमुक्तं ग्रहाणां बलं शास्त्रान्तरेषु गणितप्रक्रियया निर्णेतुमुपायः उक्तः। तदनेनाचार्येण गुरुमुखात् संसिद्ध्यति इति नोक्तम्। तथाप्यस्मिञ्छास्त्रे आपाततो निरूप्यमाणे सूचितमेवेति सिद्ध्यतीति। शास्त्रान्तरेषु गर्भाधानजन्मकालचित्प्रवेशकालेषु बलवतो लग्नात् चिन्त्यमित्युपदिष्टम्। अस्मिञ्छास्त्रे त्वाधानजन्मकालावेव निरूपणीयत्वेन विवक्षितौ। चित्प्रवेशकालस्य दुरधिगमत्वात्। एवं चेत् शास्त्रान्तरे कथं चित्प्रवेशकालो निरूपणीय

इत्युक्तं एवमिहोच्यते; ज्ञाताभ्यामाधानजन्मकालाभ्यां चित्प्रवेशकालोऽवगन्तव्य इति। तथा च यवनेश्वरः -

'मासैः षड्भिस्समेधित्वात् कालात्मा मासि सप्तमे।
वित्तस्यायव्ययं पुत्रकलत्रादिमूर्तिं तथा।।
व्याधिकर्माणि विद्याञ्च चिदा सह निषिञ्चति।
प्रारब्धकर्मवशतश्शरीरे गर्भसंस्थिते।।
एतमालम्ब्य माता च पिता भ्राता सखा परः।
जयः पराजयो भाग्यमेवमाद्या भवन्ति हि'।। इति।।

तथापि दुरवबोध एवेति जन्माधानकालाभ्यामेवाचार्येण फलनिरुपणमुक्तम्। तस्मात् जन्मकालानयनमस्माभिरत्र शिष्यहितायोच्यते। अथवा बलाबलानयने नवांशकद्वादशांशकादि परिज्ञानार्थं जन्मकाले जन्मलग्नस्य नाडीविनाडीप्राणादिसूक्ष्मकालं तत्काले सूर्यादिग्रहाणां स्फुटं सम्यक् कृत्वा दृग्गणिततुल्येन गणितेन सम्यक् कुर्यात्। तथा च जातकसङ्ग्रहे -

'योगे ग्रहाणां ग्रहणेऽर्कसोमयोर्मौढ्ये तथा वक्रगतौ तु पञ्चसु।
दृष्टानुरुपं करणं यदन्वहं तेन त्रिवारं गणयेद्विहङ्गमान्'।। इति।।

अन्यत्रापि-

'यदा यश्चैव सिद्धान्तो गणिते दृक्समो भवेत्।
तदा तेनैव संसाध्य जातकं गणयेद् बुधः'।। इति।।
'स्पष्टो ब्राह्मस्तु सिद्धान्तस्तस्यासन्नस्तु रौमशः।
सौरः स्पष्टतरोऽस्पष्टौ वासिष्ठः पौलिशश्च तौ'।। इत्युक्तम्।

पराशरमुनिनाप्युक्तम् -

'कदाचिद् ब्रह्मसिद्धान्तस्सावित्रस्तु कदाचन।
कदाचिद्रौमशः स्पष्टो न कदाचित्तथेतरौ'।। इति।।

आचार्यश्चाह -

'स्पष्टो ब्राह्मः प्रोक्तस्तस्यासन्नस्तु रोमशो ज्ञेयः।
स्पष्टतरस्सावित्रस्तदुपरि शेषौ विदूरविभ्रष्टौ'।। इति।।



श्रीपतिरप्याह -

'ज्ञेयोऽत्र प्रथमं हि जन्मसमयच्छायाम्बुयन्त्रैः स्फुटः
तत्कालप्रभवा विलग्नसहिताः कार्यास्ततश्च ग्रहाः।
सिद्धान्तोक्तपरिस्फुटोपकरणैस्ते चासकृत् कर्मणा
भावाः खेटदृशो बलानि च ततस्तेषां विचिन्त्यानि षट्'।। इति।।

तस्माद्येन गणितेन दृक्साम्यं भवति तेन ग्रहाः सम्यक् स्फुटीकर्तव्याः। अन्यथा तु ग्रहाणां वस्तुतस्थित्यज्ञानात् कथं जातके फलनिरूपणं क्रियते। मुहूर्तादिष्वपि तथैव कर्तव्यं भवति। जन्मकाले सम्यक् स्फुटीकृतस्थितान् ग्रहान् विज्ञाय बलाबलं गणयेत्। अनेनाचार्येण चतुष्प्रकारं बलमुक्तम्। कैश्चित् षट्प्रकारमुक्तम्। तथा च पराशरः -

'निसर्गकालचेष्टाख्यस्थानायनदिगाख्यया।
षट्प्रकारा बलं प्राहुर्ग्रहाणां पूर्वसूरयः'।। इति।।

निसर्गबलमनेनाचार्येणाप्युक्तम्। अयनबलन्तु चेष्टाबलान्तर्भावान्नोक्तम्।

अथ प्रथममुच्चबलमानयेत्। 'नीचेतोर्धं ह्रसति हि ततश्चान्तरस्थेऽनुपातः' इत्याचार्येण दशानयने कथितम्। त्रैराशिकेनोच्चबलमानेतव्यम्। ग्रहस्फुटं विन्यस्य ग्रहाणां स्वं स्वं परमनीचभागं वर्जयेत्। आदित्यस्य दशभागाधिकं षड्राशयः चन्द्रस्य त्रिभागसहितास्सप्तराशयः इत्येवं द्रष्टव्यम्। शिष्टे षड्राश्यधिके तु चक्राद्विशोध्य शिष्टराशीन् भागीकृत्य भागेषु संयोज्य त्रिभिर्हरेत्। तत्र लब्धषष्ट्यंशरूपं उच्चबलं भवति। तथा च पराशरहोरायाम् -

'नीचोनन्तु ग्रहं भार्धाधिके चक्राद्विशोधयेत्।
भागीकृत्य त्रिभिर्भक्तं फलमुच्चबलं भवेत्'।। इति।।

परमस्वोच्चे पूर्णमेकं बलम्। परमनीचे शून्यमित्यन्तरेऽनुपातः। अशीत्युत्तरशतभागाः स्वोच्चनीचान्तरम्। ततो भागत्रितयस्य एकबलः षष्ट्यंशो भवति। ततस्त्रिभिर्भुज्यत इति। अथ मूलत्रिकोणक्षेत्रादिस्थानबलमानयेत्। उत्तरत्र भावफलाध्याये इष्टानिष्टबलयोः स्थानभेदेन फलमानं वक्ष्यति।

'उच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः।
शुभं सम्पूर्णपादोनदलपादाल्पनिष्फलम्'।। इति।।

अत्र शुभफलानां बलवृद्धिवशाद्वृद्धिः। अशुभफलानां बलह्रासवशात् वृद्धिरिति सिद्धं भवति। तस्मात्तेनैव पद्येन बलप्रमाणमप्युक्तं भवति। प्रायशः अत्रोक्तस्थानवशात् प्राप्तबलसङ्ख्याप्रमाणमन्यच्छास्त्रादानीय लिख्यते।

तथा च पराशरहोरायाम् -

'मूलत्रिकोणस्वर्क्षातिमित्रमित्रसमारिषु।
अतिशत्रुगृहे वापि स्थितानां क्रमशो बलम्।।
भूताब्धयः खरामाश्च नखास्तिथिगजा युगाः।
द्वाविन्दुशुक्रौ युग्मस्थौ तिथिरोजांशगाः परे।।
केन्द्रादिषु स्थिता लग्नात् षष्टिस्त्रिंशत् तिथिक्रमात्।
आदिमध्यावसानेषु द्रेक्काणेषु स्थिताः क्रमात्।।
पुन्नपुंसकयोषाख्या दद्युस्तिथिबलं ग्रहाः।
स्वषड्वर्गगतास्त्रिंशदेवं स्थानबलं विदुः'।। इति।।

मूलत्रिकोणस्वर्क्षातिमित्रमित्रक्षेत्रेषु पादोनमर्धं त्र्यंशं पादमिति। बलक्रमादित्याचार्येण -

'स्वोच्चसुहृद्स्वदृगाणनवांशैः स्थानबलं स्वगृहोपगतैश्च'।

इत्युक्तवता बलाल्पत्वात् समशत्र्वतिशत्रुक्षेत्रेषु बलं नोक्तम्। 'स्वगृहोपगतैश्च' इत्यत्र स्वशब्देनादिमध्यान्तद्रेक्काणे पुन्नपुंसकस्त्रीग्रहाः उक्ताः। पुरुषग्रहाः आदि द्रेक्काणे,नपुंसकग्रहाः मध्यद्रेक्काणे, अन्त्यद्रेक्काणे स्त्रीग्रहौ च पादबलयुक्तौ।

स्त्रीग्रहौ चन्द्रशुक्रौ स्त्रीराश्यंशकस्थौ शेषा ओजराश्यंशकस्थाश्च पादबलयुक्ता इत्येतदपि 'स्वगृह'शब्देन सूचितम्। 'स्वोच्चे सुहृत् स्व' इत्यत्र 'स्व'शब्देन स्वषड्वर्गगतानां अर्धबलम्। 'उदयरविशशाङ्कप्राणिकेन्द्रादिसंस्थाः प्रथमवयसि मध्येऽन्त्ये च दद्युः फलानि' इत्युत्तरत्र वक्ष्यति। तत्र केन्द्रादिस्थितानां प्रथमोक्त्या बलपूर्तिसमाल्पताश्च सूचिताः, केन्द्रे षष्ट्यंशषष्टिबलयुक्ताः पणपरस्थाः त्रिंशद्बलयुक्ताः आपोक्लिमस्थास्तिथिमितबलयुक्ताः इति। समानक्षेत्रगतांशषष्ट्यंशचतुष्कबलयुक्ता भवन्ति। अत्र मूलत्रिकोणराशयः 'सिंहो वृषः' इत्यादिना पूर्वमुक्ताः। तत्र मूलत्रिकोणस्वर्क्षोच्चानामेकत्वे विभागोऽनेनाचार्येणात्र



नोक्तः। अन्यशास्त्रेषूक्तः - 'स्वोच्चसुहृदि'ति श्लोकव्याख्याने स्वराशावप्युच्चमूल-त्रिकोणविभागः कथितः।

तथा च सारावल्याम् -

'विंशतिरंशास्सिंहे त्रिकोणमपरे स्वभवनमर्कस्य।
उच्चं भागत्रितयं वृष इन्दोः स्वत्रिकोणमपरोंशाः।।
द्वादशभागो मेषे त्रिकोणमपरे स्वभवनमारस्य।
उच्चबलं कन्यायां बुधस्य तुङ्गांशकैः सदा चिन्त्यम्।।
परतस्त्रिकोणजातं पञ्चभिरंशैस्स्वराशिजं परतः।।
दशभागा जीवस्य त्रिकोणफलमपरे स्वभञ्चापे।
शुक्रस्य तु विषयांशास्त्रिकोणमपरे स्वराशिजं जूके।।
कुम्भे त्रिकोणे निजभे रविजस्य रवेर्यथा सिंहे'। इति।

अत्र केषाञ्चित् पक्षे विशेषोऽस्ति।

तथा च पराशरहोरायाम् -

'मूलत्रिकोणं पूर्वार्धं रवेर्लेये च शीतगोः।
भागानां विंशतिः स्वोच्चतृतीयांशात् परा स्मृता।।
शिष्टं मूलत्रिकोणं स्यात् वृषेऽजे तद्दलं द्वयोः।
कुजस्य पूर्वभागोऽजे स्वर्क्षमन्यत् त्रिकोणभम्।।
बुधस्यापि च कन्यायामुच्चपञ्चदशावधि।
दश मूलत्रिकोणं स्यात् परं स्वर्क्षमितीरितम्।।
दशभागास्तथा विंशद्भागा पञ्चदशांशकाः।
गुरुशुक्रासितानान्तु त्रिकोणं स्वर्क्षमन्यभम्'।। इति।।

अत्र पूर्वोक्तपक्षो वरीयानित्यस्माभिः श्रुतः। अतिमित्रमित्रसमशत्र्वतिशत्रुस्थानानि पूर्वमुक्तानि 'सत्योक्ते सुहृद' इत्यादिना। 'अन्योन्यस्य धनव्ययाय' इत्यादिना च। एवं जातके शत्रुमित्रौदासीनकल्पना। 'जीवो जीवबुधौ' इत्यादिपक्षः मुहूर्तादौ प्रश्ने चाङ्गीकर्तव्यः। एवं प्रथममुच्चबलमानीय पश्चात् मूलत्रिकोणे स्वराशावतिमित्रभे मित्रभे समभे शत्रुभे च पञ्चचत्वारिंशत्, त्रिंशच्च, विंशत्, पञ्चदश, दश, चत्वारः, द्वौ च षष्ट्यंशाः क्रमेण

न्यस्तव्याः। ततः षड्वर्गबलं निरूपयेत्। तत्र होरा द्विप्रकारा। 'मार्ताण्डेन्द्वोरयुजि समभे चन्द्रभान्वोश्च होरे' इत्येकप्रकारः। 'केचित्तु होरां प्रथमां भपस्य वाञ्छन्ति लाभाधिपतेर्द्वितीया' मित्यपरः प्रकारः। तयोः पूर्वोक्तप्रकारो जातके, प्रश्ने द्वितीयः। द्रेक्काणस्त्रिविधः 'द्रेक्काणास्स्युः स्वभवनसुतत्रित्रिकोणाधिपाना'मित्येकः प्रकारः। 'द्रेक्काणास्स्युः स्वभवनसुतत्रित्रिकोणाधिपाना' मित्यत्र 'ते चरागद्विदेहाः' इति राशेः 'त्रिकोणचरराश्यधिपतेः प्रथमद्रेक्काणः स्थिरराश्यधिपतेः द्वितीयद्रेक्काणः उभयराश्यधिपतेः तृतीयद्रेक्काणः इत्येकः। 'द्रेक्काणसंज्ञामपि वर्णयन्ति स्वद्वादशैकादशराशिपानां' इति तृतीयः प्रकारः।

तेषु प्रथमो विधाने, द्वितीयो जातके, तृतीयः प्रश्ने इति केचित् यवनादयः। तन्मतं पूर्वमेव प्रदर्शितम्। सर्वेषु राशिषु राशित्रिकोणचरराश्यधिपतेः प्रथमद्रेक्काणः स्थिरराश्यधिपतेः द्वितीयद्रेक्काणः, उभयराश्यधिपतेः तृतीयद्रेक्काणः कर्तव्यः। सर्वराशिषु तत्तद्राशितत्पुत्रधर्मेशानां द्रेक्काणाधिपत्यमित्ययं पक्षो विधाने। अन्यः पक्षः प्रश्ने वा। नष्टजातकप्रश्नजातकयोर्जातकान्तर्भावित्वात्। जातकोक्तः आद्यपक्ष एव। प्रश्ने लाभालाभजयाजयव्याधिमृतिविषयेष्वप्यन्येषु प्रश्नेषु तृतीयः पक्ष एव द्रेक्काणनिर्णयम्। अथ होराद्रेक्काणनवभागद्वादशांशकलक्षणान्याचार्येणोक्तानि। सप्तांशकन्नोक्तम्। तदस्माभिः प्रदर्श्यते। राशेस्सप्तमांशः सप्तांशकः स तु भागश्चत्वारः सप्तदशलिप्ताः। सप्तांशराशिपतयस्तु प्रदर्शिताः सारावल्याम् -

'मेषालिमिथुनमृगहरिमीनतुलावृषभचापकर्किटकाः।
घटभृत्कन्यापूर्वास्सप्तांशानां क्रियादीशाः'।। इति।।

एवं होरादिषड्वर्गाधिपतीन् क्षेत्राधिपतींश्च जानीयात्। होरादिषड्वर्गस्य स्ववर्गगणस्य त्रिंशत्। एकस्य ग्रहस्य बहवो वर्गाः यद्येकवर्गबलमेव ग्राह्यम्। अन्येषु नवांशस्य बलमपि। परवर्गेषु मित्रादिराशौ यावद् बलमुक्तं तदर्धं ग्राह्यम्। यथातिमित्रराशौ नखसङ्ख्यातुल्यमुक्तं बलम्। अतिमित्रस्य होरादिवर्गे तदर्धं दशसङ्ख्यं बलं भवति। अत्युच्चे षष्टिः। अतिनीचे किञ्चिन्नास्ति। तदन्तरेऽप्यनुपातमेवमुच्चबलम्। मूलत्रिकोणादिषु, शिष्टराशिषु प्रोक्तबलञ्च केन्द्रबलञ्च द्रेक्काणबलञ्च ओजयुग्मयुग्मांशस्थितिबलञ्च होरादिषड्वर्गबलञ्चानीय स्थानबलमानीयैकत्र स्थापयेत्। ततो दिग्बलानयनमुच्यते। अर्कस्फुटात् कुजस्फुटाच्च पातालग्नं, जीवस्फुटात् बुधाच्चास्तलग्नं, मन्दादुदयलग्नञ्च, चन्द्रात् सिताच्च मध्यलग्नं



अपनीय शिष्टे षड्राश्यधिके चेत् चक्राद्विशोध्य राशीन् भागीकृत्य त्रिभिर्विभजेत्, दिग्बलं भवति 'दिक्षु बुधाङ्गिरसौ रविभौमौ सूर्यसुतः सितशीतकरौ च' इत्युक्तेषु स्थानेषु पूर्णबलम्। तत्सप्तमेषु शून्यमिति सिद्ध्यति। ततोनन्तरेनुपातः कर्तव्यः इति न्यायादेव दिग्बलमानीयते। तथा च पराशरहोरायाम् -

'अर्कात् कुजात् सुखं जीवात् ज्ञात् चास्तं लग्नमार्कितः।
मध्यलग्नं भृगोश्चन्द्राद्धित्वा षड्भाधिके सति।।
चक्राद्विशोध्य भागास्तु रामाप्तास्तद्दिशोर्बलम्'। इति।

एवमानीतं दिग्बलं षष्ट्यंशरूपं भवति।

अथ 'निशि शशिकुजसौराः सर्वदा ज्ञोऽह्नी'त्यादिना ग्रन्थेनोक्तकालबलमानीयते, दिननिशाबलं पक्षबलं वर्षमासहोराबलञ्चानीयते। अत्र 'निशा' शब्देन मध्यरात्र उच्यते. अहश्शब्देन मध्याह्न उच्यते। शशिकुजसौराः मध्यरात्रे पूर्णबलाः। बुधः सर्वदा बलपूर्णः अर्कगुरुशुक्राः मध्याह्ने पूर्णबलाः। शशिकुजसौराः मध्याह्ने बलशून्याः अर्कगुरुशुक्राः मध्यरात्रे बलशून्याश्च भवन्ति। अन्तरेऽनुपातः क्रियते, मध्यरात्रादारभ्य जन्मकालावधिको नाड्यादिकालो ग्राह्यः। तन्नाड्यादिकालं द्विगुणीकृत्य षष्ट्यंशरूपबलमानेतव्यम्। रविगुरुशुक्राणामेतत्, षष्टितोऽपनीय, शिष्टं शशिकुजसौराणां बलम्। मध्याह्नादारभ्य अर्धरात्रान्तरे जन्म चेत् जन्मकालावधिको नाड्यादिकालो ग्राह्यः। तद्द्विगुणीकृत्य षष्ट्यंशरूपबलमानेतव्यम्। शशिकुजसौराणामेतत्। षष्टितोपनीय शिष्टं रविगुरुशुक्राणां बलम्। एतत् षष्ट्यंशरूपमेव। बुधस्य सर्वदा दिवारात्रौ षष्टिः। षष्ट्यंशानां षष्टिबलमिति।

अथ पक्षबलमुच्यते। पौर्णमास्यन्ते चन्द्रबुधगुरुशुक्राः पूर्णबलाः। रविकुजमन्दाः हीनबलाः अन्त्ये पूर्णबलाः तदन्तरे त्रैराशिकं क्रियते। चन्द्रादर्कं विशोध्यशिष्टं षड्राश्यधिकं चेत् द्वादशेभ्योऽपनीय भागीकृत्य त्रिभिर्विभजेत्, चन्द्रबुधगुरुशुक्राणां बलं भवति। एतत् षष्टिभ्योऽपनीय शिष्टं रविकुजमन्दानां बलं भवति। चन्द्रपक्षबलं द्विगुणं भवति। तदुक्तमभियुक्तेन 'आयनद्विगुणं भानोरिन्दोः पक्षबलन्तथा' इति।

अथ दिननिशोस्त्रिभागपतिबलं उच्यते। दिनमानं त्रिभागीकृत्य प्रथमभागस्य बुधोऽधिपतिः, द्वितीयभागस्यार्कोऽधिपतिः, तृतीयभागस्य मन्दोऽधिपतिः, रात्रिमानं

त्रिभागीकृत्य प्रथमभागस्य चन्द्रोऽधिपतिः, द्वितीयभागस्य शुक्रोऽधिपतिः, तृतीयभागस्य भौमोऽधिपतिः।

तथा च पराशरहोरायां -

'ज्ञार्कमन्देन्दुशुक्रारा दिनरात्र्योस्त्रिभागपाः।
तत्रैतेषां बलं पूर्णं देवेड्यस्य तु सर्वदा'।। इति।।

तत्र स्वस्वांशमस्ति।

तथा च यवनेश्वरः -

'प्राग्त्रिभागेऽतिबलश्शशाङ्कः शुक्रो निशार्धेऽवनिजो निशान्ते।
प्रातर्बुधो मध्यदिने च सूर्यः सर्वत्र जीवोर्कसुतो दिनान्ते'।। इति।।

'त्रैराशिकेनान्तर्नाडिकासु, बलं दिनांशे कथितं पुराणैः' इति त्रैराशिकन्तु त्रिभागादौ तत् त्रिभागाधिपतेः पूर्णबलम्। त्रिभागावसाने हीनः ततो भागगतनाडीर्भागनाडीभ्योपनीय शिष्टं षड्भिर्गुणयेत्, बलं भवति। गुरोस्सर्वदा पूर्णं बलम्। अथ वर्षमासदिनकालहोराधिपतीनां बलमुच्यते। वर्षमासाधिपलक्षणं संहितायामुक्तम्। चैत्रादौ वर्षारम्भे आदौ यो दिवसाधिपः वर्षाधिपतिन्तं विद्यात्, मासे मासाधिपं तथेति। केचित् वर्षमासाधिपमन्यथा कथयन्ति।

तथा च हरिदत्तः -

'त्रयोदशदिनेनोनं कलियातदिनं भजेत्।
त्रिंशता खाङ्गरामैश्च द्वित्रिघ्नं सप्तभाजितम्।
मासपो वर्षपश्चैव क्रममेवं प्रकीर्तितम्'।। इति।।

तत्र प्रथमोक्ता विधिः यथास्माभिरङ्गीक्रियते।

कालहोरा तु द्विप्रकारः। अध्यर्धनाडिकाद्वयमित्येकः प्रकारः। विनाडीविंशतिकाल इत्यन्यः। सा च पुनः द्विप्रकारा। वारेशात् प्रभृति चक्रक्रमादित्येकप्रकारः। वारेशात् पञ्चमात् प्रभृति चक्रक्रमादित्यन्यः। चक्रक्रमस्तु कक्ष्याक्रमः - शनिगुरुकुजरविशुक्रबुधचन्द्राः। अत्र नियमस्तु जातके नष्टजातके बलविधाने इष्टकष्टफलनिर्णये च। विंशतिविनाडिकालः पक्षः। तत्रापि वारेशात् प्रभृति पक्षः। विधानेऽन्यः तत्रापि वारेशादेव। प्रश्ने तु वारेशपञ्चमेशादेव। प्रश्नेऽन्यः पक्षः। तत्रापि विधाने वारेशपञ्चमेशादेवेति सम्प्रदायः।



विंशतिविनाडिकाकालहोरामाह गर्गः -

'कालहोराधिपाश्चक्रक्रमाद्वाराधिपात् स्मृताः।
विनाडिका नखमिता मानमेतस्य कीर्तितम्'।। इति।।

वर्षाधिपतेः पादं बलं, मासाधिपतेरर्धं, दिनाधिपतेः पादोनं, कालहोराधिपतेः पूर्णमेकं बलमिति। एवं वर्षमासदिनकालहोराधिपतिबलमानयेत्। 'स्वदिवससमहोरामासपैः कालवीर्य'मित्यत्र व्युत्क्रमेण कालप्रमाणवृद्धेः पादवृध्या बलमाचार्येणाभिप्रेतम्।

तत्र स्थानबलं दिग्बलं कालबलं चानेतुमुपाय उक्तः। अथायनबलमाचार्येणानुक्तमपि मयात्र शास्त्रान्तरादुच्यते।

तथा च पराशराः -

'सायनांशग्रहभुजराशीनिष्वब्धिभिस्सुरैः।
सूर्यैर्हत्वा क्रमाद्राशिभागालिप्तानुपाततः।।
एवं राश्यधिके युज्यादर्कारार्योशनस्सु च।
शशित्रयमथो युज्यान्मेषादिस्थेषु तेष्वथ।।
तुलादिस्थेषु राश्यादींस्त्रिराशिभ्यो विवर्जयेत्।
चन्द्रार्क्योर्विपरीतं स्यात् सदा युज्याद्बुधस्य च।।
भागीकृत्य त्रिभिर्भक्तं ग्रहाणामायनं बलम्।
रवेर्द्विगुणमेवं स्यादायनं बलमीरितम्'।। इति।।

तस्य प्रक्रियोच्युते 'सायनांशग्रह' इति। अयनांशयुक्तः ग्रहः अयनचलनं पूर्वाचार्यैः कथितम्।

तथा च मणित्थः -

'अत ऊर्ध्वं चलन्त्येव सममण्डलतो ग्रहाः।
सप्तविंशतिभागाश्च खखाष्टेन्द्वब्दसङ्ख्यया'।। इति।।

सूर्यसिद्धान्तेप्युक्तम् -'त्रिंशत् कृत्यो युगे भानां चक्रं प्राक् परिलम्बते' इति।

इतरत्र भास्करोप्याह आर्यभटीयव्याख्याने -

'वसुदेवादि सर्पार्धादयनं मुनयो जगुः।' इति।

वराहमिहिरेणास्मदाचार्येणाप्युपदिष्टम् -

'आश्लेषार्धाद्दक्षिणमुत्तरमयनं रवेर्धनिष्ठाद्यम्' इति

तत्र हरिदत्त आह -

'चतुर्विंशतिभागास्स्युश्चलन्त्येव ग्रहास्ततः' इति।

'ततः अपमण्डलतः इत्यर्थः। एतद्युक्तं भवति आर्यभटादीनां मतमेकम्। मणिन्थसूर्यादीनां मतमन्यत्। आर्यभटादयस्तु चतुश्चत्वारिंशदुत्तरचतुश्शतमिते शकाब्दे काले मेषादौ विषुवदर्के तिष्ठति यष्टियन्त्रादिना निर्णीते, तत उत्तरमेतस्य वर्षस्य एककला चलतीति निर्णीतवन्तः एवं चतुर्विंशतिभागानधश्चलति। तदायनचलनकला योजयेत्। पश्चादूर्ध्वञ्चलति। तदा चतुर्विंशतिभागेभ्यः प्रत्यब्दमेकैकां कलां अपनीय योजयेत्। सूर्यसिद्धान्तादीनान्तु अष्टशतोत्तरसहस्रवर्षैः सप्तविंशति भागान् अधश्चलति। तत ऊर्ध्वं चलतीति। कलियुगवर्षाणि खखाष्टेन्दुभिर्विभज्य शिष्टं त्रिभिस्सङ्गुण्य शतद्वयेन विभज्य भागाश्शेषात् षष्टिगुणितात् कलाश्च ग्राह्याः। अस्मिन् पक्षे प्रत्यब्दं चतुष्पञ्चाशद्विकला अयनचलनरूपेण लभ्यते। अलमतिविस्तरेण।

अथायनचलनभागान् रव्यादीनां स्फुटेषु संयोज्य केन्द्रे मेषादितुलादिलक्षणं विज्ञाय भुजमानीय भुजायाः प्रथमराशिमिष्वब्धिभिर्द्वितीयराशिं त्रयस्त्रिंशता तृतीयराशिं सूर्यैर्गुणयेत्। राशिद्वयाधिकैर्भागादींश्चतुर्विंशत्या गुणयेत्। एकराश्यधिके भागादीन् षट्षष्ट्या गुणयेत्। राशिस्थानगतां त्रिंशतारोप्य भागादीन् षष्ट्यारोपयेत्। एवमारोप्य स्थिते राश्यादिके अर्कारार्यशुक्रेषु मेषादिस्थेषु राशिस्थाने राशित्रयं युज्यात्। तुलादिस्थेषु राशित्रिराशिभ्यो-विवर्जयेत्। चन्द्रमन्दयोः मेषादिस्थयोः राशित्रयमपनयेत्। तुलादिस्थयोः राशित्रयं युज्यात्। बुधे मेषादिस्थे तुलादिस्थे च त्रिराशीन् युज्यात्। ततो भागीकृत्य त्रिभिः भजेत्। आयनं बलं भवति। रवेरेतत् द्विगुणं भवति।

तथा च यवनेश्वरः -

'अर्कारासुरपूज्यदेवगुरुषु प्राप्तेषु मेषादिकम्
युज्यादेषु तुलादिकेषु परमक्रान्तिं तथा वर्जयेत्।
सौम्यां क्रान्तिमथापरं परमया क्रान्त्या त्रिनिघ्नां हरेद्-
भादि स्याद्रविजेऽन्यथा च शशिनि ज्ञात्वैव युज्यात् सदा।।



लिप्तीकृत्य खखाष्टादिग्घृतमिदं वीर्यं फलं चायनम्।
सूर्यस्य द्विगुणन्तु वा दलविधौ क्रान्तेस्तथा कल्पयेत्'।। इति।।

तथा चाभियुक्तः -

'सितार्ककुजजीवानां सौम्यरूपदलं क्षिपेत्।
याम्ये शोध्यमतो व्यस्तमिन्दुसूर्यजयोस्तथा।
बुधस्य सर्वमाक्षेप्यमायनाख्यं बलं भवेत्'।। इति।।

अथ चेष्टाबलमुच्यते -

'उदगयने रविशीतमयूखौ वक्रसमागमगाः परिशेषाः'

इत्यादिश्लोकेन चेष्टाबलमुच्यते। अर्कचन्द्रयोरायनं बलमेव चेष्टाबलम्। अन्येषां वक्रसमागमरश्मिप्रसरयुद्धजयैश्चेष्टाबलम्। 'वक्र'शब्देन वक्रादिगतिविशेषात् बलविशेषं भवति।

तथा च पराशरहोरायाम् -

'षष्टिर्वक्रगते वीर्यं अनुवक्रगतेर्दलं
पादं विकलभुक्तेस्स्याद्दलमेव समागमे।
पादं मन्दगतेस्तस्य दलं मन्दतरस्य च
शीघ्रं भक्ते तु पादोनं दलं शीघ्रतरस्य च'।। इति।।

ग्रहाणामष्टधा गतिर्भवति। अनुवक्रगतिरिति। अनुवक्रग्रहस्य गतिरल्पा स्यात् सा अनुवक्रगतिः। अनुवक्रगतेर्ग्रहस्य बलं त्रिंशत्। 'विकलभक्ति'रिति। अपमण्डले प्राङ्मुखं गच्छन् ग्रहः यत्र क्वापि राशौ कलामात्रं यदा पश्चान्मुखो गन्तुमारभते, तदा प्रभृति दिनपञ्चकमतीत्य वक्रगतिः। तद्दिनपञ्चकं तत्पूर्वदिनपञ्चकञ्चेति दिनदशकं कुजबुधशुक्राणां अनुवक्रगतयः। गुरुशन्योः विंशतिदिवसा अनुवक्रगतिः। पुनः प्राङ्मुखो ग्रहः तास्ताः कलाः यावता कालेन प्राप्नोति तावन्तं कालं विकलगतिः। तस्य पादबलं, समागमे ताराग्रहाणां शुक्रं विना उत्तरमार्गे गतानां दलं बलम्। शुक्रस्य सदा पूर्णबलमेव। युद्धेऽपि सदा जेता शुक्रः। चन्द्रात् दक्षिणमार्गगतानां अर्धं बलं हीयते। चन्द्रस्यार्धबलमेधते। पश्चिमाभिमुखं जिगमिषुर्मन्दतरञ्च गच्छतीत्यर्थः। शीघ्रतरस्येत्यत्र व्यवहितान्वयः, शीघ्रतरगतेः पादोनं पञ्चचत्वारिंशत् शीघ्रगतेर्दश त्रिंशत् इत्यर्थः। वक्रादिलक्षणञ्च शास्त्रान्तरे प्रोक्तम्।

'आदित्यान्नवमं वक्रं षष्ठाष्टममनुक्रमम्।
सप्त पञ्च महावक्रं शेषं चारमिति स्मृतम्'।। इति।।

ग्रहयुद्धे जयिनो ग्रहस्य बलवृद्धिः पराजितस्य बलह्रासः।
ग्रहयुद्धबलमाचार्येण संहितायाम् -

'वियति चरतां ग्रहाणामुपर्युपर्यात्ममार्गसंस्थानाम्।
वैषम्यमतिदूराद्दृग्विषये समतामिव सम्प्रयातानाम्।।
आसन्नक्रमयोगात् भेदोल्लेखांशुमर्दनापसव्यैः।
युद्धं चतुष्प्रकारं पराशराद्यैर्मुनिभिरुक्तम्'।। इति।।
'युधि चोत्तरसंस्थाः चेष्टितवीर्ययुताः परिकल्प्याः'

इत्युक्तत्वादुत्तरसंस्थस्य जयः कल्प्यः। शुक्रस्य दक्षिणसंस्थस्य जय उच्यते।
तथा चोक्तमाचार्येण -
'सर्वे जयिन उदक्स्था दक्षिणसंस्थो जयी शुक्र, इति। अन्यच्च -

दक्षिणसंस्थः परुषो वेपथुमत् प्राप्य सन्निवृत्तोणुः।
अविरुढो विकृतो निष्प्रभो विवर्णश्च यस्स जितः।
उक्तविपरीतलक्षणसम्पन्नो जयगतो विनिर्दिष्टः'।। इति।।

तत्र वीर्यप्रमाणन्तु युध्यतोर्ग्रहयोः विक्षेपयोस्समदिशोरन्तरेण विदिक्स्थयोः योगेन तयोः बलान्तरं हरेत्। लब्धं फलं जयिनो ग्रहस्य बले योजयेत्। पराजितस्य ग्रहस्य वीर्यात् शोधयेत्। अथ चेष्टाकेन्द्रानयनमुच्यते। ग्रहाणां मध्यमं स्फुटञ्चानीय तयोरन्तरमर्धीकृत्य शीघ्रोच्चे संस्कुर्यात्। स्फुटान्तमध्यमेधिके शीघ्रोच्चे युज्यात्। स्फुटान्मध्यमेऽल्पे शीघ्रोच्चात् शोधयेत्। एवं भूताच्छीघ्रोच्चात् स्वस्फुटं त्यजेत्। कुजादीनां चेष्टाकेन्द्रं भवति। चन्द्रार्कयोस्सायनांशौ स्फुटावेव चेष्टाकेन्द्रे भवतः। कुजादीनां चेष्टाकेन्द्रं षड्राश्यधिके चक्राद्विशोध्य शिष्टं भागीकृत्य त्रिभिर्भजेत्। चेष्टाबलं भवति। सायनांशावर्कचन्द्रौ राशिनवकादपोह्य षड्राश्यधिके चक्राद्विशोध्य शिष्टं राशिं दशभिः भागान् विंशत्या च हत्वा भागादीन् षष्ट्यारोप्य स्थितं षष्टिभ्यो वर्जयेत्। रविचन्द्रयोः चेष्टाबलं भवति। राशिनवकादधिके ग्रहाद्राशिनवकमपोह्य शिष्टत्तयोः पूर्ववच्चेष्टाबले भवतः। एवमानीतं बलं षष्टिवत् त्रिंशतोऽधिकं चेदपि सः ग्रहश्चेष्टाबलवान् इति।



अथ निसर्गबलमुच्यते। 'षष्टिरेकेषवस्सप्तदश षड्विंशतिस्ततः चतुस्त्रिंशत् त्रिवेदाङ्काः सूर्यादीनां निसर्गजा'षष्टिः एकपञ्चाशत् सप्तदश षड्विंशतिः चतुस्त्रिंशत् त्रिचत्वारिंशत् नव सूर्यादीनां निसर्गबलं षष्ट्यंशाः। एवमानीतानि षड्बलानि। एतानि शुभदृष्टिचतुर्थांशयुतानि पापदृष्टिचतुर्थांशवर्जितानि कुर्यात्। ततस्तानि शुद्धानि। तथा च पराशरहोरायाम् -

'शुभपापदृगब्ध्यंशयुतहीनानि तानि च।
षड्बलानि ग्रहाणां स्युरेवं गार्गी ममाथ च'।। इति।।

अथैतत् सर्वमादितः स्थानबलानयनादारभ्य श्रीधरपद्धत्यां स्पष्टमुक्तम्।
अत्रोच्यते -

'नीचोनन्तु ग्रहं भार्धाधिके चक्राद्विशोधयेत्।
भागीकृत्य त्रिभिर्भक्तं फलमुच्चबलं भवेत्।।
मूलत्रिकोणस्वर्क्षातिमित्रमित्रसमारिषु।
अतिशत्रुगृहे भूतवेदाः खाग्निर्नखास्तिथिः।
नागवेदाः करौ युज्यादिष्टादिफलनिर्णये।।
व्युत्पत्तेर्लोकयात्रायां विधौ चायं विनिस्सृतम्।
एषु त्रिषु विशेषोऽयमुच्चे षष्टिर्न नीचभे।।
चन्द्रशुक्रौ समांशस्थौ परे चौजांशगा अपि।
आदिमध्यावसानेषु द्रेक्काणेषु स्थिताः क्रमात्।।
पुन्नपुंसकयोषाख्या दद्युस्तिथिबलं ग्रहाः।
केन्द्रादिषु स्थितानाञ्च षष्टिस्त्रिंशत्तिथिक्रमात्।।
तद्भावसाधनैर्हत्वा षष्ट्या लब्धं बलं भवेत्।
खाग्निस्ववर्गगानां स्याद्वर्गास्तु बहवो यदि।।
एको ग्राह्यो नवांशानां स्थानवीर्यमिदं भवेत्।
अर्कात् कुजात् सुखं जीवात् ज्ञाच्चास्तं लग्नमार्कितः।।
खमिन्दोश्च सिताद्धित्वा त्रिभिर्भक्तञ्च दिग्बलम्।
आमध्याह्नादर्धरात्राद्दिवा रात्रिरिति क्रमात्।।

स्याज्जन्मापररात्रौ चेद्रात्र्यर्धात्तद्गतं भवेत्।
पूर्वाह्नं तद्गते युज्याद्रात्र्यर्धं तु द्विसङ्गुणम्।।
गुरुशुक्ररवीणान्तु दिवाबलमितीरितम्।
भौमचन्द्रशनीनान्तु षष्टितश्शोधितं त्विदम्।।
जन्म चेदपराह्ने चेद्दिनार्धात्तद्गतं भवेत्।
जन्म चेत्पूर्वरात्रे तु दिनार्धं तद्गते युतम्।।
द्विघ्नं नक्तं बलं भौमचन्द्रार्कीणां बलं भवेत्।
षष्टितश्शोधितं शुक्ररव्यार्याणां सदा विधिः।।
षष्टिरेव सदा ज्ञस्य दिवारात्रिबलं त्विदम्।
विशोध्येन्दो रविं शुक्रज्ञार्येन्दूनां बलं भवेत्।।
रविभौमशनीनान्तु षष्टेरूनन्तु पक्षजम्।
ज्ञार्कार्कीन्दुसितारास्स्युः पतयो दिवसस्य तु।।
दिनस्य रात्रेस्त्र्यंशाश्च तच्च जन्मघटीस्त्यजेत्।
षड्गुणन्तस्य वीर्यं स्यादब्दमासदिनाधिपाः।।
कालहोराधिपश्चापि तिथिं खाग्निं शरार्णवान्।
षष्टिं वीर्यं क्रमाद्दद्युरेवं कालबलं विदुः।।
सायनांशग्रहभुजाराशीनिष्वब्धिभिः सुरैः।
सूर्यैर्हत्वा च राशिस्स्याद् भागो भागः कला विदुः।।
आरोप्य राशिस्त्रीन्युज्यादर्कारार्यासितेषु तु।
मेषादिकेषु चन्द्राक्योस्त्रिराशिभ्यस्तु वर्जयेत्।।
आयनं बलमेवं स्याज्जूकादिस्थेषु चान्यथा।
रवेर्द्विगुणमेवं स्यादायनं बलमीरितम्।।
चेष्टाकेन्द्रं रवेः सोऽपि सत्रिभो भानुवर्जितः।
सायनांशोऽथ शीतांशुस्तिथिः स्यात्सा तु शीतगोः।।
त्रिभाधिकेऽर्कहीनश्च भौमादीनामथोच्यते।
मध्यस्फुटान्तरदलहीनाच्छीघ्रात् स्फुटादथ।।



मध्ये न्यूनेऽधिके युज्यात्तस्मात् स्वञ्च स्फुटं त्यजेत्।
चेष्टाकेन्द्रं भवेत् प्राग्वत् भागीकृत्य त्रिभिर्भजेत्।।
चेष्टाकेन्द्रं भवेच्चेष्टाकेन्द्रे षडधिके सति।
चक्राद्विशोध्य राश्यादीन् प्राग्वत् चेष्टाकरः स्मृतः।।
षष्टिरेकेषवस्सप्तदश षड्विंशतिस्ततः।
अब्ध्यग्निर्गुणचत्वारि नव नैसर्गिकं बलम्।।
रव्यादीनां क्रमात् प्रोक्तम् दृष्ट्युद्भवमथोच्यते।
शुभपापदृगब्ध्यंशयुतहीनं स्फुटं बलम्।।इति।।

आनीतं स्थानबलं पादोनत्रयञ्चेत् रविगुरुबुधाः स्थाने पूर्णबलिनः। चन्द्रशुक्रयोस्तु पादाधिके द्वे। भौममन्दयोस्सार्धञ्चेत् स्थानबलं पूर्णम्। तदूनाश्चेत् हीनबलिनः। अधिके किमुत वक्तव्यम्। एवमानीतं दिग्बलं अर्धाधिकञ्चेत् दिग्बलं पूर्णम्।

बलाधिक्यं निर्णेतुमाह पराशरः -

'अङ्काग्नयोङ्गरामाश्च खाग्निः करजलाकराः।
नवाग्नयस्सुराः खाग्निदशसङ्गुणिता इमे।।
रव्यादयस्तु बलिनो राशीनां स्वामिनो बलात्।
अधिकं पूर्णमेकन्तत् बलञ्चेत् बलिनो मताः'।। इति।।

एभ्यो हीनाश्चेत् हीनबलाः अधिकाश्चेदधिकबलाः यवनेश्वरमते विशेषोऽस्ति।

तथा च यवनेश्वरः -

'उक्तानि षड्बलान्येवं संयोगे षड्बलानि चेत्।
ग्रहाः पूर्णबला न्यूने न्यूनवीर्यास्तथाधिके।।
बलानां सप्त चेत् भावाः पूर्णवीर्या भवन्ति हि'।

यवनेश्वरपक्षोत्र श्रेयान्।

अथ स्थानादिबलानां बलसङ्ख्याफलत्वमाह पराशरः -

'गुरुसौम्यरवीणान्तु भूते षड्केन्दवो द्विजाः।
पञ्चाब्धयः खभूतानि करभूमिसुधाकराः।।

खाग्नयश्च क्रमात् स्थानदिक्चेष्टासमयायने।

सितेन्द्वोस्त्र्यग्निचन्द्रश्च खेषवः खाग्नयश्शतम्।।

चत्वारिंशत् क्रमात् भौममन्दयोः षण्णव क्रमात्।

त्रिंशत् खवेदास्सप्ताङ्गा नखश्चेत् बलिनो विंदुः'।। इति।।

अथ हरिदत्तः -

'पादहीनास्त्रयः स्थाने दिशि पादोनमेव च।

षडंशहीनं चेष्टायां अष्टांशोनन्द्विकं यदि'।।

इत्यादि पराशरमतानुसार्येव। एवं बलानयनप्रकारमन्यशास्त्रादानीयोक्तम्।

इति गोविन्दसोमयाजिकृतौ बृहज्जातकव्याख्यायां दशाध्याय्याख्यायां द्वितीयाध्यायः

# तृतीयाध्यायः
## वियोनिजन्माध्यायः

**क्रूरग्रहैस्सुबलिभिर्विबलैश्च सौम्यैः**
**क्लीबे चतुष्टयगते तदवेक्षणाद्वा।**
**चन्द्रोपगद्विरसभागसमानरूपं**
**सत्त्वं वदेद्यदि भवेत् स वियोनिसंज्ञः।। १।।**

अथ वियोनिजन्माध्याय उच्यते। विविधयोनीनां तिर्यक्स्थावरादीनां जन्म तत् वियोनिजन्मा। कालात्मा विधातैव व्यञ्जयति।

तथा च सारावल्याम् -

'समभिव्यनक्ति होरा स्थावरजङ्गमं यथा लोके।

कालनिमित्ताकारैर्देशेन च तत् प्रवक्ष्येह'।। इति।।

अथ 'क्रूरग्रहै'रित्यादि। क्रूरग्रहैर्बलयुतैः बलहीनैः सौम्यैः क्लीबग्रहेषु केन्द्रगतेषु तेषां दर्शने वा चन्द्रोपगतद्वादशभागसमानं सत्त्वं वदेत् स द्वादशांशो वियोनिश्चेदेवं वियोनिजन्म वक्तव्यम्। न नरभागेनेत्यर्थः। कीदृशोऽसौ सत्त्वः। चन्द्रद्वादशांशसमानम्। एतदुक्तं भवति वदेदित्युक्तत्वात् पृष्टं वा मुष्टिगतं नष्टं वा वदेदित्युक्तं भवति। जन्माधानयोः प्रश्ने चैतदुपयुज्यते इति सिद्धं भवति।

तथा च सारावल्याम् -

'आधाने जन्मनि वा प्रश्ने वा द्वादशांशके चन्द्रः।

यस्मिन्नवस्थितः स्यात् लग्नं वा तत्समं सत्वम्'।। इति।।

'लग्न'मित्युत्तरश्लोकगतमत्राप्यादेयं, अथवा स लग्नराशिर्वियोनिसंज्ञश्चेत् इति।

बुधे मन्दे वा केन्द्रगते तदवेक्षणाद्वा तयोः बुधमन्दयोः लग्नराशावक्षणादिति। लग्नराशेस्सिद्धत्वात्। 'स' इति लग्नराशिरप्यभिप्रेतः।

तथा च सारावल्याम् -

'क्रूरैस्सुबलसमेतैरितरैर्विबलैर्वियोनिलग्ने वा।
सौम्यार्किभ्यां केन्द्रे दृष्टे वाभ्यां वियोनिः स्यात्'।। इति।।

'विबलैश्च सौम्यै'रित्युक्तत्वात् अर्थात् सबलैः सौम्यैः मनुष्यजातयोऽप्यूह्याः।

तथा च कृष्णीये -

'प्रायेण शुभा बलिनो मानुषचिन्तान्तदाश्रये कुर्यात्।
देवानामुच्चगतौ त्रये तु नीचे तु नारकीयाणाम्'।। इति।।

'तदाश्रये' मनुष्यराश्याश्रये इत्यर्थः।

अर्थातरं - 'चन्द्रोपगद्विरसभागसमानरुपं' रसभागः षष्ठांशः द्वौ रसभागौ षष्ठांशौ राशेस्त्र्यंश इत्यर्थः द्रेक्काण इति सिद्धं भवति। तेन समानरुपं चन्द्रोपगत-द्रेक्काणसमानरुपम्। उत्तरश्लोके 'लग्नञ्च वियोनिसम्भवं' इत्युक्तत्वात् लग्नद्रेक्काण समानरुपं वा वदेत्। एतत् चोराद्याकृतिचिन्तायां चोराकृतिं, भोजनप्रश्ने भोक्तुराकृतिञ्च वदेत्।

तथा च कृष्णीये -

'यादृग्भवति विलग्ने द्रेक्काणो भवति तादृशश्चोरः।
केन्द्रगतो वा यादृग्ग्रहस्तु तादृग्विनिर्देश्यः'।। इति।।

अर्थान्तरम्। चन्द्रोपगतद्रेक्काणसदृशरुपं सत्त्वं वदेदिति चोराहृतद्रव्यं वान्तर्गतद्रव्यं वा वदेदित्यर्थः। धातुमूलजीवेषु यद्रव्यधारी द्रेक्काणः तद्द्रव्यं नष्टं चिन्तितं भवति।

तथा च कृष्णीये -

'दण्डामिषयष्टिधराश्शाखाफलमूलधारिणश्च तथा।
द्रेक्काणधान्यकरा वृक्षसमीपाश्रिताश्चैव'।। इति।।

'तदवेक्षणाद्वा' इत्यत्राप्यर्थान्तरमस्ति। 'तदि'ति क्रूरसौम्यविषयः तच्छब्दः। क्रूरसौम्यवीक्षणात् तदुक्तधातुमूलजीवाः नष्टमुष्टिचिन्तादिष्ववगन्तव्याः।



तथा च कृष्णीये -

'चन्द्रारोरगसौरैर्धातुर्मूलं किलार्कशुक्राभ्याम्।
जीवो जीवबुधाभ्यां होराचार्या वदन्त्येवम्।।
'द्विपदचतुष्पदविहगास्सङ्कुलपादाश्च चिन्तिता ज्ञेयाः।
द्रेक्काणसदृशरुपा ग्रहरुपाद्वा बलं ज्ञात्वा'।। इति।।

'चन्द्रोपगद्विरसभागसमानरुप'मित्यत्र चन्द्रोपगद्विरसभागरुपमिति वक्तव्ये 'समान' शब्दप्रयोगेण तदर्थस्सूचितः। मेषद्वादशांशे द्रेक्काणे वा मेषसमानचतुष्पदमपि वदेदिति। भक्ष्याहृताकाररुतादिभिः दुष्टश्रुतैस्समानत्वमूह्यम्। नगरारण्यजल-स्थलमनुष्यचतुष्पदविहङ्गसरीसृपराशिग्रहवशान्निरुप्य वदेदिति सूचितं 'समान' शब्देन।

**पापा बलिनः स्वभागगाः पारक्ये विबलाश्च शोभनाः।**
**लग्नञ्च वियोनिसंज्ञितं दृष्ट्वात्रापि वियोनिमादिशेत्।। २।।**

पापा बलिनः इत्यादि पापानां स्वभागगत्वं सौम्यानां परभागगत्वञ्च बुधशन्योश्चतुष्टयस्थितिहीनत्वञ्च पूर्वश्लोकादस्य श्लोकस्य विशेषः। 'लग्नञ्च वियोनिसंज्ञित'मित्यत्र पूर्वश्लोकोक्तचन्द्रद्वादशांशकस्य वियोनित्वेन न केवलं वियोनिर्वक्तव्या। 'लग्नञ्च' लग्नद्विरसांशकस्य च तादृशवियोनिश्चिन्त्या इति। 'दृष्ट्वा वदेदि'ति लग्नारूढचन्द्राणां बलाबलं दृष्ट्वा गुरुदैवतशास्त्रसेवापरिशुद्धबुद्धिः देशकालानुरुपं वदेदिति। 'लग्नञ्च वियोनिसंज्ञित'मित्यत्र वियोनिलग्नञ्च वियोनिसंज्ञितम्। वियोनिसंज्ञितमिति वा पाठः। वियोनेः सम्भवानाञ्चेति लग्नम्। 'दृष्ट्वा' इति। यथा मेषस्य उष्णशाकलघुभुक्सञ्चार-शीलत्वं चिह्नितशिरस्त्वं जलभीरुत्वं लोके दृश्यते तथा सर्वराशीनां आकृतिस्वभावादीनभ्यूह्य वदेदिति।

तथा च सारावल्याम् -

'मेषे शशिनि तदंशे छागादिप्रसवमाहुराचार्याः।
गोमहिषाणां गोंशे नररुपाणां तृतीयेंऽशे।।
तद्वत् चतुर्थभागे कूर्मादीनां भवेदुदकजानाम्।
व्याघ्रादीनां च परतः परतो ज्ञेयं नराणां च।।

वणिगंशे नररूपं वृश्चिकभागे तथैव भुजगाद्याः।
खरतुरगाद्या नवमे मृगादिमीनास्तथा दशमे।।
ज्ञेयाश्च तत्र वृक्षाः गुल्मास्तृणजातयश्चित्राः।
एकादशे नृवपुषो मत्स्या नानाविधाश्चान्त्ये'।। इति।।

**क्रियः शिरो वक्त्रगले द्वितीयः पादांसके पृष्ठमुरोऽथ पार्श्वे।
कुक्षिस्त्वपानोऽङ्घ्र्यथ मेढ्रमुष्कौ स्फिक्पुच्छ मित्याह चतुष्पदाङ्गे।।३।।**

'क्रियशिर' इत्यादि। मेषशिरः वक्त्रगले द्वितीयः। पादांसक इत्यादि एकैकपादोक्तानि मेषादिचतुष्पदाङ्गानि। अपानोऽङ्घ्रि इत्येकवद्भावः। मेढ्रमुष्कौ स्फिक्पुच्छमिति।

तथा च सारावल्याम् -

'मूर्धनि मेषो वृषभो मुखगलयोरंसपादयोर्मिथुनम्।
पृष्ठे चोरसि कर्किटहरिश्च पार्श्वद्वये युवती।।
तौलिः कुक्षौ कीटश्चापमपानांघ्र्योर्मेढ्रमुष्कयोर्मकरः।
स्फिजि पुच्छे घटमीनौ राशय एवं चतुष्पदाङ्गेषु'।। इति।

'कुक्षिस्त्वित्यत्र 'तु' शब्देनार्थान्तरं सूचितम्। मेषादितुलान्ताः दक्षिणभागे स्थिताः। मीनादिवृश्चिकान्ताः वामभागगताः।

तथा च सारावल्याम् -

'मेषादयस्तुलान्ताः सव्ये भागे चतुष्पदाङ्गेषु।
वामे त्वनिमिषघटमृगकार्मुकभवृश्चिकाश्चिन्त्याः'।। इति।।

'तु' शब्देनार्थान्तरमपि सूचितम्। पश्वादीनां सप्तमराशिः कुक्षिः। तेन क्षीरश्चिन्त्यम्। जलराशिर्वा जलग्रहयुतराशिर्वा भवति यदि क्षीरबाहुल्यम्। रसविशेषाश्चिन्त्याः। तथा च वृषाणां वाहनशक्त्यादि द्वितीयराशिना चिन्त्यम्। उदयराशिं शिरसि परिकल्प्य चतुष्पदाङ्गे शुभाशुभं चिन्त्यम्। 'अंघ्र्यथे'त्यत्रा'थ'शब्देन चतुष्पदानामङ्घ्रिबलं नवमराशिना चिन्त्यमिति सूचितम। मेढ्रमित्युक्तस्थाने चतुष्पदानां योनिश्चिन्त्यते इति।



**लग्नांशकाद्ग्रहयोगेक्षणाद्वा वर्णान् वदेद्बलयुक्ताद्वियोनौ।
दृष्ट्या समानां प्रवदेच्च सङ्ख्यां रेखां वदेत् स्मरसंस्थैश्च पृष्ठे।।४।।**

लग्नांशकादित्यादि। बलाधिकाद्वियोनौ शुक्लादिवर्णान् वदेत्।

तथा च सारावल्याम् -

'मेषादिभिरुदयस्थैरंशैर्वा ग्रहयुतैश्च दृष्टैर्वा।
स्वं स्वं वर्णं ब्रूयाद् गात्रे चिह्नं व्रणञ्चापि'।।

'रक्तश्वेत' इत्यादि राशिवर्णः। 'रक्तश्याम' इत्यादिग्रहवर्णः। अथवा लग्नांशात् नवांशात् द्वादशांशात् वा वर्णान् वदेत्। जातिभेदान् वदेत्। तथा घोराणां बिलवासिनां कथमुच्यते। वृश्चिकनवांशके वृश्चिकद्वादशांशके वा लग्नस्थे वल्मीकाधिवासिनां जन्म वक्तव्यम्। एवमन्येषां राशीनां स्वस्वस्थानजातानां सत्त्वानां स्वसदृशानाञ्च जन्म वक्तव्यम्।

तथा च सारावल्याम् -

'वृश्चिकभवने लग्ने तन्नवभागेऽथवा द्विरससंज्ञे।
बिलवासिनां प्रसूतिं घोराणां निर्दिशेत्तत्र।।
गोधानां सर्पाणां लोमशानां च शल्यकानां च।
मूषिकबिलेशयानां राशिमताञ्चैव कीटानाम्।।
लूतानां नकुलानां वृश्चिकषड्बिन्दुजालकानाञ्च।
अविषाणां सर्पाणां श्वभ्राश्मनिवासिनाञ्चैव।।
हयवदने च विलग्ने द्वादशभागे नवांशके वापि।
पश्यति नरेन्द्रस्तत्रोत्पत्तिर्भवेदेषाम्।।
वाजिखराश्वतराणां गोमहिषाणां तथोष्ट्राणाम्।
गुरुवर्णतुल्यरूपान् प्रवदेन्मतिमान् बलेनैव।।
मृगभवने लग्नस्थे तन्नवभागेऽथवापि सूर्यांशे।
आरण्यानां सूतिं सत्त्वानां निर्दिशेत् क्रमशः।।
नागानां खड्गानां वृकशरभवराहवानराणाञ्च।
ऋक्षोग्रसृगालानां व्याघ्रादीनां भवेत् सूतिः।।
मीने मीनांशे वा तज्जे सूर्यांशकेऽपि वा लग्ने।

गुरुदृष्टे विज्ञेयो बहूदकोत्थास्तथा सत्वाः।।
मेषे मेषांशे वा भौमेन निरीक्षिते तदाजावी।
वृषभे च वदेत्तद्वत् गोमहिषाद्यांस्तदा भृगुणा।।
स्वं स्वं पूर्वविलग्नं स्वैस्स्वैर्दृष्टेऽथवा भवति।
स्वभवनसदृशान् सत्त्वान् प्रवदेदविशङ्कितं तत्र।।
ग्राम्यगृहेषु नवांशाः पञ्चमनवाष्टराशिसंयुक्ताः।
आरण्यानां सूतिं ग्रामेषु विनिश्चितां कुर्युः'।। इति।।

एवं स्वस्वपतिदृष्टा राशयः स्वसदृशसत्त्वं कुर्वन्ति। 'लग्नांशकात्' स्वपतिग्रहयुक्तदृष्टात् वियोनौ वर्णान् वदेदिति 'लग्नांशकात् ग्रहयोगेक्षणाद्वा' इत्युक्तग्रन्थस्यान्वये कल्पितोऽर्थः। कथं बहुषु सत्त्वेषु कल्पितेषु एको निर्धार्यते, उच्यते नामनिरूपणात् कथं नामनिरूपणमिति चेत् तदप्यनेनैव कल्प्यते। लग्नांशकात् ग्रहयोगेक्षणाच्च 'वर्णान्' वदेत् नामाक्षराणि वदेत् बलवशेनेति। तथा च राश्यक्षराणि शास्त्रान्तरोक्तानि।

'आद्येदरामाग्नियुगानि वर्णाः काल्पञ्चवर्गाय चतुष्टयञ्च।
क्रमेण मेषादिषु योजनीयाः शेषास्तु षष्ठे भगणागमज्ञैः'।।

एतदन्यथा चोक्तम् -

'त्रिंशत्तु द्रामिला वर्णा मीनाजाद्युत्क्रमक्रमात्।
कन्या सिंहान्तिके क्षेप्याश्चतुर्विंशद्यथाक्रमम्।।
लादिषट्कं पुनरपि द्विवारं योजयेद् बुधः।
षट्त्रिंशत्सु दृगाणेषु वर्णसंस्थितिरीदृशी'।। इति।।

राश्यक्षराणि द्विविधान्युक्तानि। अथ ग्रहाक्षराणि

'अ, इ, उ, ए, ओ भूता वर्णास्सप्तवर्गाश्च स्वराः।
क्रमादर्कारशुक्रज्ञजीवार्कीन्दुरगात्मकाः'।। इति।।

यो ग्रहो लग्नं पश्यति तत्र स्थितो वा तद्वर्णादि नष्टमुष्ट्यादिचिन्तादिषु नामाद्यक्षराद्यूह्यम्। राशिवशान्नामाक्षरसङ्ख्याः

'द्व्यक्षरं च चरे राशौ स्थिरे तु चतुरक्षरम्।
उभये वर्णत्रयं विद्यात् नामभेदसमन्वितम्'।। इति।।



अस्य श्लोकस्यापरार्धस्यार्थः उच्यते। 'दृष्ट्या समानं' इति यावन्तो ग्रहा लग्नं पश्यन्ति तावन्तो वियोनिगतान् वदेदिति। यत्र यत्र सङ्ख्याकरणमिष्यते तत्र तत्रानेन सङ्ख्यां वदेदिति नष्टद्रव्यसङ्ख्या वा लाभद्रव्यसङ्ख्या वा पुत्रसङ्ख्या वा सर्वसङ्ख्याप्यनेन वक्तव्या। यावद्भिः किरणैः ग्रहो लग्नं पश्यति तावती सङ्ख्या वदेत्' इति। यावन्तो ग्रहा पुत्रराशिं पश्यन्ति तावतः पुत्रान् वदेदिति।

तथा चोक्तम् -

'यावन्तो वीक्षन्ते पुत्रगृहं पुत्रकास्तु तावन्त'।। इति।

'रेखां वदेत् स्मरसंस्थैश्च पृष्ठे' सप्तमस्थैश्च पृष्ठे सप्तमस्थैः ग्रहैः वियोनौ पृष्ठरेखां वदेत्।

तथा च सारावल्याम् -

'सप्तमसंस्थः कुर्यात् पृष्ठे रेखां स्ववर्णसमाम्।
वीक्षन्ते यावन्तो वियोनिवर्णाश्च तावन्त'।। इति।।

**खगे दृगाणे बलसंयुतेन वा ग्रहेण युक्ते चरभांशकोदये। १**
**बुधांशके वा विहगाः स्थलाम्बुजाः शनैश्चरेन्द्वीक्षणयोगसम्भवाः।।५।।**

'खगे दृगाण' इति। पक्षिदृगाणे उदयति बलवद्ग्रहयुक्ते चरांशके लग्ने बुधांशके वा उदयति विहगाः नष्टाश्चिन्तिताः मुष्टिगताः वा जाता वा पक्षिणो भवन्तीत्यर्थः। कीदृशाः विहगाः इति विशेष उच्यते। स्थलाम्बुजाः स्थलराशावुदयता स्थलजाः, जलराशावुदयता जलजाः। यथाक्रमेण 'शनैश्चरेन्द्वीक्षणयोगसम्भवाः' स्थलाम्बुजाः विहगाः। शनैश्चरेक्षण योगसम्भवैः स्थलजाः, इन्द्वीक्षणयोगसम्भवैः जलजाः इति। तत्र शनैश्चरशब्देन स्थलचराः ग्राह्याः इन्दुशब्देन जलचराः च। जलशब्देन चतुर्थस्थानं स्थलशब्देन दशमं च ग्राह्यम्।

तथा च सारावल्याम् -

'विहगोदितदृगाणे ग्रहेण बलिना युते च चरभांशे।
बुधभांशे वा विहगाः स्थलाम्बुजाश्शनिशशीक्षणाद्क्रमशः।।
लग्ने जलजे बन्धौ पक्षी तद्वीक्षितेऽपि वा जलजः।
स्थलजो वा च तद्दृष्टे ग्रहवर्णसमस्थलप्रभवः'।। इति।।

पुनरपि तत्रैव विशेष उक्तः।

तथा हि -

'स्थलजलराशिविभागाः नागरभवनेषु लग्नसंस्थेषु।
स्थलजलचरसत्वानां जनयन्ति भवं हि शरालिकादीनाम्।।
उदयति वणिग्विलग्ने तद्रेक्काणे सितेन सन्दृष्टे।
शुकशारिकान्यपुष्टाश्चकोरभासाश्च जायन्ते।।
सिंहोदये तदंशे रविणाथ निरीक्षिते सूतिः।
कुक्कुटमयूरतित्तिरिपारावतवञ्जुलादीनाम्।।
पौरग्रहसंयुक्तैर्दृष्टैर्वा ग्रामनगरखेटानाम्।
प्रासादगृहगतानामुत्पत्तिः पूर्ववत् ज्ञेया'।। इति।

एतत् सर्वं बलयुतेन ग्रहेणेति 'बल'कथनेनावगन्तव्यम्। तत्र बुधशनिचन्द्राणां पक्षित्वमपि सूचितम्। व्याधिप्रश्ने खगे दृगाणे खगते दशमगते राशौ बलवत् पक्षिग्रहयोगे पक्षिग्रहपीडनव्याधिरित्याद्यूह्यम्।

**होरेन्दुसूरिरविभिर्विबलैस्तरूणां**
**तोयस्थले तरुभवोंऽशकृतः प्रभेदः।**
**लग्नात् ग्रहस्थलजलर्क्षपतिस्तु यावां-**
**स्तावन्त एव तरवः स्थलतोयजाताः।। ६।।**

'होरेन्दु'इत्यादि। होरेन्द्वादिभिर्बलरहितैर्मूलयोनिर्वक्तव्या। 'तरु'शब्देन मूलयोनिरुच्यते। एवमन्वयः। 'विबलैः होरेन्दुसूरिरविभिः तरूणां सम्भवो भवति'। पूर्वश्लोकगत 'सम्भव' शब्दोऽत्राध्याहर्तव्यः। 'तोयस्थले तरुभवोंऽशकृतप्रभेदः' अंशेन स्थलजलचारिणः प्रभेदः यस्य तरुभवस्य तरुजन्मनि इति।

तथा च सारावल्याम् -

'लग्नार्कसूरिचन्द्रैरबलैश्शेषैश्च मूलयोनिः स्यात्।
स्थलजलभवनविभागो वृक्षादीनां प्रभेदकरः'।।



अत्र 'शेषै'श्चेति सर्वैश्च बलहीनैः मूलयोनिरिति। तदस्मदाचार्येण नोक्तम्।

होरेन्दुसूरिरवीणामेव सर्वत्र प्राधान्येन कार्यकारणत्वमिति। होरेन्दुसूरिरवयो विबलाश्चेत् जाताः पुरुषाः तरुवदात्मप्रभावहीनाः पराधीनाः भवन्ति इति सूचितम्। तदुत्तरत्र वक्ष्यति च -

'राश्यंशपोष्णकरशीतकरामरेड्यैर्नीचाधिरिपांशकगतैररिभागगैर्वा।
एभ्योऽल्पमध्यबहुभिः क्रमशः प्रसूता ज्ञेयास्स्युरभ्युपगमक्रयगर्भदासाः'।। इति।।

'लग्नाद् ग्रह' इत्यादि अनेन सर्वत्र सङ्ख्याकरणविनियोगः। तथा चोक्तम् -

'लग्नाद्यावति भे पापस्तावत्यब्देऽह्नि मासि वा।
पक्षेक्षणेयने चर्तौ लग्नेशस्योदिते व्यथा'।। इति।।

तथा चोक्तमन्यत्र -

'उदयर्क्षाच्चन्द्रर्क्षं भवति तु यावद्दिनैस्तु तावद्भिः।
आगमनं स्याच्छत्रोर्मध्ये यदि न ग्रहः कश्चित्'।। इति।।

**अन्तस्साराञ्जनयति रविर्दुर्भगान् सूर्यसूनुः**
**क्षीरोपेतांस्तुहिनकिरणः कण्टकाढ्यांश्च भौमः।**
**वागीशज्ञौ सफलविफलौ पुष्पवृक्षांश्च शुक्रः**
**स्निग्धानिन्दुः कटुकविटपान् भूमिपुत्रोऽपि भूयः।। ७।।**

'अन्तस्सारान् जनयती'ति। 'अन्तस्सारान्' अन्तर्गतान् सारान् चन्दनादीन् स्थलजान् नालिकेरादीन् निष्पत्रांश्च जनयति। सूर्यसूनुर्दुर्भगान् प्रियङ्गुविषवृक्षादीन् अभोज्यान् जनयति। तुहिनकिरणः क्षीरोपेतान् जलोपेतान् जलजान् हृद्यान् स्निग्धांश्च भक्षणादीनि च जनयति। भौमः कण्टकाढ्यान् तालवेण्वादीन् कटुकविटपान् क्रूरविटपान् मरीचसर्षपाद्यांश्च स्थलभूरुहान् चूतपनसाद्यांश्च जनयति। वागीशज्ञौ सफलविफलौ जनयतः विफलमिति कन्दसूरणपत्रवल्लीप्रधानान् वृक्षान् जनयति बुधः। वागीशस्सफलवृक्षं जनयति स्थलजलमिश्रत्वात् स्थलाम्बुजान् फलप्रधानान् पनसादीन् जनयति। 'हेमाश्वात्मज कुञ्जराम्बरचय' इत्यत्राम्बरफलदत्वात् वस्त्राणि च जनयति। 'पुष्पवृक्षांश्च शुक्रः'

पुष्पप्रधानान् 'च'कारात् फलपत्राधिकांश्च स्नेहवतो वृक्षान् जनयति इति। एतन्नष्टमुष्टिचिन्तासु उपयुज्यते भोजनप्रश्ने च।

**शुभोऽशुभर्क्षे रुचिरं कुभूतले करोति वृक्षं विपरीतमन्यथा।**
**परांशके यावति विच्युतः स्वकात् भवन्ति तुल्यास्तरवस्तथाविधाः।। ८।।**

'शुभोऽशुभर्क्षे' इति। अत्र राशेराधारत्वाद्देशस्याशुभत्वं; ग्रहस्याधेयस्य शुभत्वात् वृक्षस्याधेयस्य शुभत्वम्। अन्यथा विपरीतम्। सर्वत्राधाराधेययोः गुणदोषनिरूपणं राशिग्रहाभ्यां कर्तव्यमित्युक्तं भवति। भार्याधिपः स्वयं शुभश्चेत् अशुभराशौ कुगृहजाता शुभा भार्या भवति। विपरीते विपरीतम्। लग्नाधिपेन स्ववासभूमिरप्यूह्या। लग्नाधिपोऽशुभराशौ स्थितश्चेत् दृङ्मनसोरप्रियदेशे स्ववासोऽप्यूह्यः। लग्नाधिपः शुभराशौ स्थितश्चेत् दृङ्मनसोरपि यद्देशे रुचिः सा भूमिरभ्यूह्यः। शुभाशुभदृष्टियोगवशादपि चिन्तनीयम्। चरराशौ चरांशके स्थितश्चेत्सञ्चारशीलः। विपरीते विपरीतम्। स्थलराशौ स्थितश्चेत् प्रकाशदेशे स्थितिः। जलराशौ स्थितश्चेत् गूढदेशे स्थितिः। एवं धनस्थापनप्रदेशोऽपि निरूपणीयः इति। 'परांशक' इत्यादि तदंशकपर्यन्तं गणिते या सङ्ख्या सम्पद्यते सा सङ्ख्या तरूणाम्। लग्नांशकाद्यंशकानां स्थलजलत्ववशात् तरूणां स्थलतोयजत्वम्।

'तरु' शब्दोऽत्र पदार्थवाचकः कालप्रमाणनिर्णये लग्नांशाधिपतेः अयनादिकालेषु यः काल उक्तः स एभिरंशैः गुणनीयः स अयनादिकालः कार्यसिद्धाविति। सङ्ख्याकरणे तु राशेर्बलाधिके 'लग्नाद्ग्रह' इति पूर्वोक्तो विधिः, अंशकस्य बलाधिक्ये अयं विधिः। 'लग्नात् ग्रहस्थलजलर्क्षपतिस्तु यावान्' इति पुर्वोक्तविधौ लग्नात् लग्नोदितनक्षत्रादारभ्य फलकारको ग्रहो यस्मिन्नक्षत्रे स्थितः तन्नक्षत्रपर्यन्तं गणिते यावत् सङ्ख्या तावद्भिः दिनैर्मासैस्संवत्सरैर्वा चरादिराशिवशात् कल्पितैः फलसिद्धिरिति।

तथा चोक्तं षट्पञ्चाशिकायाम् -

'ग्रहस्सर्वोत्तमबलो लग्नाद्यस्मिन् गृहे स्थितः।
मासैस्तत्तुल्यसङ्ख्याकैर्निवृत्तिं यातुरादिशेत्'।।

अथवा ऋक्षपतिश्चन्द्रः लग्नाद्यस्मिन् नक्षत्रे स्थितः चन्द्रः तावद्भिर्दिवसैरागमनं भवति।



तथा च षट्पञ्चाशिकायाम् -

'उदयर्क्षाच्चन्द्रर्क्षं भवति तु यावद्दिनैस्तु तावद्भिः।
आगमनं स्याच्छत्रोर्यदि मध्ये न ग्रहः कश्चित्'।। इति।।

तथा चोक्तं कृष्णीये -

'लग्नाच्चन्द्रो यतिमे ततिमे दिवसे भवेद्रोगः।
सौम्याः पश्यन्तीन्दुं यतिमे ततिमे सुखी दिवसे'।। इति।।

'लग्नात्' लग्नगतनक्षत्रात् 'राशौ' राशिगतनक्षत्रे, इत्युपदेशः। 'शुभोऽशुभर्क्षे रुचिरं कुभूतल'मित्यत्र रुचिरं श्रद्धेयं दर्शनेन स्वादु ग्राह्यं न इत्यर्थः शुभर्क्षे अरुचिरं अश्रद्धाकरं पथ्यमित्यर्थः।

तथा च कृष्णीये -

'क्रूरक्षेत्रे क्रूरैर्दृष्टे भोजनपानलेपनायोग्याः।
सौम्यक्षेत्रे सौम्यैर्दृष्टे लेप्याश्च भोज्याश्च'।।

'अन्तस्सारान्' इत्यादिश्लोकेऽपि 'पुष्पवृक्षांश्च शुक्र' इत्यादिशुभवृक्षान्, भौमस्य विटपप्रधानान्, रवेरन्तस्सारान्, गिरिद्रुमान्, चन्द्रस्य स्निग्धान् कदल्यादीन् गुरोस्सफलान् क्रमुकादीन्, शनेर्दुर्भगान् तालादीन्, बुधस्य फलोत्पत्तौ नश्वरान् वेण्वादींश्च कथयेदिति। एतत् कृष्णीयेऽप्युक्तम् -

'शुभतरुविटपगिरिद्रुमकदलीक्रमुकादितालवेणूनाम्।
शुक्रमहीसुतरविशशिगुरुयमसौम्यैर्वनानि स्युः'।। इति।।

इत्याद्यस्मिन्नध्यायेऽर्था विज्ञेयाः। तानाचार्यः स्वयमपि कथयितुं न शक्नोति केचिदर्थाः मया विदितास्ते तत्र लिखिताः इति।

इति गोविन्दसोमयाजिकृतौ बृहज्जातकव्याख्यायां दशाध्याय्याख्यायां
तृतीयाध्यायः

# चतुर्थाध्यायः
## निषेकाध्यायः

कुजेन्दुहेतु प्रतिमासमार्तवं गते तु पीडर्क्षमनुष्णदीधितौ ।
अतोऽन्यथास्थे शुभपुङ्ग्रहेक्षिते नरेण संयोगमुपैति कामिनी ।। १।।

अथ निषेकाध्याय उच्यते। कुजेन्दुहेत्विति। कुजेन्दुहेतुः यस्य तत् कुजेन्द्वोर्हेतु आर्तवकारणं तत् सफलञ्च कुजेन्दुशब्देनोच्यते। कुजशब्देन पित्तमुक्तम्। इन्दुशब्देन शोणितमुच्यते। पित्तेन शोणिते क्षुभिते स्त्रीणामार्तवं स्यात्।

तथा च सारावल्याम् -

'इन्दुर्जलं कुजोऽग्निर्जलमसृगथवाग्निरेव पित्तं स्यात्।
एवं रक्ते क्षुभिते पित्तेन रजः प्रवर्तते स्त्रीषु'।।

पित्तशोणितप्रकृत्योश्चन्द्रकुजयोः सम्बन्धे सति तद्विकृतस्यार्तवस्य साफल्यमित्यर्थः। ग्रहाणामन्योन्यसम्बन्धेषु दृष्टिरेव प्राधान्येन उच्यते। यस्मिन् राशौ ग्रहो वा ग्रहस्य दृष्टिर्वा भवति तत्र स्वशक्तिसम्पातो भवति। 'अशुभगदिता योगा याप्या भवन्ति शुभेक्षिताः' इत्येकत्र, 'दृष्टस्तु शुभैर्न यदा' इत्यन्यत्र, 'यदि न च शुभैर्वीक्षितः शक्तिमद्भिः' इत्यपरत्र वक्ष्यमाणत्वात् दृष्टेः प्राधान्यमस्तीति सिद्ध्यति। ननु संयोगादपि दृष्टेः प्राधान्यं विद्यते। तथा च वक्ष्यति।

'जनयति नृपमेकोऽप्युच्चगो मित्रदृष्टः।
प्रचुरधनसमेतं मित्रयोगाच्च सिद्धम्'।। इति।।

तस्मात् शोणितस्वरूपे चन्द्रे पित्तस्वरूपेण कुजेन दृष्टे कुजकार्यपित्तेन चन्द्रकार्यशोणिते क्षुभिते यदार्तवं तदेव फलकारणं भवति। पुनरेतत् किं सर्वदा नहि? अनुष्णदीधितौ स्त्रियः पीडर्क्षे अनुपचयराशिं गते जातं रज एव सफलं भवति। गर्भनिमित्तं भवतीत्यर्थः।



तथा चोक्तम् -

'शीतज्योतिषि योषितोऽनुपचयस्थाने कुजेनेक्षिते।
जातं गर्भफलप्रदं खलु रजः स्यादन्यथा निष्फलम्'।। इति।।

शोणितस्वरूपे चन्द्रे स्त्रीणामुपचयराशिं गते शोणितप्राचुर्यात् गर्भाशयो न शुध्यते। तस्मिन् पतितं रेतः शिथिलं भवति। गर्भाशये न सज्यते इति चन्द्रस्य पीडर्क्षगतत्वमवश्यमपेक्षणीयम्। 'अतोऽन्यथास्थे' पुरुषस्य उपचयगते अनुष्णदीधितौ शुभपुंग्रहो गुरुरुच्चादिगतो भानुर्वा ओजराश्यादिस्थो बली बुधो वा तेष्वेकेन ईक्षिते कामिनी नरेण संयोगमुपैति ततो गर्भो भवतीत्यर्थः। 'कामिनी'शब्देन बालवृद्धानिषेधः कृतः, अथवा कामवती।

तथा च वाग्भटः -

'क्षामप्रसन्नवदनां स्फुरच्छ्रोणिपयोधराम्।
स्रस्ताक्षिकुक्षिं पुंस्कामां विद्यादृतुमतीं स्त्रियम्'।। इति।।

अर्थान्तरमुच्यते, विवाहसिद्धिर्भविष्यति नवेति प्रश्ने कृते 'अतोऽन्यथास्थ' इत्यादिना तन्निर्णय उच्यते। अतः पूर्वोक्तात् अन्यथास्थे अपीडर्क्षं गते गोचरफले जन्मराशेरारभ्य यस्मिन् राशौ चन्द्रः पीडां करोति तत् पीडर्क्षम्।

तदुक्तं रत्नमालायाम् -

'द्यूनजन्मरिपुलाभखत्रिगश्चन्द्रमाश्शुभफलप्रद उक्तः'।

इत्युक्तस्थानेभ्योऽन्यानि पीडर्क्षाणि। प्रश्नलग्नादपीडर्क्षे चन्द्रे शुभपुङ्ग्रहैर्गुरुरवि सौम्यैर्दृष्टे विवाहो भविष्यति।

तथा च षट्पञ्चाशिकायाम् -

'गुरुरविसौम्यैर्दृष्टः स्त्रीसुतमदायारिगश्शशी लग्नात्।
भवति तु विवाहकर्ता त्रिकोणकेन्द्राश्रितैः सौम्यैः'।। इति।।

कुजेन्द्वित्यादिना विवाहविघ्नः उच्यते। कुजेन्दुदृष्टियोगादौ आर्तवं रजस्वलात्वादग्राह्यत्वम्। चन्द्रे च पीडर्क्षं गते दुर्लभत्वमित्यादि सूचितम्। अन्यत्रापि स्त्रीसंयोगप्रश्ने अयमेव विधिः 'कामिनी नरेण संयोगमुपैती'त्युक्तत्वात्।

**यथास्तराशिर्मिथुनं समेति तथैव वाच्यो मिथुनप्रयोगः।**
**असद्ग्रहालोकितसंयुतेऽस्ते सरोष इष्टैः सविलासहासः।। २।।**

यथास्तराशिरिति। येन प्रकारेणास्तराशिर्मिथुनं समेति - मिथुनकर्म करोतीत्यर्थः। मिथुनप्रयोगस्तथैव वाच्यः। द्विपदचतुष्पदकीटानां यो राशिः सप्तमराशिः तस्य मिथुनप्रयोगवदत्रापि वदेदिति।

तथा च सारावल्याम् -

'द्विपदादयो विलग्नात् सुरतं कुर्वन्ति सप्तमे यद्वत्।
पुरुषाणामपि तद्वद् गर्भाधाने समादेश्यम्'।। इति।।

किन्तु सप्तमे मेषे सति कामित्वं वनिताप्रियत्वं, वृषे तु सौभाग्यवत्वं प्रमदाप्रियत्वं, मिथुने तु सुरतोपचारकुशलत्वं, कुलीरे स्त्रीनिर्जितत्वं, सिंहे स्त्रीद्वेषित्वं, कन्यायां सुरतप्रियत्वं, तुलायां स्त्रीजितत्वं, वृश्चिके स्त्रियः सुखहीनत्वं, चापे पुरुषप्रधानत्वं मकरकुम्भयोरसुखावहं सुरतं, मीने स्त्रीजितत्वमित्यादि चिन्त्यम्। अस्तराशावोजे मिथुनप्रयोगोप्योजसङ्ख्या, युग्मे युग्मसङ्ख्या।

तथा च कृष्णीये -

'विषमेषु ग्रहराशिषु मैथुनमेकन्द्विवारमितरेषु।
बहुषो विभ्रमबहुलं भृगुकुजवर्गात्मके सुरतम्'।। इति।।

अस्तराशिः पुरुषश्चेत् पुरुषकर्तृकं, वनिता चेत् स्त्रीकर्तृकं, पुरुषराशौ स्त्रीग्रहयुक्तदृष्टे चोभयकर्तृको मिथुनप्रयोगः। अधिपतिवशादुक्तग्रहवशाद्वा वर्णाश्चिन्त्याः। तस्य ग्रहोच्चादिवशात् पुरुषस्य वनितायाश्चोत्कर्षादयश्चिन्त्याः। तद्ग्रहवशादाकृति-स्वभावादयश्चिन्त्याः। 'स्नेहश्शशाङ्का'दित्यादिना दीपश्चिन्त्यः, 'जीर्णं संस्कृत' मित्यादिना गृहविशेषाश्चिन्त्याः, 'शय्यास्वपी'ति खट्वालक्षणं चिन्त्यं, 'वस्त्रं स्थूल'मित्यादिना वस्त्रं चिन्त्यमिति। अन्यश्च 'कुजेन्दुहेतु'रिति कुजदृष्टे चन्द्रे पुष्पिता भुज्यते विटेन। रविणा दृष्टे राजपुरुषेण। शनिना भृत्येन। इत्येतत् 'राजानौ रविशीतगू' इत्यादिना सिद्ध्यति।



तथा च सारावल्याम् -

'चन्द्रे कुजेन दृष्टे पुष्पवती सह विटेन संयोगः।
राजपुरुषेण रविणा रविजेनाप्नोति भृत्येन'।। इति।।

जातकेऽपि सप्तमराशिना भार्यागुणाश्चिन्त्याः।'असद्ग्रहालोकित' इत्यादि सुगमः।

**रवीन्दुशुक्रावनिजैस्स्वभागगैर्गुरौ त्रिकोणोदयधर्मगेऽपि वा।**
**भवत्यपत्यं हि विबीजिनामिमे करा हिमांशोर्विदृशामिवाफलाः।। ३।।**

'रवीन्दु' इत्यादि। स्त्रीपुंसोरुपचयस्थैः रवीन्दुशुक्रावनिजैः गर्भसम्भवः। अत्रायं विभागः। चतुर्षु ग्रहेषूक्तेषु रव्यादिषु प्रथमोक्तो रविश्च, तृतीयः शुक्रश्च, ओजसङ्ख्यात्वात् पुंस उपचयर्क्षगावित्यवगन्तव्यम्। इन्दुकुजौ स्त्रियः। कथमत्रैषां उपचयगतत्वविधिरवगम्यते। 'अतोन्यथास्थ' इत्यत्र उक्त उपचयोऽत्राभिप्रेतः। यतोऽनेनैव स्वल्पजातके उक्तम् -

'बलयुक्तौ स्वगृहांशेष्वर्कसितावुपचयर्क्षगौ पुंसाम्।
स्त्रीणां वा कुजचन्द्रौ यदा तदा सम्भवति गर्भः।। इति।।

तथा च सारावल्याम् -

'गर्भावासा निपतति संयोगे शुक्लशोणितयोः।
उपचयगौ रविशुक्रौ बलिनौ पुंसस्स्ववर्गसम्प्राप्तौ।
युवतेर्वा कुजचन्द्रौ यदा तदा गर्भसम्भवो भवति'।। इति।।

आधानलग्नादप्युपचयगैः रवीन्द्वादिभिश्च गर्भलक्षणं विधीयते।

तथा च सारावल्याम् -

'शुक्रार्कभौमशशिभिः स्वांशोपचयस्थितैस्सुरेड्ये वा।
धर्मोदयात्मजस्थे बलवति गर्भस्य सम्भवो भवति'।। इति।।

अन्यदर्थान्तरमपि सूच्यते। 'रवीन्दु' रविरिति पिङ्गलागतो वायुः, इन्दुरिति इडानाडीगतो वायुः 'इडायाञ्चन्द्रमाः प्रोक्तः पिङ्गलायान्तु भास्करः' इति स्वरशास्त्रे प्रोक्तत्वात्। ताभ्यां इडापिङ्गलागताभ्यां चन्द्ररविभ्यां स्वनाडीगतेन चन्द्रसंज्ञेन वायुना स्त्री अपत्यं, स्वनाडीगतेन सूर्यसंज्ञेन वायुना पुमपत्यम्। एतदुक्तं भवति गर्भाधाने पुरुषस्य दक्षिणनाडिकायां श्वाससञ्चारश्चेत् पुरुषो जायते। वामनाडिकायां श्वाससञ्चारश्चेत्

कन्यापत्यम्। उभयत्र चेन्नपुंसकमिति। 'शुक्रावनिजाभ्यां' शुक्लशोणिते गृह्येते शुक्लेन 'स्वभागगेन' स्वभागाधिके पुत्रो जायते।

तथा च संहितायाम् -

'रक्तेऽधिके स्त्री पुरुषश्च शुक्ले नपुंसकं शोणितशुक्लसाम्ये।

तस्मादतः शुक्लविवृद्धिदानि निषेवितव्यानि रसायनानि'।। इति।।

'गुरौ त्रिकोणोदयधर्मगेऽपि वा'। येन ग्रहेण पुत्रसिद्धिरस्तीति कल्प्यते, तद्ग्रहराश्यंशकत्रिकोणगुरावपत्यं भवतीति। तथा च नष्टजातके - 'लग्नत्रिकोणेषु गुरुं त्रिभागगैः' इति वक्ष्यति। ननु शास्त्रान्तरेषु पञ्चमनवमस्थाने द्वे अपि 'त्रिकोण' शब्देनोच्यते। अत्र तु पञ्चममेव 'त्रिकोण' शब्देनोक्तम्। किं एतद् घटते? सत्यं न घटते। किमिदानीमेवमनुपपत्तिः? अथवा 'सुतभं त्रिकोण'मिति पूर्वोक्तं प्रत्ययितव्यमस्ति। किमत्रैवानुपपत्तिः? तत्र 'सुतभं त्रिकोण'मित्युक्तत्वात्। पुनः नवमस्थानं त्रित्रिकोणमिति कथितम्। तस्मादुभयत्र त्रिकोणसंज्ञास्तीति अवगन्तव्यम्। इदानीं त्रिकोणशब्देन बोद्धव्यस्य नवमस्थानस्य 'धर्म' शब्देनोपदिष्टत्वात् अनुपपन्नमेतदिव प्रतिभाति। अभिप्रायभेदवशात् नैष दोषः। 'लग्नत्रिकोणेषु गुरुं त्रिभागैर्विकल्प्य' इति वक्ष्यति। 'शशाङ्कलग्नोपगतैश्शुभग्रहैस्त्रिकोण'इति। तत्रोभयत्रापि त्रिकोणशब्देन पञ्चमनवमञ्च स्वेनैवाङ्गीकृतम्। अत्र प्रयोजनान्तरापेक्षयैवमुक्तम्। प्रयोजनन्तु त्रिकोणोदयधर्मसंस्थस्य गुरोः क्रमेण फलन्यूनत्वम्। अथवा 'त्रिकोणोदयधर्मसंस्थिते' इति वा पाठः। 'विबीजिना'मिति बालवृद्धानां वा पुरुषेषु केचित् विबीजिनः सन्ति तेषां वा विबीजिनः। कथं ज्ञायन्ते, आदित्यचन्द्रशुक्राणां त्रयाणां बलहानौ जाताः विबीजिनः। आदित्यस्तावदात्मा, चन्द्रो मनः, शुक्रः शुक्लम्। आत्मानुप्रविष्टेन मनसा सह चक्षुरादीन्द्रियाणि स्वविषयं प्रविश्य मिथुनकर्मणा स्त्रिया उदरं प्रविष्टं शुक्लं खलु गर्भबीजम्।

तथा च संहितायाम् -

'आत्मा सहैति मनसा मन इन्द्रियेण स्वार्थेन चेन्द्रियगणः क्रम एष शीघ्रम्।

योगोऽयमेव, मनसः किमगम्यमस्ति यस्मिन् मनो व्रजति तत्र गतोऽयमात्मा।।

जात्यं मनोभवसुखं सुभगस्य सर्वमाभासमात्रमितरस्य मनो वियोगात्।

चित्तेन भावयति दूरगतापि यं स्त्री गर्भं बिभर्ति सदृशं पुरुषस्य तस्य'।। इति।।



'अन्योन्यं यदि पश्यतश्शशिरवी' इत्यादि श्लोकेन क्लीबयोगान् वक्ष्यति। तेषु जाताः विबीजिनः इति केचित्।

**दिवाकरेन्द्वोः स्मरगौ कुजार्कजौ गदप्रदौ पुङ्गलयोषितोस्तदा।**
**व्ययस्वगौ मृत्युकरौ तथा युतौ तदेकदृष्ट्या मरणाय कल्पितौ।। ४।।**

दिवाकरेन्द्वोरित्यादि। दिवाकरः पिता, इन्दुर्माता।

तथा चोक्तम् -

'भानुः पिता च जन्तूनां चन्द्रो माता तथैव च।

तयोर्बलाबलं ज्ञात्वा पितृमातृगुणान् वदेत्'।।

अनेन श्लोकेनोक्तं क्लेशमरणं चतुरश्रगतैः पापैश्च चिन्त्यम्। 'उग्रग्रहैस्सितचतुरश्रसंस्थितैः' इत्यादिना सिद्ध्यति। 'दिवाकरेन्द्वो'रित्याद्युक्तलक्षणेन प्रश्नादौ पृच्छकसम्बन्धिनां स्त्रीपुरुषाणां रोगादि वाच्यम्।

**दिवार्कशुक्रौ पितृमातृसंज्ञितौ शनैश्चरेन्दू निशि तद्विपर्ययात्।**
**पितृव्यमातृष्वसृसंज्ञितौ तु तावथोजयुग्मर्क्षगतौ तयोश्शुभौ।। ५।।**

दिवारात्रौ च पितृमातृकग्रहकथनेन किञ्चिद्विशेषमाह। दिवार्कशुक्रौ पितृमातृसंज्ञितौ शनैश्चरेन्दू पितृव्यमातृष्वसारौ, निशि शनैश्चरेन्दू पितृमातरौ, अर्कशुक्रौ पितृव्यमातृष्वसारौ। 'दिवाकरेन्द्वो'रित्युक्तलक्षणमत्रापि चिन्त्यम्। अत्रायं विशेषोऽभ्यूह्यः। दिवा शुक्रस्य मातृकारकत्वात् कलत्रकारकत्वं न्यूनम्। तदा सप्तमाधिपस्यैव कलत्रकारकत्वम्। रात्रौ शनेः पितृकारकत्वात् प्रेष्यकारकत्वं दुर्बलम्। तदा षष्ठाधिपस्यैव प्रेष्यकारकत्वम्। अनेन श्लोकेन दिवानिशोः पितृमातृकारकत्वविशेषे विहितेऽपि दिवाकरेन्द्वोः पितृमातृकारकत्वं सम्यक् न हीयते।

तथा च सारावल्याम् -

'क्षीणे शशिनि सपापे माता म्रियते रवौ पिता तद्वत्।

बलिभिर्दृष्टे मिश्रैर्व्याधिः सौम्यैश्शुभं भवति।।

विपुलविमलमूर्तिस्स्वोच्चगो वा स्वराशौ
गुरुसितयुत इन्दुर्बोधनेनानुदृष्टः।
अतिशयसुखदाता पञ्चमे वापि मातुः
पितुरपि खलु तद्वत् भास्करः सर्वदैव'।। इति।।

अत्रापि 'दिवार्कशुक्रा'वित्यादिना विहितं पितृमातृकारकत्वं प्रमाणञ्चे दिवाकरेन्द्वोरित्यादिश्लोकस्य वैयर्थ्यं भवति। तस्मादस्मिन् ग्रन्थेपि तदा पितृमातृकारक मर्केन्द्वोरस्तीत्युक्तमेव। ननु 'दिवाकरेन्द्वो'रित्यादिनापि साक्षात् पितृमातृकारकत्वं विधीय चेत् किमर्थं पुङ्गलयोषितोरिति कथितम्? 'पुङ्गलयोषितो'रित्युक्तेन पितृमात्रोरिति नावगम्य चेत् पुङ्गलयोषितोरित्यस्य शब्दस्य कोऽर्थः? आधानादारभ्य प्रसवावधेः दिवाकरेन्दु पुङ्गलयोषितोर्गुणदोषचिन्तनम्। पुनर्जन्मनः प्रभृति दिवार्कशुक्रावित्यादिनेत्यपि योजनमे युज्यते, 'निगदितमिह चिन्त्यं सूतिकालेऽपि युक्त्या' इति वक्ष्यमाणत्वात्। 'पापैश्चन्द्रात् स्मरसुखगतै'रित्यनेन 'क्रूरर्क्षगतावशोभना'वित्यादिना च आधानादारभ्याप्रसवावधेः पितृमातृ न घटत इत्येतद् दुर्बलमेव। पितृमातृग्रहौ जन्मकाले यस्य नवांशके वर्तेते तद्दशाया पितृमातृमृतिः। 'क्रूरेऽष्टमे विधवता निधनेश्वरांशे यस्य स्थिते वयसि तस्य समे प्रदिष्टा' इति वक्ष्यमाणवशात् एतत्सिद्ध्यति।

तथा चोक्तम् -

'सूर्यो यस्मिन्नवांशे स्यात् तद्दशायां पितृक्षयः।
चन्द्रेण मातृनाशस्स्यादथ युक्तग्रहेण वा'।।

इति प्रमाणवशात् एतत् सूर्यशीतगुसंरुद्धनवांशद्वादशांशके गते चन्द्रे 'मृतिं विद्यात् पितृमात्रोर्यथाक्रमम्'। इत्युक्तानि लक्षणानि आपाततोऽस्मिन् शास्त्रे विमृष्टे सति सिद्ध्यति। पुनरर्थान्तरमप्यत्रोह्यम्। शुभग्रहयोश्चन्द्रशुक्रयोर्मातृकारकत्वं पापग्रहयोरर्कमन्दयोः पितृकारकत्वमप्युक्तम्। तेन शुभाः गुरुशुक्रबुधाः मातृपक्षाः। पापौ कुजमन्दौ पितृपक्षौ। एतत् प्रश्नादौ सम्बन्धिबन्धुनिरुपणेषूपयुज्यते।

तथा च कृष्णीये -

'पितृपक्षौ भौमयमौ मातुः पक्षा बुधोशनाङ्गिरसः।
पुंग्रहराश्योर्विषमाः स्त्रीग्रहराश्योस्समाः सङ्ख्याताः'।। इति।।



**अभिलषद्भिरुदयर्क्षमसद्भिर्मरणमेति शुभदृष्टिमयाते।
उदयराशिसहिते च यमे स्त्री विगलितोडुपतिभूसुतदृष्टे।। ६।।**

अभिलषद्भिरिति अर्थान्तरम्। उदयर्क्षमभिलषद्भिः उदयर्क्षनिरतैरित्यर्थः। शुभदृष्टिमयाते उदयर्क्ष इत्यर्थः। 'शुभदृष्टिमयाते' इत्युक्ते सति अपरार्धोक्ते योगे 'उदयराशिसहिते च यमे' इत्यत्र शुभदृष्टिरिति विशेषणं नान्वेति। 'शुभदृष्टिमयाते' इत्येवमुक्तस्य पूर्वार्धगतत्वात् पूर्वार्धोक्ते योग अर्थबहुलात् उदयर्क्षविशेषणत्वं स्यात्।

तथा च सारावल्याम् -

'उदयं यातैः पापैः सौम्यैरनवेक्षितैर्मरणं स्यात्' इति।

अपरार्धे अर्थान्तरम् उदयराशिसहिते च यमे शुभदृष्टिमयाते विगलितोडुपति-भूसुतदृष्टे यस्य स्त्री मरणमेति दृष्टौ सत्यां स्त्री मरणमेति। भूसुतदृष्टः इति भावार्थः। एषयोगोऽपि सारावल्याम् उक्तः -

'उदयस्थितेऽर्कपुत्रे क्षीणेन्दौ भौमसन्दृष्टे' इति।

अर्थान्तरम्। उदयर्क्षमभिलषद्भिरसद्भिर्निमित्तैः उपश्रुतिशकुनादिभिः स्त्री मरणमेति। शुभदृष्टिमयाते शुभशकुनदर्शनमप्राप्ते। 'उदयराशिसहिते च यमे' गुलिकशन्यादिप्रेतग्रहे अथवा यमशब्देन मरणसूचकानि निमित्तानि सूचितानि। 'विगलिशितोडुपतिभूसुतदृष्टे' उडुपतिशब्देन मन उच्यते। भूसुतशब्देन चक्षुरुच्यते। मनोदृग्भ्यां दुर्निमित्ते दृष्टे सतीत्यर्थः। एवं सर्वत्रास्तीति बोद्धव्यम्।

**पापद्वयमध्यसंस्थितौ लग्नेन्दू न च सौम्यवीक्षितौ।
युगपत् पृथगेव वा वदेन्नारी गर्भयुता विपद्यते।। ७।।**

'पापद्वयमध्यसंस्थितौ' इत्यादि, लग्नचन्द्रयोरुभयोः पापद्वयमध्यसंस्थितयोः संवादित्वं विद्यते। गर्भयुता विपद्यते इत्यनेन संवत्सरान्तर्विपद्यत इत्यर्थः। अर्थान्तरमुच्यते। पापद्वयं- कुजशनी। ताभ्यां सहिते लग्ने वा ताभ्यां दृष्टे वा गर्भपातो भवति। मध्यसंस्थितत्वं सहितत्वमेव। 'न च सौम्यवीक्षिता'वित्यनेन पापग्रहवीक्षितौ वा इत्यपि सूचितम्।

तथा च सारावल्याम् -

'अथवा निषेककाले विलग्नसंस्थौ यदा रुधिरमन्दौ।

तद् गृहगतेऽथवेन्दौ तदीक्षिते वा पतति गर्भः'।। इति।।

'अभिलषद्भि'रित्यादि पूर्वश्लोकेन लग्नेनायुर्निरूपणीयमित्युक्तम्। अनेन लग्नेन चन्द्रेण च निरूपणीयमिति सिद्धं भवति। 'युगपत् पृथगेव वा' इत्यत्र त्रिप्रकारः अन्वयः। युगपत् पृथगेव वा लग्नेन्दू इत्येकः। युगपत् पापद्वयमध्यसंस्थितौ। एकराशिगतपापद्वय-मध्यसंस्थितावित्यन्य इति द्वितीयः। निमित्तानि च सूचितानि। लग्नशब्देन देहो विवक्षितः। चन्द्रशब्देन मनः। तयोर्देहमनसोः पापद्वयमध्यगतयोः पापफलसूचकदुर्निमित्तगतयोः विपद्यते पृच्छकः। सुप्ताभ्यक्ताक्षिमर्दनछेदभेदशयनमुण्डनादि देहगतदुर्निमित्तम्। वधबन्धदुःखामङ्गलचिन्तावचनादि मनोगतदुर्निमित्तम् अध्वनि च प्रश्नकाले जायते चेत् कार्यकर्तुर्नाशो भवति इत्यर्थः। न च सौम्यवीक्षितौ शुभनिमित्तं न दृश्यते चेत् इत्यर्थः।

**क्रूरे शशिनश्चतुर्थगे लग्नाद्वा निधनाश्रिते कुजे।**
**बन्ध्वन्त्यगयोः कुजार्कयोः क्षीणेन्दौ निधनाय पूर्ववत्।। ८।।**

'क्रूरे शशिन' इत्यादि। चन्द्रात् लग्नाद्वा चतुर्थगते क्रूरे अष्टमे कुजे गर्भयुता नारी विपद्यते। लग्नात् बन्ध्वन्त्यगयोः कुजार्कयोः शशिनि क्षीणे सति सगर्भा नारी विपद्यते। अथवा 'पूर्ववदि'त्यनेन कुजार्कपापद्वययुक्ते क्षीणेन्दौ कुजेन वार्केण वा युक्ते क्षीणेन्दौ वा लग्नगत इत्यर्थः। तदा गर्भयुता नारी विपद्यते। पूर्ववदिति 'अभिलषद्भिरुदयर्क्ष-मसद्भिः' इत्युक्तवत् व्ययगतैः पापैः क्षीणेन्दौ लग्नगते सगर्भा नारी विपद्यत इति।

तथा च सारावल्याम् -

'लग्ने रविसंयुक्ते क्षीणेन्दौ वा कुजेऽथवा म्रियते।

व्ययधनसंस्थैः पापैस्तथैव सौम्यग्रहादृष्टैः'।। इति।।

निमित्तन्तु 'क्रूरे' वधबन्धादिकर्तरि तस्मिन् वेशमनि सम्प्राप्ते आयुधधारिणि वा निधनाश्रिते 'कुजे' वृक्षादौ पतति वा निधनं भवति। कुजार्कयोर्दीपादौ हते वा मनसि क्षीणे वा अशोभनं भवतीत्यर्थः।



**उदयास्तगयोः कुजार्कयोर्निधनं शस्त्रकृतं वदेत्तदा।**
**मासाधिपतौ निपीडिते तत्काले स्रवणं समादिशेत्।। ९।।**

उदयास्तगयोः कुजार्कयोरित्यादि। अत्र क्रमो न विवक्षितः।

तथा च सारावल्याम् -

'जामित्रगेर्कदृष्टे लग्नगे वा कुजे निषिक्तस्य।

गर्भस्य भवति मरणं शस्त्रच्छेदात् सह जनन्या'।। इति।।

अनेन युद्धप्रश्नादावुपयोगोऽस्ति। 'उदयास्तगयोः कुजार्कयोः' युद्धं महत् भवतीति द्रष्टव्यं कुजार्कयोः क्षत्रियत्वादाग्नेयत्वात् च। तत्रापि विशेषात् कुजस्य वधबन्धाधिपत्यं ऊह्यं तमोमयत्वात्। 'मासाधिपता'विति। अर्थान्तरं, मासाधिपतिर्गुरुः 'अयनक्षणे' त्यादिकालाधिपत्यवशात् मासाधिपतिर्गुरुः पुत्रकारके तस्मिन्निपीडिते गर्भपात इति।

**शशाङ्कलग्नोपगतैः शुभग्रहैस्त्रिकोणजायार्थसुखास्पदस्थितैः।**
**तृतीयलाभर्क्षगतैरशोभनैः सुखी च गर्भो रविणाभिवीक्षितः।। १०।।**

'शशाङ्कलग्नोपगतै'रित्यादि - एवं स्थितैश्शुभपापग्रहैः गर्भः सुखी पुष्टिमान् भवति। 'रविणाभिवीक्षितः' इति गर्भस्य विशेषणम्। कथमिति चेदुच्यते। गर्भशब्देन आधानलग्नं प्रश्नलग्नं वोच्यते लग्नदेहयोः भेदाभावात्।

तथा च सारावल्याम् -

'बलिभिर्बुधगुरुशुक्रैर्दृष्टेर्केण च विवर्धते गर्भः।

मासाधिपबलतुल्यैस्तैस्तैस्संयुज्यते भावैः।। इति।।

किमर्थं पुनः गर्भस्य रविवीक्षित इति विशेषत्वेनोक्तम्। प्रश्नजातकयोर्लग्नराशिः पुरुषस्स्वयं तद्वशात् पुरुषस्य शुभाशुभसर्वस्वं चिन्त्यं तदर्थम्। अनेन श्लोकेन भूयिष्ठप्रश्नफलं निरूपणीयम्।

तथा च सारसमुच्चये -

'विक्रमलाभविमुक्ताः पापाः सौम्यास्त्रिषड्व्ययाष्टमगाः।

व्याध्यादि दुःखदास्स्युर्गुलिकः केन्द्रत्रिकोणनिधनेषु'।।

अत्र षष्ठाष्टमव्ययेषु क्रूराणां शुभानां च स्थितिरशुभा भवतीत्युक्तम्। तथाप्यष्टमस्थस्य शुभस्यायुर्विषये शुभफलप्रदत्वं कथयन्ति। 'जायार्थ' शब्देनाष्टमस्थानमपि सूचितम्।

'सौम्यग्रहसन्दृष्टे लग्नयुते भवेद्विगतशोकः।
सकलत्रः सप्तमभे पञ्चमभे पुत्रसम्पदं विद्यात्।
आयुषि च दीर्घजीवः पुण्ये पुण्यालयससुखे वृद्धिः।। इति।।

अत्र प्रथमं लग्नगुणदोषाश्चिन्त्याः। लग्नस्य देहत्वात् पञ्चमनवमावपि तत्समावेव। तत्सूचनार्थं त्रिकोणं प्रथममुक्तम्।

तथा च विद्वज्जनवल्लभाख्ये प्रश्नशास्त्रे -

'पृष्ठोदये स्याद्यदि धर्मसंस्थः पापो भवेदात्मजसंस्थितो वा।
नाशस्तव क्षिप्रमिहास्ति नूनं इतोपसर्पेति वदेत्तदाशु।। इति।।

तथार्यासप्ततौ -

'पञ्चमनवमगतैः बुधगुरुशुक्रैर्यथेप्सितावाप्तिः।
षट्त्रिकलाभोपगतैः क्षितिसुतरविसूर्यजैस्तद्वत्'।। इति।।

किञ्च पञ्चमं पुत्रस्थानं बुद्धिस्थानञ्च। नवमं पितृस्थानं भाग्यस्थानञ्च। तस्माच्च त्रिकोणयोः लग्नसाम्यमस्ति। षट्त्रिकलाभोपगतैरित्यत्र षष्ठे पापाश्शुभा इत्युक्तम्। 'शशाङ्कलग्नोपगतै'रित्यत्र तृतीयलाभर्क्षगतैरित्येवमुक्तम्। तस्मात् षष्ठस्थानगानां पापानां स्थितिर्न प्रशस्ता। तत्रायं विशेषः देहविषये प्रश्ने षष्ठे पापस्थितिरप्रशस्ता, षष्ठस्थानस्य रोगसूचकत्वात्। 'व्रणकृदशुभः षष्ठे लग्नात्तनौ भसमाश्रिते' इति वक्ष्यति च। 'शशाङ्कलग्नोपगतै'रित्युक्तत्वात् चन्द्राल्लग्नाच्च निरूपणीयमिति स्पष्टमुक्तम्। ताभ्यां अन्ये भावाश्च चिन्त्याः तयोर्बलाधिकादिति सिद्धं भवति। 'बलाबलविकल्पेन तयोरुक्तं विचिन्तयेत्' इति वक्ष्यति। 'त्रिकोणजायार्थसुखास्पदस्थितै'रित्यत्र क्रमेण निरूपणीयमिति सूचितम्। आत्मनिरूपणादनन्तरं पुत्रस्थानं धर्मस्थानं वा निरूपणीयम्। गृहस्थस्य पुत्रस्थानम्। अन्येषां धर्मस्थानं पुरुषार्थोपयोगित्वात्। ततो गृहस्थस्य भार्यास्थानं तत एव गृहपतिः त्रिवर्गफलं साधयति। सर्वेषां कर्मणां धनसापेक्षत्वात् धनस्थानं विशेषात् चिन्त्यम्।



तथा चोक्तं वाग्भटेन -

'उत्तिष्ठेत ततोऽत्यर्थमर्थेष्वर्थानुबन्धुषु।
निन्दितं दीर्घमप्यायुरसन्निहितसाधनम्'।। इति।।

पुनर्बन्धुगृहं सुहृज्जनादि चिन्त्यं, पुनः कर्म निरूपणीयम् इत्यादि।

**ओजर्क्षे पुरुषांशकेषु बलिभिर्लग्नार्कगुर्विन्दुभिः**
**पुंजन्म प्रवदेत् समांशसहितैर्युग्मेषु तैर्योषिताम्।**
**गुर्वर्कौ विषमे नरं शशिसितौ वक्रश्च युग्मे स्त्रियं**
**द्व्यङ्गस्था बुधवीक्षणाच्च यमलं कुर्वन्ति पक्षे स्वके।। ११।।**

ओजर्क्ष इति। 'क्रूरस्सौम्यः पुरुषवनिते' इत्यत्र ओजराशीनां पुरुषसंज्ञोक्ता। तेन ओजराशौ ओजांशके मेषमिथुनादौ पुंस्त्वं भवति। लग्नस्यार्कस्य गुरोरिन्द्वोश्च ओजराश्यंशकयोः स्थितिश्चेत् निस्सन्दिग्द्धं पुंप्रजा भवतीति वक्तव्यम्। युग्मराशौ युग्मांशकगतैस्तैः सर्वैः योषितां जन्म स्त्रीराश्यवस्थाने स्त्रीसूचकत्वं वक्तव्यम्। किमत्र राशिगुणादेव पुंस्त्रीविभागो निरूप्यते। न च पुरुषग्रहयोरर्कगुर्वोः गुणोपि निरूपणीयो भवति। इह प्रकारान्तरमुच्यते। लग्नस्य लग्नांशकस्य ओजत्वे चन्द्रस्यापि साधारणस्य राश्यंशकयोरोजत्वे पुरुषकारकत्वं स्पष्टम्। 'प्रवदेत्' इत्यत्र उपसर्गवशादप्येतद् सिद्ध्यति। युग्मराश्यंशकत्वे तु चन्द्रलग्नयोः लग्नस्य स्त्रीत्वं चन्द्रस्यापि स्त्रीग्रहत्वात् स्त्रीराश्यंशकत्वात् स्त्रीत्वं व्यक्तम्। अर्कगुर्वोः स्त्र्याश्रितराश्यंशकयोः स्त्रीत्वम्। तस्मात् स्त्रीत्वलक्षणस्याधिक्यात् योषितां जन्म प्रवदेत् इत्युक्तम्।

पुनः 'गुर्वर्कौ विषम' इत्यादि। स्वतः पुरुषग्रहयोः गुर्वर्कयोरेकस्य पुंस्त्वेऽपि पुंस्त्वसूचकत्वम्। राश्यंशकयोः युग्मसंज्ञयोः स्थितयोः गुर्वर्कयोः स्त्रीसूचकत्वम्। ननु वक्रस्य 'नरास्तु शेषा' इत्युक्तविधिना पुंग्रहस्य पुंसूचकत्वं नोक्तं; स्त्रीसूचकत्वं उक्तं च कथमिदमुपपन्नं भवति, उच्यते। वक्रस्य तु नष्टादौ चोरादिपरिज्ञाने पुरुषसूचकत्वम्। 'नरास्तु शेषाः' इत्यत्र रविः पिता गुरुः पुत्रः कुजो भ्राताऽभिप्रेतः। पुत्रविषये तु 'पुत्रस्थानगतस्तु पुत्रमरणम्' 'पुत्रोऽवनेर्यच्छति' इत्युक्तस्य भौमस्य स्त्रीराश्यवस्थाने स्त्रीसूचकत्वम्।

तथा च प्रश्नशास्त्रान्तरे -

'आरूढलग्नच्छत्रेन्दुसुतधर्मास्तगे कुजे।
एषु वा तेन दृष्टेषु वक्तव्या त्वल्पपुत्रता'।। इति।।

अत्र तु 'शशिसितौ वक्रश्च युग्मे स्त्रियं कुर्वन्ती'त्युक्तं 'तत्र शशिसितयोः' सहपाठः कृतः वक्रश्चेति पृथगुपदेशः। तेनायमर्थो गम्यते, शशिसितयोर्युग्मराश्यवस्थाने वक्रस्यापि युग्मावस्थानं सूचकम्। 'ओजर्क्षे पुरुषांशकेष्वि'त्यनेन राश्यंशकयोराहत द्रव्यस्य विषमसङ्ख्यात्वं सूचितम्। 'पुरुषांशकेषु' प्रष्टृणां दक्षिणभागेषु 'कालाङ्गानी'ति कल्पनया ओजराशिस्पर्शे पुंजन्म व्यत्यये स्त्रीजन्म। किं बहुना। यद्यदोजसंज्ञं यद्यत् पुरुषसंज्ञकञ्च तत्तत् पुरुषसूचकम्। एतद्विपरीतं स्त्रीसूचकमित्यर्थः। अथ किञ्चिदर्थान्तरमप्यस्ति। ओजर्क्षे पुरुषांशकेषु स्थितैः बलिभिः लग्नार्कगुर्विन्दुभिर्जाताः पुंजन्मभाजो भवन्ति शक्ताः भवन्तीत्यर्थः। अन्यथा स्त्रीजन्मभाजश्चपलाः इत्यर्थः। शेषेण यमललक्षणमुच्यते।

**विहाय लग्नं विषमर्क्षसंस्थः सौरोऽपि पुञ्जन्मकरो विलग्नात्।**
**प्रोक्तग्रहाणामवलोक्य वीर्यं वाच्यः प्रसूतौ पुरुषोऽङ्गना वा।। १२।।**

विहाय लग्नमित्यादि। 'सौरोऽपी'त्यपिशब्दात् नपुंसकसंज्ञोऽपि विषमर्क्षसंस्थितिवशात् पुंजन्मकर इति सूचितम्। 'प्रोक्तग्रहाणा'मिति प्रोक्तानां रविचन्द्रकुजगुरुशुक्राणां मध्ये स्त्रीग्रहो बलवान् पश्यति, गतो वा पुत्रस्थानं यदि स्त्रीजन्म, पुंग्रहस्तथास्थितश्चेत् पुंजन्म। अर्थान्तरं वीर्यं कारणम्। रविगुर्वोः पुंस्त्वं चन्द्रशुक्रयोः स्त्रीत्वम्। तेषां पुंस्त्रीराशिगतत्वाद्यवलोक्य प्रसूतौ पुरुषो वाच्यः, अङ्गना वा। पुरुषचेष्टा वा यत्किञ्चित् पुरुषसंज्ञावशात् पुंजन्म, स्त्रीसंज्ञावशात् स्त्रीजन्म इति।

**अन्योऽन्यं यदि पश्यतश्शशिरवी यद्वार्किसौम्यौ तथा**
**वक्रो वा समगं दिनेशमसमे चन्द्रोदयौ चेत् स्थितौ।**
**युग्मौजर्क्षगतावपीन्दुशशिजौ भूम्यात्मजेनेक्षितौ**
**पुम्भागे सितलग्नशीतकिरणाः षट् क्लीबयोगाः स्मृताः।। १३।।**



'अन्योन्यं' इत्यादि एवं षट्क्लीबयोगाः उक्ताः न केवलमाधानप्रश्नकालाभ्यां नपुंसकजन्मसूचकाः। जातस्य जन्मकाले सति चेत् सन्ततिहानिकराः इति केचित्।

**युग्मे चन्द्रसितावथौजभवने स्युर्ज्ञारजीवोदया**
**लग्नेन्दू नृनिरीक्षितौ च समगौ युग्मेषु वा प्राणिनः।**
**कुर्युस्ते मिथुनं ग्रहोदयगतान् द्व्यङ्गांशकान् पश्यति**
**स्वांशे ज्ञे त्रितयं ज्ञगांशकवशाद्युग्मं त्वमिश्रैः समम्।। १४।।**

'युग्मे चन्द्रसिता'विति। अनेन श्लोकेन मिथुनयोगाः प्रदर्श्यन्ते। 'युग्मे चन्द्रसिता' वित्येकः। 'ओजभवनेन स्युर्ज्ञारजीवोदयाः' इति द्वितीयः। 'लग्नेन्दू नृनिरीक्षिता'विति तृतीयः। 'नृनिरीक्षितौ' नरग्रहनिरीक्षितौ। युग्मेषु वा प्राणिनः इति। प्राणिनो बलिनः बहुवचननिर्देशात् ज्ञारजीवोदया इति सिद्धं भवति।

**धनुर्धरस्यान्तगते विलग्ने ग्रहैस्तदंशोपगतैर्बलिष्ठैः।**
**ज्ञेनार्किणा वीर्ययुतेन दृष्टे सन्ति प्रभूता अपि कोशसंस्थाः।। १५।।**

धनुर्धरस्येति। अस्य योगस्य दुर्लभत्वात् फलमपि दुर्लभं भवति। उत्तरत्र 'लग्नात् पुत्रकलत्रभे' इत्याद्युक्तस्य पद्यस्य पुंस्त्रीनपुंसकत्वं एकद्वित्वबहुत्वञ्च 'ओजर्क्षे पुरुषांशकेष्वि' त्यादिभिः पञ्चभिः श्लोकैः निरूपणीयो भवति।

**कललघनाङ्कुरास्थिचर्माङ्गजचेतनता-**
**स्सितकुजजीवसूर्यचन्द्रार्किबुधाः परतः।**
**उदयपचन्द्रसूर्यनाथाः क्रमशो गदिता**
**भवति शुभाशुभञ्च मासाधिपतेः सदृशम्।। १६।।**

'कललेत्यादि। आधानकालादारभ्य सप्तसु मासेषु कललादीनि जायन्ते। तेषां कललादीनां दातारस्सितादयो मासाधिपाः भवन्ति। 'भवति शुभाशुभञ्च मासाधिपतेः सदृशम्' इत्युक्तत्वात् सितादयः प्रथमादिमासाधिपतय इति सिद्धं भवति। प्रथमादि सप्तसु मासेषु कललादि सप्तगर्भावस्था जायन्ते। परिशिष्टेषु त्रिषु मासेषु अष्टमे मासि क्षुत्तृष्णा, नवमे मास्युद्वेगः, दशमे मासि परिपूर्णो गर्भः पक्वं फलमिव भवति। प्रयोजनाभावात् गर्भस्य क्षुत्तृष्णाद्यवस्था नोक्ता। 'परतः' अष्टमादिमासेषु 'उदयपचन्द्रसूर्यनाथा' इत्यर्थः। तथा च सारावल्याम् -

'मासेष्वाधानादिषु गर्भस्य यथाक्रमेण जायन्ते।
सप्तसु कललाण्डावयवास्थित्वग्रोमचेतनताः।।
मासेऽष्टमे तु तृष्णा क्षुधा च नवमे तथोद्वेगः।
दशमे तनोति पूर्णः पक्वमिव फलं भवति गर्भः।।
शुक्रकुजजीवरविशशिसौरिबुधविलग्नपोडुपादित्याः।
मासपतयस्स्युरेते गर्भस्य शुभाशुभञ्चिन्त्यम्।।
मासाधिपबलतुल्यैस्तैस्तैस्संयुज्यते भावैः'।। इति।।

अर्थान्तरं, मासाधिपसदृशमित्यत्र मासाधिपोऽयनक्षणेत्यादिना गुरुरुच्यते पुत्रकारकत्वात्। गुरोर्बलं चिन्तनीयमित्यर्थः।

**त्रिकोणगे ज्ञे विबलैस्ततोपरैर्मुखाङ्घ्रिहस्तैर्द्विगुणैस्तथा भवेत्।**
**अवाग्गवीन्दावशुभैर्भसन्धिगैः शुभेक्षिते चेत् कुरुते गिरं चिरात्।। १७।।**

'त्रिकोणगे ज्ञे' इति लक्षणसामग्र्ये यथोक्त एवार्थः। ईषन्न्यूनत्वे 'द्विगुणत्वं' 'बृहत्त्व'मेवोह्यम्। 'अवागि'ति। 'अशुभै'रित्यत्र तृतीयाविभक्तिर्हेतौ। एकेन पापेन भसन्धिगेन वाचोऽलसत्वं, द्वाभ्यां वाचोल्पत्वम्। त्रिभिः पापैश्च सन्धिगैः मूकत्वमप्यूह्यम्। अर्थान्तरम्। 'शुभेक्षिते' इत्यस्मात् ईक्षितशब्दमध्याहृत्य अशुभैरीक्षिते इत्यन्वयः कर्तव्यः। तदानीं 'वृषे चन्द्रे भसन्धिगैरशुभैः वीक्षिते अवाग् भवती'त्यर्थः



तथा च सारावल्याम् -

'क्रूरैर्ग्रहसन्धिगतैश्शशिनि वृषे सौरभौमसन्दृष्टे।
मूकस्सौम्यैर्दृष्टे वागपि कालान्तरे भवति'।। इति।।

अत्र 'गो' शब्दो वाक्पर्यायत्वेनाप्यूह्यः। 'गवि' वाक्स्थाने स्थितैरशुभैः अथवा वाक्स्थाने अशुभैर्वीक्षिते वा इन्दावशुभैस्सहिते वीक्षिते वा अवाग्भवति। वाग्गुणहीनो भवतीत्यर्थः।

**सौम्यर्क्षांशे रविजरुधिरौ चेत् सदन्तोऽत्र जातः**
**कुब्जस्स्वर्क्षे शशिनि तनुगे मन्दमाहेयदृष्टे।**
**पङ्गुर्मीने यमशशिकुजैर्वीक्षिते लग्नसंस्थे**
**सन्धौ पापे शशिनि च जडस्स्यान्न चेत् सौम्यदृष्टिः।। १८।।**

'सौम्यर्क्षांशे' इति। बुधराशौ बुधांशे तमोमयौ 'रविजरुधिरौ चेत्' अस्मिन् योगे सदन्तो दन्तसहितो गर्भस्थो वाच्यः। 'चेत् सदन्तः' सत् शोभनमन्तःकरणं यस्य स सदन्तः शुभमना इत्यर्थः। अथवा सदन्तः शुभमरणः इति वा। 'कुब्जस्स्वर्क्षे शशिनि तनुगे' इत्यत्र बहव ऊहप्रकाराः द्योत्यन्ते। लग्नस्थचन्द्रस्य फलं भावाध्याये 'मूकोन्मत्तजडान्धनीचबधिरप्रेष्यः' इति वक्ष्यति। पुनः 'स्वर्क्षाजोच्चगते धनी' इति च वक्ष्यति। स्वर्क्षाश्रितवशात् फलस्यान्यथात्वं दर्शितम्। इह तु स्वर्क्षचन्द्रलग्नगते 'मन्दमाहेयदृष्टे' इति विशेषात् कुब्जत्वमप्युक्तम्। तस्मात् ग्रहस्य अन्यग्रहदर्शनवशादपि फलभेदोऽस्ति इति चेत्तर्कणीयम्। 'पङ्गुर्मीन' इति प्रश्नादौ मीनराशौ लग्नगते पङ्गुत्वमूह्यम्। अतः मूढः चपलः। 'न चेत् सौम्यदृष्टि' रिति सर्वानिष्टयोगेषु चापेक्षणीयम्।

**सौरशशाङ्कदिवाकरदृष्टे वामनको मकरान्त्यविलग्ने।**
**धीनवमोदयगैश्च दृगाणैः पापयुतैरभुजाङ्घ्रिशिरास्स्यात्।। १९।।**

सौरशशाङ्केति श्लोकपूर्वार्धं स्पष्टार्थम्। 'धीनवमोदयगैः' इति लग्नस्यादिद्रेक्काणे द्वितीयद्रेक्काणे तृतीयद्रेक्काणे च पापसहितैः भुजाङ्घ्रिशिरसामेकस्यापि नाशो भवति।

(अथवा धीनवमोदयराशिषु प्रथमद्रेक्काणेषु पापयुक्तेषु शिरोबाधा, द्वितीयद्रेक्काणेषु पापयुक्तेषु हस्तबाधा तृतीयद्रेक्काणेषु पापयुक्तेषु अङ्घ्रिबाधा। अथवा धीराशिगतेषु त्रिषु द्रेक्काणेषु पापयुक्तेषु हस्तबाधा नवमराशिगतेषु त्रिषु द्रेक्काणेषु पापयुक्तेषु अङ्घ्रिबाधा इत्यादि द्रष्टव्यम्।)

**रविशशियुते सिंहे लग्ने कुजार्किनिरीक्षिते**
**नयनरहितः सौम्यासौम्यैः स बुद्बुदलोचनः।**
**व्ययगृहगतश्चन्द्रो वामं हिनस्त्यपरं रवि-**
**स्त्वशुभगदिता योगा याप्या भवन्ति शुभेक्षिताः।। २०।।**

'रविशशियुत' इति। रविशशिकुजार्किभिः नयनहानिर्जायते। कथम्। सिंहे लग्ने रविशशिभ्यां युक्ते कुजार्किदृष्टे अन्धो भवति। 'सौम्यासौम्यैर्दृष्टे स बुद्बुदलोचनः' अर्थादसौम्यैर्दृष्टे सौम्यैर्दृष्टे अनन्धः इति। 'व्ययगृहगतयोः रविचन्द्रयोः' कुजादिदृष्टिरनुवर्तते, उत्तरत्रानिष्टाध्याये -

'निधनारिधनव्ययस्थिता रविचन्द्रारयमा यथाक्रमम्।
बलवद्ग्रहदोषकारणैर्मनुजानां जनयन्त्यनेत्रताम्'।। इति वक्ष्यति।।

तेन बहवो योगाः उच्यन्ते। कथमिति चेदुच्यते। 'यथाक्रमं तथा बलवद् ग्रहदोषकारणैः' 'मधुपिङ्गलदृग्' इत्यादि ग्रन्थोक्तस्य पित्तादिभिर्बलवद् ग्रहदोषैः दशाकाले। निधनारिधनव्ययस्थिताः रव्यादयो गर्भस्य वा जातस्य वा 'अनेत्रतां' नेत्रहानिं जनयन्ति। तत्रायमुपदेशो वेदितव्यः। व्युत्क्रमेण ग्रहाणां स्थितौ रविचन्द्रौ व्ययधनगतौ यमारौ निधनारिगतौ चेदन्धो भवतीति।
तथा च सारावल्याम् -

'धनराशौ द्वादशभे चन्द्रे सूर्येक्षिते यस्य।
सोऽपि भवेदेवान्धो यद्यष्टमषष्टगाः पापाः'।। इति।।

निधने रविः पापदृष्टश्चेन्नयनपीडा। 'स्वल्पात्मजो निधनगे विकलेक्षणश्च' इति भावाध्याये। अथ यथायोगं वक्ष्यति च। षष्ठान्त्ययोः रविचन्द्रयोः व्ययगतस्य रवेस्सापेक्षणं



नयनहन्तृत्वं उक्तम् - 'लग्नाद्व्ययारिगतयोः शशितिग्मरश्म्योः पत्न्या सहैकनयनस्य वदन्ति जन्म' इत्युक्तत्वात्। तस्मात् व्ययारिगतयोः चन्द्रसूर्ययोः कुजसौरयोश्च नयनहन्तृत्वं ऊह्यं 'दिनकरप्रतिमोऽन्यसंस्थे' इत्युक्तत्वात् दिनकरसमोऽन्यत्र कथितः' इत्युक्तत्वाच्च। तथा च सारावल्याम् -

'वक्रो वा सौरो वा द्वादशसंस्थो नयनहन्ता'। इति।

निधनार्योः स्थितयोः क्रमेणोत्क्रमेण वा रविचन्द्रयोः धनव्ययगतयोः आरयमयोः दृष्टिः भवत्येव। तदा नेत्रनाशो भवति। नेत्ररोगवैकल्यादि वा जायते इत्याद्यभ्यूह्यम्। 'यथाक्रमम्' इत्यत्र 'यथातथम्' इति वा पाठः। 'अशुभगदिताः योगा याप्या भवन्ति' इति सर्वारिष्टयोगापवादः उक्तः।

**तत्कालमिन्दुसहितो द्विरसांशको य-**
**स्तत्तुल्यराशिसहिते पुरतश्शशाङ्के।**
**यावानुदेति दिनरात्रिसमानभाग-**
**स्तावद् गते दिननिशोः प्रवदन्ति जन्म।। २१।।**

'तत्कालमिन्दुसहित' इति प्रसवकालनिर्णय उच्यते। इन्दुसहितराश्यंशकयोर्यस्य बलाधिक्यं तस्य द्वादशांशोऽत्र 'द्विरसांश'शब्देनोच्यते। 'बलयोगात् फलमंशकर्क्षयो'रिति उत्तरत्र स्वयमेव वक्ष्यति। तत्काले इन्दुनवांशद्वादशांशभागे विनिर्दिशेच्चन्द्रम्' इति शास्त्रान्तरेप्युक्तम्। ततश्चन्द्रस्य नवांशद्वादशांशस्थितिरप्यनेन निरुपणीयम्। 'तत्काल'मिति प्रश्नकालाधानकालौ द्वावपि गृह्येते।

**उदयति मृदुभांशे सप्तमस्थे च मन्दे**
**यदि भवति निषेकस्सूतिरब्दत्रयेण।**
**शशिनि तु विधिरेवं द्वादशाब्दे प्रकुर्या-**
**न्निगदितमिह चिन्त्यं सूतिकालेऽपि युक्त्या।। २२।।**

'उदयति मृदुभांश' इति। न केवलं 'तत्काल इन्दुसहिते'त्यादिना प्रसवकालो निर्णीयते। लग्नचन्द्राभ्यां द्वाभ्यामपि निरुपणीयमित्यनेन श्लोकार्धेन सिद्धं भवति। अपि च राश्यंशकाधिपाश्चिन्त्याः। लग्नांशकैः कालविधानमूह्यम्। शनेः कालविलम्बनमूह्यम्। ननु शब्देन दृष्टिरेवापेक्षणीया चेत् 'सप्तमस्थे मन्दे' इति न वक्तव्यम्। नैष दोषः। अन्यदप्याकूतमस्ति। सप्तमस्थशनिर्दिग्बलयुक्तः केन्द्रस्थश्च भवति। लग्नद्रष्टा च भवति। तस्मात्तेन फलं वक्तव्यं इति। शशिनि मृदुभागमेकांशे मन्ददृष्टे तु द्वादशाब्दे शशिनः कालविलंब उक्तः। एवं राश्यंशके तदधिपतिदृष्टग्रहवशात् चिरात् मध्यमकालेन आशु वा प्रसवकालश्चिन्त्यः इत्यक्तं भवति। त्रिभिर्लक्षणैस्संवादभूयिष्ठायां चिन्तायां एवायं विधिः। तथा एवं वारब्धस्य कार्यस्य वा पृष्टस्य वा लब्धिकाल ऊह्यः इति सूचितम्। इह निगदितं सूतिकालेऽपि युक्त्या चिन्त्यमिति गर्भस्रावादि न वक्तव्यमिति। तत्र तत्र युक्त्या चिन्त्यमिति सिद्धं भवति। देशकालानुरुपमपि चिन्त्यम्। अथवा 'इह निगदितं' अस्मिन् श्लोके निगदितं सूतिकाले विचिन्त्यं पुनः प्रसवविलम्ब इत्यर्थः।

इति गोविन्दसोमयाजिकृतौ बृहज्जातकव्याख्यायां दशाध्याय्याख्यायां चतुर्थाध्यायः

# पञ्चमाध्यायः

## जन्माध्यायः

पितुर्जातः परोक्षस्य लग्नमिन्दावपश्यति।
विदेशस्थस्य चरभे मध्यात् भ्रष्टे दिवाकरे।।१।।

'जन्माध्याय' उच्यते। 'पितुर्जात' इति। तत्र मातृकारकस्य चन्द्रस्य लग्नदर्शनाभावे पितुः परोक्षमित्युक्तस्य किञ्चित् अभिप्रायान्तरमस्ति। मातृविषयारिष्टादिलक्षणं कदाचित् पितृविषयं भवति। 'तासां तु भर्तृमरणं निधने' इत्युक्तत्वात्। अथवा दिवाकरे लग्नमपश्यतीति वान्वयः। मध्यात् भ्रष्टे उदासीनराशेः भ्रष्टे। भ्रंशः 'भ्रमु अनवस्थाने' इति धातुः। तस्मात् भ्रष्टशब्देन हीनबले शत्रुनीचक्षेत्रगते इत्यर्थः। परोक्षस्यासन्निकृष्टस्य पितुर्जात इत्युक्तं भवति। चिरकालं पित्रा सहवासो न भवतीति न वा।

उक्तं च बृहस्पतिना विवाहप्रश्ने -

'यदि नीचारिगो लग्नमारुढं वा न पश्यति।
अर्कः स्त्रियः पिता नास्ति मातेन्दुश्चेत्तथाविधः'।।

पुनरप्येवार्थान्तरमूह्यते। 'विदेशस्थस्ये'ति विवाहप्रश्नेऽयं विधिः।

'दिवाकर'शब्दः फलदग्रहविषयः लग्नेशविषयो वा। चरराशौ स्थिते विदेशे वर्तते। चरद्रेक्काणे वांशके वा तस्मिन् गृहे मध्यात् दशमात् भ्रष्टे आसप्तमस्थिते विदेशगतः प्रोषित इति वाच्यम्।

तथा च कृष्णीये -

'चरराशौ च विलग्ने द्रेक्काणे वा चरांशकेऽभ्युदिते।
मध्यात् च्युते गृहे वा प्रवासचिन्तां विजानीयात्'।।

'मध्यात्भ्रष्ट' इत्यनेन ऊहप्रकारस्सूचितः कथम्? उच्यते। मध्यलग्नादारभ्य पाताललग्नपर्यन्तश्चक्रार्धभागो विदेशः। इतरार्धभागस्स्वदेशः। ततो मध्यात् भ्रष्टे विदेशगत इत्युक्तं, सप्तमस्थे परमविप्रकर्षात् गन्तव्यदेशस्थ इत्यूह्यम्। ततः पाताललग्नान्तरस्थे विदेशात् प्रतिनिवृत्तः। ग्रहस्तावच्चक्रगत्या पश्चिमाभिमुख इव दृश्यते। तस्मात् मध्यात् भ्रष्टे विदेशगत इत्युपपन्नम्। पुनस्सप्तमराशेश्चतुर्थराश्यभिमुख इव दृश्यते अवलम्बमानो दृश्यते। ततश्चतुर्थराशिगते गृहगत इत्युपपन्नम्।

तथा च कृष्णीये -

'हिबुकं गृहे प्रविष्टे गृहं प्रविष्टं प्रवासिनं विद्यात्।
हिबुकास्तमयान्तरगे ग्रहे तु पथि वर्तते पुरुषः'।।इति।।

**उदयस्थेऽपि वा मन्दे कुजे वास्तं समागते।**
**स्थिते वान्तः क्षपानाथे शशाङ्कसुतशुक्रयोः।। २।।**

'उदयस्थेऽपि वा' इति। उदयसप्तमराश्योः मन्दकुजयोरपि प्रवासी विदेशस्थ एव। न तदानीमागच्छतीत्यादि। शशाङ्कसुतशुक्रयोः क्षपानाथे च उदयास्तमयोस्सत्सु वान्तः एति। विदेशस्थितदेशात् स्वदेशं प्रति निर्गत इत्यर्थः। क्षपानाथशशाङ्कसुतशुक्राणां सूर्यात् शीघ्रगतित्वात्।

**शशाङ्के पापलग्ने वा वृश्चिकेशत्रिभागगे।**
**शुभैस्स्वायस्थितैर्जातः सर्पस्तद्वेष्टितोऽपि वा।। ३।।**

'शशाङ्क' इति। शशाङ्के चन्द्रे पापक्षेत्रगते लग्ने वा वृश्चिकेशत्रिभागगे सर्पो जातः। चिन्तितो दृष्टो वा। 'तद्वेष्टितोऽपि वा' इति विकल्पोक्त्या कोऽपि विशेष ऊह्यः। पापक्षेत्रलग्नशशाङ्कयोरुभयोरपि वृश्चिकेशत्रिभागाश्रितत्वे संवादात् केवलस्सर्पः। संवादाभावे तद्वेष्टित इति। अथवा 'वृश्चिकेशत्रिभागो' वृश्चिकराशिस्थितद्रेक्काणो वृश्चिकाधारद्रेक्काणो



वा इत्यर्थः। वृश्चिके हि प्रथमद्रेक्काणो वृश्चिकसंज्ञः द्वितीयो मीनसंज्ञः तृतीयः कुलीरः एते हि सरीसृपाः।

तथा च कृष्णीये -

'वृश्चिकमीनकुळीराः सरीसृपाणां वदन्ति योनिः'।

इति एतेषु द्रेक्काणेषु लग्नगतेषु सरीसृपाः ऊह्याः' अथवा 'वृश्चिक' शब्देन विषधराः उच्यन्ते। तेषामीशाः सर्पाः तैर्युक्तेषु त्रिभागेषु उद्यत्सु चन्द्राधिष्ठितेषु वा सर्पाः ऊह्याः। अथवा 'वृश्चिकेश' शब्देन अलिगराहुरुच्यते। तद्युक्ते त्रिभागे लग्नगते सर्प ऊह्यः। 'तद्वेष्टितो वे'ति विकल्पोक्त्या सर्वत्र लक्षणे ईदृशो विकल्पः ऊह्यः इत्युक्तं भवति। 'पापलग्न' शब्देन पापानामुदयश्च क्षेत्रञ्च गृह्येते। 'सर्प' शब्देन विषधराः सर्वे जन्तवोऽपि ग्राह्याः।

**चतुष्पदगते भानौ शेषैर्वीर्यसमन्वितैः।**
**द्वितनुस्थैश्च यमलौ भवतः कोशवेष्टितौ।। ४।।**

'चतुष्पदगते भानौ' इति। 'द्वितनुस्थैश्च यमलौ' इति हेतौ तृतीया उभयराशिस्थैः ग्रहैः सर्वत्र द्वित्वमूह्यम्।

तथा चोक्तम् -

'उभयोदयप्रसूतौ चन्द्रेष्वुभयाश्रितोंशराशौ वा।
यमलांशे जायेशे ग्रहयुक्ते द्यूनभे बलिनि।
प्रवदेत् भार्याद्वितयं त्रितयं तूच्चादिगुणविशेषेण'।। इति।।

**छागसिंहवृषे लग्ने तत्स्थे सौरेऽथवा कुजे।**
**राश्यंशसदृशे गात्रे जायते नालवेष्टितः।। ५।।**

'छागसिंहेति। अस्मिन् योगे जातः कदाचिद् बद्धो भवतीत्यपि सूचितम्। अथ प्रश्नादौ बद्धो न वेति पृष्टे एवञ्चेत् बद्धो भवतीत्यूह्यम्।

**न लग्नमिन्दुञ्च गुरुर्निरीक्षते न वा शशाङ्को रविणा समागतः।**
**सपापकोऽर्केण युतोऽथवा शशी परेण जातं प्रवदन्ति निश्चयात्।। ६।।**

'न लग्न'मिति। लग्नं चन्द्रं च गुरुरेकप्रकारेणापि न वीक्षते इत्येको योगः। अथवा लग्नं विना रविणा समागतश्शशाङ्को गुरुणा न दृष्टश्चेद्द्वितीयः। सपापकः अर्केण युतश्शशी गुरुणा न दृष्टश्चेत् तृतीयः। एवं त्रयो योगाः परजातत्वसूचकाः। अत्रोत्तरयोगयोः प्रथमयोगस्य परयोगान्तर्भवत्वात् किमर्थमुपदेशः कृतः इति चेत् कोऽपि विशेषोऽप्यूह्यः। 'रविणा समागत' इत्यत्र रविशशिनोरत्यन्तं सन्निकृष्टत्वम्। 'सपापकोऽर्केण युत' इत्यत्र एकराशौ योगमेवात्रोह्यते। 'न लग्नमिन्दुं च गुरुर्निरीक्षते' चन्द्रस्य गुरुवर्गस्थितिरपि निषिध्यते। गुरोस्सत्त्वगुणात्मकत्वात् ज्ञानस्वरूपकत्वात् विप्रवर्णस्वामित्वाच्च लग्नचन्द्रयोस्तस्य प्रेक्षणे नाशुद्धिर्भवति। लग्नराशिर्जातशिशुः, चन्द्रो माता, जातस्य परजातत्वेन मातुश्च दोषो भवति परपुरुषगामित्वादित्येतावता। लग्नचन्द्रयोः गुरुदृष्ट्या अशुद्धिर्न जायते इत्युच्यते। अनिष्टाध्याये 'असितकुजयोर्वर्गे तत्स्थे सिते तदवेक्षिते पर युवतिगः' इति वक्ष्यति। अत्रासितकुजयोर्दृष्टत्वे द्रष्टव्यस्य सितस्य तयोः वर्गस्थितिरप्युक्ता। तथाऽत्रापि चिन्तनीयम्। तथा च गार्गिः -

'गुरुक्षेत्रगते चन्द्रे तद्युक्ते वान्यराशिगे।
तद्द्रेक्काणे तदंशे वा न परैर्जात इष्यते'।।

**क्रूरर्क्षगतावशोभनौ सूर्याद्द्यूननवात्मजस्थितौ।**
**बद्धस्तु पिता विदेशगः स्वे वा राशिवशात्तथा पथि।। ७।।**

'क्रूरर्क्षगता'विति। 'बद्धस्तु' इत्यत्र 'तु' शब्देन 'दिवाकरेन्द्वो'रिति 'दिवार्कशुक्रा'विति श्लोकाभ्यां अर्थोऽनिरुपणीय इत्युक्तं भवति।

तथा च सारावल्याम् -

'द्युनिशयोरर्कासितयोः कुजेन संदृष्टयोः पिताप्यभवत्।
परदेशे चरराशौ युक्तेक्षितयोश्च तत्र मृतः।।



क्षीणे शशिनि सपापे माता म्रियते रवौ पिता तद्वत्।
पापैर्बलिभिर्दृष्टे मिश्रैर्व्याधिः सौम्यैः शुभं भवति।।
चन्द्रात् त्रिकोणराशौ रविजो मातुर्वधं दिशति रात्रौ।
शुक्रात्तथैव दिवसे भौमः पापेन सन्दृष्टः।।
यत्रस्थस्तत्रस्थो रुधिरार्कशनैश्चरेक्षितश्चन्द्रः।
जननी मृत्युं कुर्यात् न तु सौम्यनिरीक्षितः सद्यः।।
रुधिरशनैश्चरदृष्टो दिवाकरो दिवसजन्मनि तु यस्य।
पापयुतो वा हन्यात् पितरं निस्संशयं तस्य।।
रहितो बुधगुरुशुक्रैर्जन्मनि रुधिरसौरिसहितोऽर्कः।।
कथयति पितरमतीतं पितुरपि शरीरकर्तारम्।
पापग्रहमध्यगतो दिवाकरो दिवसजन्मनिरतस्य।।
पापयुतो वा हन्यात् पितरं निस्संशयं तस्य।
सूर्यादष्टमराशौ यदि युक्तौ सौरलोहितौ प्रसवे।।
सौम्यादृष्टौ निधनं कुर्यातां सद्य एव पितुः।
पापग्रहसंयुक्तश्चरराशिगतो दिवाकरः प्रसवे।।
विषजलशस्त्रैर्मृत्युं कथयन्त्यल्पायुषं पितरम्'।

रात्रिजातस्य सूर्यस्थाने शनिं प्रकल्प्यार्कादुक्तानि लक्षणानि वदेत्। दिवा शुक्रं चन्द्रवत् प्रकल्प्य मातुर्लक्षणं निवदेत् इति। रात्रौ चन्द्रान्मातुः दिवार्कात् पितुरिति 'दिवार्कशुक्रा' वित्यनेन सिद्ध्यति। नवमाधिपं सूर्यवत् चतुर्थाधिपं चन्द्रवत् परिकल्प्य सर्वान् पितृमातृगुणदोषान् वदेत्। अत्र तु विदेशगतं प्रति पृच्छति चेत् 'लग्नात् द्यूननवात्मजस्थितावशोभनौ' यदि विदेशगतः पुरुषो बद्ध इति वक्तव्यम्।

'क्रूरर्क्षगता'वित्यनेन सर्वत्रानिष्टफलदानां ग्रहाणां स्थितिः स्थानञ्च निरुपणीयमित्युक्तं भवति। 'क्रूरर्क्षगता'वित्यत्र कोऽपि विशेषोऽभिप्रेतः। क्रूरर्क्षगतावोजराशिगताविति 'क्रूरः सौम्यः पुरुषवनिते' इत्युक्तत्वात् ओजराशित्वाच्च पापक्षेत्रत्वाच्च राशेः क्रूरत्वे तत्रस्थयोरशोभनयोरतिक्रूरत्वम्।

**पूर्णे शशिनि स्वराशिगे सौम्ये लग्नगते शुभे सुखे।**
**लग्ने जलजेऽस्तगेऽपि वा चन्द्रे पोतगता प्रसूयते।। ८।।**

पूर्णे शशिनी'ति। शशिनि पूर्णे स्वराशिगे सौम्ये लग्नगतेरित्येको योगः। श्लोकशेषेण द्वितीयः। तथा च सारवल्याम् -

'सौम्ये लग्नगते पूर्णे स्वगृहगते शशिनि सलिलसंयाने।
पातालस्थैश्च शुभैर्जलभे लग्नेऽस्तगे शशिनि'।। इति।।

अथवा 'पोतगता प्रसूयते' पोतेन शब्देन गता प्राप्ता गर्भिणी प्रसूयते। प्रकर्षेण सूयते सुखप्रसवो भवतीत्यर्थः। अथवा पूर्णे शशिनीति वर्षपृच्छासमये 'शशिनि बलपूर्णे' 'जलज' शब्देन जलजातयः राशयः कुलीरमकरान्त्यार्धमीनाः उक्ताः। अथवा जलजशब्देन चन्द्रोऽप्यूह्यः अब्जसंज्ञात्वात्। तस्योदये इति वा। 'पोतगता' इति पोतगता जनता उच्यते। 'प्रसूयत' इति अभीष्टकार्याण्युत्पादयति। वर्षाम्बु बाहुल्येन सर्वत्र नावमधिरुह्य गच्छन्ति लोका इत्यर्थः। कीदृशे प्रश्ने इति चेत् उच्यते 'पूर्णे शशिनि' पूर्वपक्षगे चन्द्रे स्वराशिगत इति जलराशिरुच्यते स्वस्य जलात्मकत्वात् 'सौम्ये लग्नगते' सति भूरिवर्षागमः। श्लोकशेषेणान्यो योगः तत्र सुखशब्देन खं सुखञ्च गृह्यते। खे सुखे वा शुभे इत्यर्थः।

**आप्योदयमाप्यगश्शशी सम्पूर्णस्समवेक्षतेऽथवा।**
**मेषूरणबन्धुलग्नगः स्यात्सूतिः सलिले न संशयः।। ९।।**

'आप्योदय'मिति। अत्र प्रसवदेशज्ञानोपदेशप्रकरणे स्थाननिर्णयः सर्वत्र प्रश्नस्थानादिपरीक्षया निरूपणीयम्। अथ 'सलिले सूति'रित्यत्र सलिलशब्देन सलिलसन्निधिरपि सूचितः। अथवा अनेन श्लोकेन वर्षप्रश्नोप्युच्यते। 'आप्योदयं' जलराश्युदयं जलराशिगतः सम्पूर्णः पूर्वपक्षगतः समवेक्षते सम्यगवेक्षते सप्तमदृष्ट्यावेक्षते। अथवा मेषूरणबन्धुलग्नगो वा यदि भवति तदा सलिलविषया सूतिर्वक्तव्या।
तथा च संहितायाम् -

'वर्षप्रश्ने सलिलविषयं राशिमाश्रित्य चन्द्रो
लग्नं यातो भवति यदि वा केन्द्रगः शुक्लपक्षे।



सौम्यैर्दृष्टः प्रचुरमुदकं पापदृष्टोल्पमम्भः
प्रावृट्काले सृजति न चिराच्चन्द्रवत् भार्गवोऽपि'।। इति।।

अथ जलविषयचिन्तोपाय उच्यते। समवेक्षत इत्यनेन चन्द्रस्य सप्तमदृष्टिर्विज्ञायते। सप्तमस्थो वा मेषूरणबन्धुलग्नगो वा चन्द्रो जलसूचक इत्युक्तं, तत्रायं विशेषोऽस्ति। मेषूरणराशेराकाशगतत्वात् मेषूरणगतश्चन्द्रो वृष्टिसूचकः। बन्धुस्थानस्य पातालगतत्वात् बन्धुगतश्चन्द्रोऽधोजलसूचकः। सप्तमस्थानस्य वरुणदिग्गतत्वात् सप्तमगतश्चन्द्रो नदीसमुद्रजलसूचकः। लग्नस्य सर्वसाधारणत्वात् लग्नगतश्चन्द्र स्सामान्यजलसूचको भवति। तथा चोक्तम् -

'हिबुकेनाधस्सलिलं नद्यागमनन्तु सप्तमेनैव।
दशमेन वृष्टिपतनं ब्रूयादुदयेन तत्त्रितयमपि'।।

तत्र शशिनो जलात्मकत्वात् जलनिरुपणे जलात्मकश्शुक्रोऽपि शशिवद् ग्राह्यः। 'आप्योदय' मित्यत्र 'आप्य' शब्देनाम्मयवस्तु गृह्यते। 'आप्यमम्मय'मित्यमरसिंहः। आप्योदयं वस्तु दृश्यते चेत् जलपृच्छायां जलं वाच्यम्। अनेनैव न्यायेनोक्तेषु स्थानेषु स्थलराशिषु आग्नेयग्रहसहितेषु जलाभावोऽपि निरूपणीयः।

**उदयोडुपयोर्व्ययस्थिते गुप्त्यां पापनिरीक्षिते यमे।**
**अलिकर्किंयुते विलग्नगे सौरे शीतकरेक्षितेऽवटे।। १०।।**

'उदयोडुपयो'रिति। 'गुप्त्यां' बन्धनागारे लग्नचन्द्रयोः द्वादशे मन्दे पापदृष्टे गुप्त्यां न केवलं प्रसूतिः, प्रष्टुर्बन्धोऽपि वाच्यः। रोगादिना वा।
तथा च कृष्णीये -

'होराद्वादशराशौ षष्ठे वा भवति बन्धनं रविजे' इति।

'अलिकर्किंयुते' इत्यादि प्रष्टुः कूपादिपातोऽप्यूह्यः इत्यर्थः। अलिकर्किंयुते कुलीरवृश्चिकयोरवटे स्थितिः लोके दृश्यते। शनैश्चरस्य गूढनिवाससूचकत्वात् तदुदयेन सरीसृपात्मकस्य चन्द्रस्य दृष्ट्यापि अवट ऊह्यः। अतः एवं निरूपणप्रकारोऽप्यनेन सूचितः एवमर्थमुत्तरश्लोकेन स्पष्टीकरोति।

मन्देऽब्जगते विलग्नगे बुधसूर्येन्दुनिरीक्षिते क्रमात्।
क्रीडाभवने सुरालये प्रसवं सोषरभूमिषूद्दिशेत्।। ११।।

'मन्देब्जगते' इति। मन्दसहिते लग्ने राशिभेदात् केषाञ्चित् ग्रहाणामवलोकनेन च स्थानविशेष उपदिश्यते। बुधादिदृष्ट्या क्रीडाभवनादि स्थानविशेष इति।

नृलग्नगं प्रेक्ष्य कुजः श्मशाने रम्ये सितेन्दू गुरुरग्निहोत्रे।
रविर्नरेन्द्रामरगोकुलेषु शिल्प्यालये ज्ञः प्रसवं करोति।। १२।।

नृलग्नगमित्यत्र मन्दमिति विशेष्यपदं पूर्वश्लोके प्रस्तुतत्वात्। 'कुजः श्मशाने' इति कुजेन श्मशानस्थाननिर्णयः। सितेन्दुभ्यां विहारस्थाननिर्णयः। गुरुणा अग्निहोत्राणां अग्निहोत्रगुणदोषौ चिन्त्यौ। रविणा देवागारराजगृहगोगृहाणि कार्याणि। शिल्पविद्यादि बुधेनेत्याद्यूह्यम्। अयं श्लोकः कर्माजीवनिरुपणेऽप्युपयुज्यते।

राश्यंशसमानगोचरे मार्गे जन्म चरे स्थिरे गृहे।
स्वर्क्षांशगते स्वमन्दिरे बलयोगात् फलमंशकर्क्षयोः।। १३।।

राश्यंशेति। एवं ग्रहयोगदृष्ट्या स्थानविशेष उक्तः। अथ केवलराशिवशात् स्थाननिर्णय उच्यते। आरण्यराशावारण्ये पौरराशौ पुरे जलराशौ जलसन्निधौ कीटराशौ वल्मीकश्वभ्रादिषु अजराश्यंशे तद्देशे वृषे तद्देशे मिथुने ग्रामे इत्यादिषु 'स्वचराश्च सर्वे' इत्युक्तेषु स्थानेषु भोजननष्टद्रव्यस्थानं देवतास्थानं यत्र यत्र स्थानं वक्तव्यं तत्र तत्र राश्यंशसमानं ब्रूयात्। चरादिश्चेन्मार्गादिस्थानञ्च ज्ञेयम्। स्वर्क्षांशगते ग्रहे लग्ने चेत् स्वमन्दिरेषु शत्रुराशिगते लग्ने चेत् शत्रुगृहे। मित्रराशिगते ग्रहे लग्ने चेत् मित्रगृहे उच्चराशिगते ग्रहे राजगृहे। नीचराशिगते ग्रहे नीचगृहे इत्याद्यूह्यम्। तत्र 'स्वर्क्षांशगत'त्वादि लग्नेशस्येति केचित्। कथमत्रांशयोः राश्योः विरोधफलनिर्देश इति चेत् 'बलयोगात्'राश्यंशयोः यस्य बलाधिक्यं तेन च बलं वक्तव्यम्। इदं सर्वत्र चिन्त्यम्। प्रथमाध्याये 'मेषाश्विप्रथमा



नवर्क्षचरणा' इतिराश्यंशकयोः सहपाठं कृत्वा'गृहांशकपा' इति पुनरप्युक्तम्। तस्य प्रयोजनमिदमुक्तं 'बलयोगात् फलमंशकर्क्षयोः' इति।

'वीर्यान्वितोंशकपतिर्निरुणद्धि पूर्वं
राशीक्षणस्य फलमंशफलं ददाति' इति वक्ष्यति च।

तस्मात् सर्वत्र अंशकनिरुपणं विना न किञ्चित् फलं निर्णेतुं शक्यते। 'नीचारिभांशे समवस्थितस्य शस्ते गृहे मिश्रफलं प्रदिष्टं' इत्यत्र वक्ष्यति। तस्मात् न केवलं राशिमात्रज्ञानेन।

आरार्कजयोस्त्रिकोणगे चन्द्रेऽर्के च विसृज्यतेऽम्बया।
दृष्टेऽमरराजमन्त्रिणा दीर्घायुरस्सुखभाक् च स स्मृतः।। १४।।

'आरार्कजयोस्त्रिकोणग' इति चन्द्रस्यार्कसहितत्वात् मौढ्यमप्यभिप्रेतं, चन्द्रे मूढे सति तत्त्रिकोणस्थयोरारार्कजयोः मात्रा विसृज्यत इत्यर्थः।

तथा च सारावल्याम् -

'कुजसौरयोस्त्रिकोणे, चन्द्रेऽस्तगते विसृज्यते मात्रा' इति।

अथवा आरार्कजचन्द्रार्काः परस्परत्रिकोणगताः भवेयुः यदि जातो मात्रा विसृज्यते इत्यर्थः। बृहस्पतिदृष्टौ वियुक्तस्य जन्तोरायुस्सुखञ्च भवति। 'विसृज्यते' इत्यनेन शिशोर्मातृवियोग उक्त इति चेत् 'क्रूरर्क्षगतावशोभना' वित्यत्रापि पितुर्विदेशगमनं पूर्वमेवोक्तम्। तस्मादिह नोच्यते। तत्र चन्द्रग्रहणं दिवासितस्याप्युपलक्षणम्।

पापेक्षिते तुहिनगावुदये कुजेऽस्ते
त्यक्तो विनश्यति कुजार्कजयोस्तथाये।
सौम्येऽभिपश्यति तथाविधहस्तमेति
सौम्येतरेषु परहस्तगतोऽप्यनायुः।। १५।।

'पापेक्षिते तुहिनगा'विति। पापेक्षिते त्यक्तो विनश्यति। मातृदीक्षादिकं न करोति। देशान्तरगतो वा मृतो वा अदृष्टो वा भवतीत्यर्थः। 'सौम्येऽभिपश्यति तथाविधहस्तमेती'त्येतत्

न केवलमेतद्विषयम्। सर्वत्र दृष्टग्रहवशात् उद्यद्ग्रहवशाद्वा कर्माजीवेषु कर्मस्थितग्रहवशाद्वा यत्फलप्राप्तिरुच्यते तत्फलस्य तादृशं रूपञ्च एवमूह्यमित्यत्रापि द्योतकम्। तथा 'चन्द्रलग्नान्तरगतैर्ग्रहैस्स्युरुपसूतिका' इति वक्ष्यति च। चन्द्रलग्नान्तरगतग्रहवर्णवशादुपसूतिकानां जातिवयोवर्णरूपादयो वक्तव्याः। तथा निरूपणमनेनोक्तमित्यर्थः।

**पितृमातृगृहेषु तद्बलात् तरुसालादिषु नीचगैश्शुभैः।**
**यदि नैकगतैस्तु वीक्षितौ लग्नेन्दू विजने प्रसूयते।। १६।।**

'पितृमातृगृहेष्वि'ति। तद्बलात् पितृमातृग्रहबलात्। पितृग्रहबलात् पितृगृहे मातृग्रहबलात् मातृगृहे। पितृमातृग्रहौ 'दिवार्कशुक्रा' वित्यादिनोक्तम्। नवमेशो वा पितृग्रहः मातृग्रहश्चतुर्थपो वा एतेनैवोक्तम्। 'बल' शब्देन योगदृष्टी चोच्येते। तत्तद्बलवशात्तत्तद्गृहे जन्म। अथवा 'दिवाकरेन्द्वो'रित्यादिना द्योतितः। पिता सूर्यः माता चन्द्रः तयोः गृहास्तु 'सिंहः कन्या, तुलाली च कुम्भान्त्यौ सूर्यराशय' इत्युक्ता राशयो गोजाश्वीत्यादिना सिद्धाः। सूर्यराशौ लग्नगते सति तदधिपे च सूर्यराशिगते जातस्य पितृसम्बन्धिनः स्वभावधनबान्धवादयः। चन्द्रराशौ लग्नगते तदधिपे चन्द्रराशिगते मातृसम्बन्धिस्वभावाः धनबान्धवादयः। लग्नतदधिपयोरेकस्य सूर्यराशिगतत्वे अन्यस्य चन्द्रराशिगतत्वे उभयसम्बन्धिनः स्वभावधनबान्धवादयः।

लग्नतदीशयोः बलसद्भावे पापदृष्टियोगाभावे च जन्मकालात् प्रभृति गृहसम्पदित्यादि। 'तरुसालादिषु नीचगैश्शुभैः' तरुतटे वा आदिशब्देन नदी च गृह्यते प्राकारमूले वा। 'नीचगैः शुभै'रिति शुभेषु सर्वेषु नीचराशिगतेषु च विशेषात् लग्नेशे नीचगते च तरुशालादिषु गृहधनाद्यभावात् तरुषु अर्थान्नवमे मार्गगृहे वा मार्गे वर्तते वनचरवृत्या जीवति च। 'बलयोगात् फलमंशकर्क्षयो'रित्युक्तत्वात् नीचारिगतत्वमंशकादपि निरूपणीयम्। 'यदि नैकगतैस्तु वीक्षिता'विति। एकराशिस्थैः सर्वग्रहैः लग्नेन्दू न वीक्षितौ यदि 'विजने' जनशून्ये अटव्यादिदेशे प्रसूयते।
तथा च सारावल्याम्-

'नेक्षन्ते लग्नेन्दू यद्येकस्था ग्रहास्तदाटव्याम्'। इति।



अथ लग्नचन्द्रौ एकग्रहेणापि न दृश्यते चेत् तदा विजने वर्तते असहायवान् अबन्धुः स्वयमेव चरतीत्यर्थः।

**मन्दर्क्षांशे शशिनि हिबुके मन्ददृष्टेऽब्जगे वा**
**तद्युक्ते वा तमसि शयनं नीचसंस्थैश्च भूमौ।**
**यद्वद्राशिर्व्रजति हरिजं गर्भमोक्षस्तु तद्वत्**
**पापैश्चन्द्रात् स्मरसुखगतैः क्लेशमाहुर्जनन्याः।। १७।।**

'मन्दर्क्षांश'इति। अस्य श्लोकस्य पूर्वार्धेन यत्र यत्र तमःप्रकाशौ जिज्ञास्येते तत्र तत्र परिज्ञानं उपदिश्यते। जन्मनि भोजनप्रश्ने मैथुनप्रश्ने शयने चौर्यदौ चास्य विनियोगः। मन्दराशावंशे मन्ददृष्टे मन्दयोगे वा पातालस्थाने वा जलराशौ वा चन्द्रस्य स्थित्या अन्धकारसद्भावः। मन्दस्यासितत्वात् हिबुकस्य पातालत्वात् अब्जराशेः जलमयत्वात् च तमस्सूचकत्वम्। शशिशब्देन लग्नराशिरपि सूच्यते। 'नीचसंस्थैश्च भूमा'वित्यनेन नष्टमुष्टी। 'मन्दर्क्षांशे'त्यादिना सूचितं अर्थान्तरमथोच्यते। एवं भूते चन्द्रे जातस्य तमसि अज्ञाने वर्तनमित्यर्थः। 'नीचसंस्थैः ग्रहैः भूमौ' नोर्ध्वशयनं शयनसाधनमपि न विद्यते दरिद्रः इत्यर्थः। एतच्चन्द्रार्कगुरुलग्नेशैर्विशेषान्निरूपणीयम्। द्रव्यज्ञानपरिज्ञाने तु लग्नांशे नीचगते लग्ने नीचस्थग्रहदृष्टयुते वा भूमिषु द्रव्यमित्यादि। अथ 'यद्वद्राशि'रित्यादि लग्नराशिर्यद्वत् हरिजं व्रजति गर्भमोक्षस्तु तद्वत्। 'तु' शब्दो हेतुविनिवृत्तिपक्षान्तरपरिग्रहेषु प्रयुज्यते। अत्र पक्षान्तरे प्रयुक्तः। 'गर्भमोक्ष', गर्भद्रव्याणां मोक्षः। 'गर्भमोक्षः'। स तु ऊर्ध्वमुखाधोमुखतिर्यङ्मुखराशिवशात्।
तथा च तद्विभागः कृष्णीये -

'ऊर्ध्वमुखो रविमुक्तो राशिर्युक्तस्त्वधोमुखो ज्ञेयः।
अभिलषितं तिर्यक् स्यात् तेषां केन्द्राश्च तत् संज्ञा'।। इति।।

ऊर्ध्वमुखे लग्ने कूसलादेः गृहस्य वा ऊर्ध्वभागं विभिद्य चोरो द्रव्यमाहृतवान्।

अधोमुखे अधोभागं विभिद्य तिर्यङ्मुखे पार्श्वभागं विभिद्य द्रव्यमाहृतवानित्यादि वक्तव्यम्। 'पापैश्चन्द्रात् स्मरसुखगतै'रित्यादि पूर्वं द्वितीयाध्याये 'शशिशुक्रौ' युवती इति बीजक्षेपः। पुनर्निषेकाध्याये 'दिवाकरेन्द्वो'रित्यत्राङ्कुरोत्पत्तिः। अत्र 'चन्द्रात् स्मरसुखगतैः क्लेशमाहुर्जनन्या' इत्युक्तत्वात् चन्द्रस्य मातृकारकोत्पत्तिः फलिता। शुक्रस्य भार्याकारकोक्तिरप्येवम्। 'शशिशुक्रौ युवती' इत्यत्र बीजक्षेपः। 'सितश्च मदन' इत्यत्राङ्कुरोत्पत्तिः। 'स्नाय्वस्थीत्या'दिना शुक्रस्य शुक्लमयस्य कथने पल्लवोद्भवः। 'शौक्र्यां गीतरती'त्यादौ सफलत्वम्। एवं सर्वत्र पूर्वापरयुक्त्या निरूपणीयम्। पूर्वं 'दिवाकरेन्द्वो'रित्यादिना चन्द्रस्य पापदृष्ट्या जननीव्यसनं भवतीत्युक्तम्। न केवलमेतावता। 'चन्द्रात् स्मरसुखगतैः पापै'रपि 'जननीक्लेशमाहुः'। 'आहु'रित्यनेन चन्द्रस्य मातृकारकत्वप्रसिद्धिस्सूचिता। शुक्राच्च भार्यारोगः। लग्नात् स्मरसुखगतैश्च भार्यामातृरोगादि वदेत् तद्विग्रहो वा।

तथा च आर्यासप्ततौ -

'चन्द्रे पापसमेते भृगुजे वा विग्रहः सह स्त्रीभिः।
वक्तव्यं द्यूनगतैः पापैः सुखसंस्थितैस्तद्वत्'।। इति।।

**स्नेहश्शशाङ्कादुदयाच्च वर्तिर्दीपोऽर्कयुक्तर्क्षवशाच्चराद्यैः।**
**द्वारं च तद्द्वास्तुनि केन्द्रसंस्थैर्ज्ञेयं ग्रहैर्वीर्यसमन्वितैर्वा।। १८।।**

'स्नेहश्शशाङ्का'दिति। अत्र चन्द्रलग्नादित्याद्यैर्दीपलक्षणमुच्यते। शशाङ्कस्य बलपुष्टौ तैलगुणः लग्नवशाद्वर्तिगुणः। अर्कवशात् ज्वालागुणः। अर्कयुक्तर्क्षवशात् दीपभाजनगुणः। अर्कचन्द्रलग्नानामानुकूल्ये बलवत्त्वे च जन्मकाले प्रसन्नो दीपो भवतीति ज्ञातव्यम्। लग्नार्कचन्द्राणामानुकूल्ये बलवत्त्वे च जातो दीपवत् प्रज्वलिततेजो भवति। आदित्यस्तावदात्मा मनश्चन्द्रः लग्नं शरीरं एभिस्त्रिभिरेव सकलशुभाशुभं निरूप्यते। त्रयोऽप्यनुकूलाश्चेत् पुरुषस्य साम्राज्यसामग्री अन्ये ग्रहास्तद्वशगा एव इति पुरुषस्य दीपतुल्यत्वं सूच्यते।



स्नेहस्य पुण्यपापकर्मत्वं कल्पनीयम्। तेषां मनःकारणत्वात् चन्द्रस्य मनोरूपत्वात् 'स्नेहश्शशाङ्का'दित्युपदेशेन चन्द्रवशात् सुखदुःखं निरूपणीयमिति सूचितम्। 'उदयाच्च वर्ति'रिति देहस्य वर्तितुल्यत्वं लग्नवशाद्देहगुणः। 'दीपोऽर्कयुक्तर्क्षवशा' दित्यनेन आत्मनो दीपज्वालातुल्यत्वे अर्कवशादा'त्मप्रभावा'दयः। 'दीपस्संहतमूर्तिरायततनुः' इत्यर्थान्तरमपि निरूपणीयम्। अत्र तु लग्नार्कचन्द्रवशात् दीपप्रसादकथने प्रश्नादौ विवाहादिकर्मसु दीपप्रसादे दृष्टे सति भविष्यत्फलं दीपवशाच्चिन्त्यते।

तथा च संहितायाम् -

'दीपस्संहतमूर्तिरायततनुर्निर्वेपथुर्दीप्तिमान्
निश्शब्दो रुचिरः प्रदक्षिणगतिर्वैडूर्यहेमद्युतिः।
लक्ष्मीं क्षिप्रमभिव्यनक्ति रुचिरां यश्चोच्छिखो दृश्यते
शेषञ्चापि तथाग्निलक्षणसमं योज्यं यथायुक्तितः'।।
वामावर्तो मलिनकिरणः सस्फुलिंगोल्पमूर्तिः
क्षिप्रं नाशं व्रजति विमलस्नेहवर्त्त्यन्वितोऽपि।
दीपः पापं कथयति फलं शब्दवान् वेपनश्च
व्याकीर्णार्चिर्विमलमसकृद्यच्च नाशं प्रयाति'।। इति।।

'अर्कयुक्तर्क्षवशा'दित्यत्राहोरात्रेऽर्कस्याष्टासु दिक्षु परिभ्रमणमस्ति।

तथा चोक्तम् -

'यामार्धमुदयात् पूर्वमारभ्याष्टासु दिक्षु च।
परिभ्रमति तिग्मांशुर्यामेष्वष्टसु सर्वदा'।। इति।।

अत्र सार्धसप्तमनाड्यो यामः, अनेन विधिना द्वादशराशिषु परिभ्रमणमवगन्तव्यम्। 'प्राच्यादि गृहे क्रियादयः' इत्युक्तविधिः। गृहं द्वादशधा विभज्य मेषादिषु राशिषु कल्पितेषु उदयात्पूर्वं पादोनचतुर्नाडिकाकालदारभ्य एकैकस्मिन् राशौ पञ्चसु नाडिकासु प्रादक्षिण्येन रविस्थितिरवगन्तव्यम्। अनेन विधिना यत्र जन्मकाले रविः तद्राशौ दीपसंस्थितिः तद्राशेश्चरादित्वेन दीपभाजनस्य चरादित्वमित्यर्थान्तरमपि श्रूयते। 'द्वारञ्च तद्वास्तुनि' इत्यादिकेन्द्रसंस्थैः राशिभिर्बलवद्भिः 'प्रागादीशाः क्रियवृषनृयुक्कर्कटाः' इत्युक्तन्यायेन

बलवद्राशिभागे प्रसवस्य गृहस्य द्वारमवगन्तव्यम्। अथवा केन्द्रसंस्थैः ग्रहैः वा ग्रहस्य या दिक् तस्यान्दिशि द्वारमवगन्तव्यम्। तत्राप्यूर्ध्वमुखादिराशिभिः ऊर्ध्वमध्याधोभागे द्वारमवगन्तव्यमिति। अर्थान्तरमपि सूच्यते। केन्द्रसंस्थैः ग्रहैः द्वारमवगन्तव्यम्। सर्वफलानामवगमद्वारमित्यर्थः। केन्द्रसंस्थैर्ग्रहैर्हि प्रश्नजन्मादौ शुभाशुभफलनिरूपणं क्रियते। तथा च वसिष्ठः -

'अपृच्छतः पृच्छतो वा जिज्ञासोर्यस्य कस्यचित्।
होराकेन्द्रत्रिकोणेभ्यः तस्य विद्यात् शुभाशुभम्'।।

'तद्वास्तुनि' तत्तद्राशौ भावभूते तस्य केन्द्रगतैः ग्रहैः तद्भावसम्पद्विपत्ती निरूप्येते। तथा च विद्वज्जनवल्लभाख्ये -

'आरोग्यस्य प्राप्तिमर्थस्य लाभं वादे जैत्यं सङ्गमञ्च प्रियेण।
सौम्याः केन्द्रस्थायिनः खेचरेन्द्राः कुर्वन्त्यन्ये त्वन्यथा सर्वमेतत्'।।

तथानेनोक्तं नष्टजातके -

'एवं कलत्रसहजात्मजशत्रुभेभ्यः प्रष्टुर्वदेदुदयराशिवशेन तेषाम्'।इति।

**जीर्णं संस्कृतमर्कजे क्षितिसुते दग्धं नवं शीतगौ**
**काष्ठाढ्यं न दृढं रवौ शशिसुते चानेकशिल्प्युद्भवम्।**
**रम्यञ्चित्रयुतन्नवञ्च भृगुजे जीवे दृढं मन्दिरं**
**चक्रस्थैश्च यथोपदेशरचनान्सामन्तपूर्वान् वदेत्।। १९।।**

'जीर्णं संस्कृत'मिति। भोजनगृहं वा प्रोषितगृहं वा मैथुनगृहं वा शयनगृहं वा, सर्वत्र कीदृशं गृहमिति निरूपणे अनेन श्लोकेन तन्निर्णीयते। जीर्णं करीषादिदूषितं संस्कृतं वाहनगोशालेत्यभिप्रायः मौढ्ये तद्गृहं दग्धम्। सर्वदाग्निसन्निधानं दग्धं स्थलं पाकशालेत्यर्थः। तद्गृहं क्षितिजस्य। नवमभिनवं रमणीयं दिव्यमित्याकूतं तच्चन्द्रस्य। काष्ठाढ्यं इन्धनान्वितमित्यर्थः। पाकशालेत्याशयः। तद्गृहं सूर्यस्य। 'अनेकशिल्प्युद्भवं' अनेकशिल्पिभिरुद्भवो यस्य तदनेक शिल्प्युद्भवम्। तद्गृहं बुधस्य। 'रम्यञ्चित्रयुतं नवञ्च'। 'च' शब्देन जीर्णमपि गृह्यते। शुक्रस्य बलपौष्कल्ये अभिनवं, बलहानौ जीर्णं,



पुराणमिति विशेषः। दृढं अविरतं वेदशास्त्रपठनात् संस्कृतं दृढमित्युक्तमिति। तथा च कृष्णाचार्यः -

'भौमस्य पाकशालामन्ये पाठ्यगृहं वदन्ति गुरोः।
सौम्यस्यालेख्यगृहं सवितुरपि पाकशालेति।।
इन्दोर्वेश्म तु दिव्यं दैत्यगुरोर्जीर्णमुच्यते वेश्म।
गोशाला रविसूनो राहोर्वर्चालयं ब्रुवते' इति।।

केन ग्रहेण गृहं निर्णीयते चेदुच्यते। 'केन्द्रसंस्थैर्ज्ञेयं ग्रहैर्वीर्यसमन्वितै'रिति पूर्वश्लोकोक्तमत्रापि ग्राह्यम्। केन्द्रस्थेषु बहुषु लग्नसंग्रहेणेति कस्य न प्रतियाति। तदभावे सप्तमग्रहेण लग्नं पश्यता अथवा 'हिबुकमम्बुसुखञ्च वेश्म' इति वचनात् चतुर्थग्रहेण तत्स्थानं द्रष्ट्रा दशमगतेन वा। तथा केन्द्रगतेषु बलवता गृहकथनं केन्द्रग्रहरहिते राशिभिरिति। न केवलं भवननिरूपणम्। अनेन अर्थान्तरमपि सूचितम्। अस्य द्रव्याकृतिरपि चिन्त्या। 'जीर्णं' परिणतम्। 'संस्कृत'मग्न्यादिसंस्कृतम्। धान्यधात्वादिमूलं चेद्वातशुष्कम्। अग्नि'दग्धं' वा। अग्निदग्धं धात्वादिदग्धैकदेशं मूलं वा। 'नवं शीतगो'रिदानीन्नवम्। 'काष्ठाढ्यं न दृढं' रवाविति। काष्ठाढ्यं बह्ववयवं विमूलं वा न दृढं धातुद्रव्यं वा। 'शशिसुतेनैकशिल्प्युद्भवं' अनेकशिल्पान्वितम्। 'रम्यं' नयनसुभगं 'नवञ्च भृगुजस्ये'ति। जीवे दृढं जीवात् दिव्याकृतिरपि सूचितम्। सर्वत्र गृहनिरूपणे ग्रहस्योच्चगतत्वे देवगृहं राजगृहं वा, स्वक्षेत्रगतत्वे स्वगृहं, नीचगतत्वेधमगृहं, मित्रगृहत्वे मित्रगृहं, शत्रुगृहत्वे शत्रुगृहमूह्यम्। एतत् 'स्वर्क्षांशगते स्वमन्दिरे' इति वचनादूह्यते।

'विप्रादित'इत्यादि वर्णविशेषादपि गृहविशेषश्चिन्त्यः।

तथास्मिन् गेहे निधिधनधान्याद्यपि चिन्त्यम्। तदपि पूर्वश्लोकोदितमेव। 'द्वारन्तु तद्वास्तुनी'त्यत्र 'तु'शब्देन केन्द्रसंस्थैर्ग्रहैस्तद्वास्तुनि 'वास्तु' विशेषश्चिन्त्यते। तथा च कृष्णीये -

'यदि केन्द्रगताः सौम्या लग्नादेकादशेऽपि वा नियतम्।
कुर्याद्धनवद् गेहं द्वारं स्वस्यान्दिशि प्रोक्तम्।।

अस्य श्लोकस्यायमर्थः - उक्तेषु स्थानेषु उच्चादिगस्सौम्यग्रहश्चेन्निधिः। विबलश्चेत्

न्यूनद्रव्यमित्याद्यूह्यम्। ग्रहस्योक्तं धातुरूपमूलादि चिन्त्यम्। 'चक्रस्थै'रित्यादि। तद्वास्तु स्थिरचक्रं कल्पयित्वा उक्तैः ग्रहैरुक्तान् गृहान् वदेत्। कीदृशान् सामन्तपूर्वान्? समन्ततो भूताः सामन्ताः ग्रहाः ते पूर्वा येषां ग्रहाणां तान् वदेत्। 'यथोपदेशरचनान्' 'जीर्णं संस्कृत'मित्याद्युक्तलक्षणात् देवाम्बग्नी'त्याद्युदितान् गृहानपि वदेत्।

**मेषकुलीरतुलालिघटैः प्रागुत्तरतो गुरुसौम्यगृहैश्च।**
**पश्चिमतश्च वृषेण निवासो दक्षिणभागकरौ मृगसिंहौ।। २०।।**

'मेषकुलीर' इति। केषुचिद्देशेषु प्रसवे सूतिकागृहं निर्णीयते। तत्रानेन श्लोकेन गृहात् कुत्र भागे सूतिकागृहमित्याकांक्षायां विधिः। गृहस्यान्तर्भागे सर्वदेशेषु दिग्विभागोऽनेन ज्ञातव्यः। तत्र मेषकुलीराद्यंशकाच्च बलिष्ठाश्चेच्चिन्त्याः।

**प्राच्यादिगृहे क्रियादयो द्वौ द्वौ कोणगता द्विमूर्तयः।**
**शय्यास्वपि वास्तुवद्वदेत् पादाः षड्त्रिनवान्त्यसंस्थितैः।। २१।।**

'प्राच्यादिगृह'इति। अनेन केवलं सूतिकागृहपरिज्ञानम्। हृतनष्टादिषु भोजनमैथुनादिषु च गृहविज्ञानं भवितव्यम्। तस्मिन् गतद्रव्यमप्यनेन विज्ञायते। यस्मिन् भागे अनेन विधिना सौम्यग्रहोऽवतिष्ठते तस्य सौम्यग्रहस्योक्तं द्रव्यं तत्र भवति। धातुमूलचिन्तायां उक्तम्। यस्मिन् भागे पापग्रहः तत्र शल्यम्।

तथा च कृष्णीये -

'यस्मिन् भागे सौम्यो गृहेषु तद्द्रव्यमादिशेत् तत्र।
यस्मिन् भागे पापस्तस्मिन् शल्यं विनिर्देश्यम्'।। इति।।

अनेन भूचक्रकल्पना चोक्तम्। प्राच्यां दिशि मेषवृषौ, आग्नेय्यां दिशि मिथुनं, कर्किसिंहौ दक्षिणस्यां, कन्या नैर्ऋत्यां, तुलाकीटौ पश्चिमायां, धनुर्वायव्यां, मकरकुम्भावुदीच्यां, मीन ऐशान्यां। एते राशयस्तद्दिशि व्याप्ताः। अनेन विधिना यस्मिन्



राशौ स्थितः प्रष्टा पृच्छति स आरूढः इति प्रसिद्धः। तस्य दुरवगमत्वात् भूमौ राशिचक्रमालिख्य प्रष्टा यं राशिं स्वर्णफलादिना स्पृश्यति स आरूढ इति परिकल्पना। तस्मात् प्रष्टारूढविदितत्वे तेन फलञ्चिन्तनीयम्। तस्याविदितत्वे स्वर्णफलादिना स्पृष्टेनारुढतया कल्पितेन इति प्रश्नादावनेनोपयोगः। 'शय्यास्वपी'त्यादि। अनेन खट्वालक्षणमुच्यते। शयानस्य शरीरस्य खट्वायाः यस्मिन् भागे शिरः तत्र लग्नं द्वितीयराशिः, तृतीयराशिः पुरस्तात्, दक्षिणपादः, चतुर्थपञ्चमराशी दक्षिणभागे, षष्ठः पश्चात् भागे दक्षिण पादः, सप्तमाष्टमौ पश्चिमभागे, नवमः पश्चाद् भागे वामपादः, दशमैकादशौ उत्तरभागे, द्वादशः पूर्वभागे वामपादः। एवं यानि यानि चतुरस्रवस्तूनि तेषु तेषु राशिभिरनेन विधिना अवयववीथीभागं कृत्वा लक्षणानि कथयेत्। खट्वाचिह्नानि अवयवभूतराशिस्थग्रहतुल्यानि। शुभदृष्टिवशादास्तरणविशेषश्चिन्त्यः। 'वस्त्रं स्थूलमभुक्त'मित्यादि विधिना द्रष्टृग्रहकृतवस्त्रादास्तरणं वदेत्।

तथा च सारावल्याम् -

'खट्वास्थितिर्भवनवद्युतविहगसमानि तत्र चिह्नानि।
आस्तरणानि च विद्याच्छुभदृष्टिकृतानि दैवज्ञः।।
प्राच्यादिगृहद्वितयं विलग्नतो राशयस्सगात्राणि।
आशासु शिरश्शयनं ग्रहतुल्यं लक्षणन्त्वत्र'।। इति।।

'वास्तुवत्' इत्यनेनार्थान्तरमपि सूच्यते। स्वगृहाश्रयभुवि 'प्राच्यादिगृह' इति न्यायेन राशयो लग्नादयः कल्प्याः। तैः राशिभिः तत्रस्थैः ग्रहैश्च वृक्षादयो मूलचिन्तायामुक्तानि मूलानि केन्द्रगतैर्बलवद्भिः ग्रहैर्वाच्यानीत्यादि चिन्त्यम्।

**चन्द्रलग्नान्तरगतैर्ग्रहैस्स्युरुपसूतिकाः।**
**बहिरन्तश्च चक्रार्धे दृश्यादृश्येऽन्यथा परे।। २२।।**

'चन्द्रलग्नान्तरगतै'रिति। लग्नादारभ्य चन्द्रस्थानावधयो ये राशयस्तेषु स्थितैः ग्रहैरुपसूतिकाः सूतिकासमीपस्थाः स्त्रियो वाच्याः। 'ग्रहै'रित्यस्यायमर्थः। लक्षणरूपविभूषणवयोवासोवर्णगुणस्वभावादयो ग्रहतुल्याः इति।

तथा च सारावल्याम् -

'लक्षणरूपविभूषणयोगस्तासां शुभाशुभैर्योगात्।
क्रूरैर्विरूपदेहा लक्षणहीनास्सुरौद्रमलिनाश्च'।। इति।

तासां दृश्यार्धगतैः ग्रहैर्बहिस्थितत्वमदृश्यार्धगतैरन्तस्थितत्वञ्च वक्तव्यम्। 'अन्यथा परे' दृश्यार्धगतैरन्तस्थितत्वञ्च अदृश्यार्धस्थितैर्बहिस्थितत्वञ्च प्रवदन्ति। बहिर्भागे खलु प्रकाशः। तत्रस्थानां खलु दृश्यता। तस्मात् दृश्यार्धगतैः ग्रहैस्तेषां बहिस्स्थितिः युज्यते। अथार्थान्तरमुच्यते। चन्द्रलग्नयोरान्तरगतग्रहैश्चन्द्रे लग्ने च आन्तरं अन्तर्भूतं गतं प्राप्तिर्येषां तैरुपसूतिकाः। चन्द्रलग्नसंयुक्तैरित्यर्थः। उपसूतिकास्सहायाः विज्ञातव्याः। एतदुक्तं भवति। चन्द्रलग्नौ क्रूरग्रहयुतवीक्षितौ चेत् क्रूराः मूर्खाः वधबन्धकराः सहायाः। शुभग्रहयुतवीक्षितौ चेत् सौम्याः विद्यायुक्ताः मिश्रग्रहयुक्तवीक्षितौ चेत् मिश्रप्रकृतयः। अस्य विधेः व्याप्तिर्विज्ञेया। यत्र यत्र बहिरन्तर्भागौ जिज्ञास्येते तत्रानेन तत्सिद्धिः। लग्नाधिपे दृश्यभागगते प्रकाशग्रहयुतदृष्टे आस्थानवासी। अदृश्यार्धभागस्थे गूढनिवासी, धनेशे तादृशे गूढधनः प्रकाशितधनः इत्यादि। कलत्रेशे तादृशे गूढकामः प्रकाशिकामश्चेत्यादि।

**लग्ननवांशपतुल्यतनुः स्याद्वीर्ययुतग्रहतुल्यतनुर्वा।**
**चन्द्रसमेतनवांशपवर्णः कादिविलग्नविभक्तभगात्रः।। २३।।**

'लग्ननवांशप' इति जन्मनि प्रश्ने च। 'लग्ननवांशपतुल्यतनुस्स्यात्' लग्ननवांशको हि सूक्ष्मशरीरम्। तस्मात्तदधिपेन शुभत्वं, सुस्थत्वं, बलवत्वञ्च निरूप्यायुश्चिन्त्यम्। लग्नस्य तन्नवांशकस्य वा बलवतो योऽधिपतिः तत्तुल्यतनुस्स्यात्। तस्य शुभत्वे बलवत्वे सुस्थत्वे पापगुलिकादियोगदृष्टिरहितत्वे च शरीरस्य शुभत्वम्। अन्यथाशुभत्वं च निरूपणीयमिति। ननु 'होरादयस्तनुकुटुम्बे'त्यादिना लग्नस्य शरीरत्वं नवांशकस्य प्राणात्मकत्वमुपदेशवशाच्चोक्तम्। तस्मात् 'लग्ननवांशकतुल्यतनु'रिति वक्तव्यम्। नैवम्। राशीनां तावज्जडत्वं, ग्रहाणां तु शक्तिमत्त्वम्। न ग्रहान् विना राशीनां फलदानमस्ति।



तथा च सारावल्याम् -

'भवनाधिपैः समस्तं जातकविहितं विचिन्तयेन्मतिमान्।
एभिर्विना न शक्यं पदमपि गन्तुं महाशास्त्रे'।। इति।।

लग्ने बलवान् ग्रहश्चेत् तत्तुल्यतनुः। 'चन्द्रयुक्तनवांशपवर्णः' चन्द्रस्य नवांशकवशादपि फलञ्चिन्त्यम्। तत्र लग्नचन्द्राभ्यामुभाभ्यामपि सर्वं फलञ्चिन्तनीयम्। 'लग्नात् पुत्रकलत्रभे शुभपतिप्राप्तेऽथवालोकिते चन्द्राद्वा' इति स्वयमेव वक्ष्यति भावफलाध्याये -

'शिशिरकरसमागमेक्षणानां सदृशफलं प्रवदन्ति लग्नजातम्'।
इति चन्द्रस्य लग्नतुल्यताप्रसिद्ध्यर्थमुपमानतया आधिक्योक्तिस्तत्रापि -

'फलमधिकमिदं यदत्र भावाद् भवनभनाथगुणैर्विचिन्तनीयम्'।
इत्यस्य ग्रन्थस्यार्थोऽत्र विव्रियते। तत्र यत्फलं भावाज्जायते तत्स्थानफलदृष्टिफलादधिकं भवति। स्थानफलभावफलयोर्विरोधे भावफलस्याधिक्यमित्यर्थः। तत्रापि बलवशात् फलस्योत्कर्षापकर्षौ विद्येते। जन्मकाले जीवे लग्नगते 'विद्वा'निति भावफलमुक्तम्। 'समुपचयविपत्ती सौम्यपापेषु सत्यः कथयती'त्यादिना देहपुष्टिश्च। तत्सर्वं बलवशादेव जातस्य भवति। 'सुहृदरिपरकीयस्वर्क्षतुङ्गस्थितानाम्' इत्याचार्यः स्वयमेव वक्ष्यति च। तस्मात् बलवशादेव यथोक्तं फलं भवति। तत्राप्ययं विशेषः। यस्मिन् गृहे लग्नगते यत् फलमुक्तं ग्रहस्थितराश्यधिपत्योर्बलवत्त्वे एव सम्यग्भवति। तदत्र 'भवनभनाथगुणैर्विचिन्तनीयम्' इत्युक्तम्। सर्वभावानामेवाप्ययं न्यायः।

अथवा भावाद्यत्फलं तद्भवनभनाथगुणैरधिकञ्चिन्तनीयम्। एतदुक्तं भवति - ग्रहे लग्नादिगते यत् फलमुक्तं तद् भवनभनाथगुणैः 'वृत्ताताम्रदृक्' इत्यादिभिस्सह विचिन्तनीयम्। अत्र पुत्रभावस्योदाह्रियते। पुत्रभावे जीवे स्थिते 'लग्नात् पुत्रकलत्रभे शुभपतिप्राप्तेऽथवालोकिते' इत्यादिना पुत्रसिद्धिः कल्पनीया। तत्रायं भवनभनाथगुणैर्विशेषः। पुत्रस्थानं मेषश्चेत् मेषस्य भवनस्य, तन्नाथस्य कुजस्य च ये स्वभावाः तैर्युक्तः पुत्रो भवति। 'वृत्ताताम्रदृक्' इत्यत्र वृत्ताताम्रदृक्त्वं उष्णशाकलघुभुक्त्वमटनत्वं कामित्वं दुर्बलजानुत्वञ्च तोयभीरुत्वं कुनखित्वं व्रणाङ्कितशिरस्त्वं मेषस्वभावाः। अन्ये कुजस्वभावाः। एवं राशितन्नाथस्वभावयुक्तं सर्वभावफलं निरूपणीयम्। पुनरपि विशेषोऽस्ति। पुत्रस्थानं युग्मराशिः

अधिपतिश्च स्त्रीग्रहः द्रष्टा च स्त्रीग्रहश्चेत् स्त्रीप्रजासिद्धिर्वक्तव्या।
तथा च सारावल्याम् -

'सितशशिवर्गे धीस्थे ताभ्यां दृष्टेऽथवापि संयुक्ते।
प्रायो बहुकन्यास्स्युः समराशिगतेऽन्यथा पुत्राः'।। इति।

पुत्रस्थानं नपुंसकराशिस्तदधिपतिना नपुंसकग्रहेण दृश्यमानञ्च यदा भवति, तदा बीजाभावात् दत्तपुत्रादिलब्धिः कथ्यते।
तथा च सारावल्याम् -

'मान्दं सुतर्क्षमिन्दुर्निरीक्षिते यदि शनैश्चरेण युतम्।
दत्तकपुत्रोत्पत्तिः क्लीबस्य बुधस्य चैवं स्यात्'।।

पुनरधिपतिनावस्थितराशौ यावन्तो भुक्तांशाः पुत्रांशाः तावन्तः पुत्रा भवन्ति। अंशकवशतः पुंस्त्रीक्षयादयः। तथा चोक्तम् -

'पुत्राधिपभुक्तांशा यावन्तः पुत्रकास्तु तावन्तः।
अंशवशेन विदध्यात् पुंस्त्रीवृद्धिक्षयादींश्च'।। इति।।

अत्र सङ्ख्याकरणविधिर्वियोनिजन्माध्यायोक्तमेव। सर्वभावानां फलं भवनभनाथगुणैर्विचिन्तनीयम्। एवं चन्द्रलग्नाभ्यामारभ्य सर्वे भावाः 'लग्ननवांशपतुल्यतनुः स्यात्' इत्युक्तविधिना निरूपणीयाः। प्रश्ने तु लग्नांशचन्द्रांशकेशानां गुणदोषवशात् प्रष्टुः शुभाशुभौ निरूपणीयाविति। 'कादिविलग्नविभक्तभगात्र' इति। भैर्निष्पादितगात्रः 'भगात्रः' कादिविलग्नादिश्च विभक्तं भगात्रम्। यस्यासौ 'कादिविलग्नविभक्तभगात्रः', 'कालाङ्गानी'त्यादिविधिना मेषादिराशिस्थानेषु लग्नादिराशिं कल्पयित्वा तेषु शुभाशुभग्रह-दृष्टियोगवशादवयवानां शुभाशुभत्वं निरूपणीयम्। प्रश्नादौ रोगस्य स्थानं निरूपणीयमिति। अनेन श्लोकेन भूयिष्ठं प्रश्ननिरूपणप्रकारमुक्तम्।

कन्दृक्छ्रोत्रनसाकपोलहनवो वक्त्रञ्च होरादय-
स्ते कण्ठांसकबाहुपार्श्वहृदयक्रोडानि नाभिस्तथा।
वस्तिः शिश्नगुदे ततश्च वृषणावूरू ततो जानुनी
जङ्घेङ्घ्रीत्युभयत्र वाममुदितैर्द्रेक्काणभागैस्त्रिधा।। २४।।



'कन्दृक्छ्रोत्रनसा'इति। कन्दृक् इत्यादिना षट्त्रिंशस्थानान्युक्तानि। लग्ने प्रथमद्रेक्काणे उदयति कादि वक्त्रान्तानि द्वादशस्थानानि; द्वितीये द्रेक्काणे कण्ठादिनाभ्यन्तानि; तृतीयद्रेक्काणे वस्त्याद्यंघ्र्यन्तानि। उदितैरर्दृश्यार्धस्थैः राशिभिः वामभागस्थानि स्थानानि अन्यैरन्यानि। एवं द्रेक्काणभागैस्त्रिधा देहे राशिस्थानान्यवगन्तव्यानि। एवं कल्पिते यत्र शुभग्रहाः यत्र पापग्रहास्तैर्लक्षणानि कथयेत्। अत्रायमुपदेशोऽवगन्तव्यः। लग्ने प्रथमद्रेक्काणे ग्रहाश्च स्वावस्थितराशौ प्रथमद्रेक्काणगाश्चेत्तत्फलं नियतम्। अन्यथा लक्षणान्तरैस्संवादश्चिन्त्यः। अयं विधिः जन्मनि प्रश्ने चोपयुज्यते।

तस्मिन् पापयुते व्रणश्शुभयुते दृष्टे च लक्ष्मादिशेत्
स्वर्क्षांशस्थिरसंयुते च सहजः स्यादन्यथाऽऽगन्तुकः।
मन्देऽश्मानिलजोऽग्निशस्त्रविषजो भौमे बुधे भूभवः
सूर्ये काष्ठचतुष्पदेन हिमगौ शृंग्यब्जजोऽन्यैश्शुभः।। २५।।

'तस्मिन् पापयुत'इति - तस्मिन्निति 'कादिविभक्तगात्रः' 'कन्दृगि'त्यादि कल्पिते चायं विधिः। प्रश्ने जातके चिन्त्यम्। 'मन्देऽश्मानिलज' इत्यस्य अश्मजोऽनिलजो वेति। विशेषः ग्रहावस्थितराशिवशाद्वा द्रष्टृयोगग्रहवशाद्वा कल्पनीयः। रोगप्रश्ने तस्मिन्नङ्गे रोगो वक्तव्यः।

समनुपतिता यस्मिन् गात्रे त्रयस्सबुधा ग्रहा
भवति नियमात्तस्यावाप्तिः शुभेष्वशुभेषु वा।
व्रणकृदशुभः षष्ठे लग्नात्तनौ भसमाश्रिते
तिलकमषकृद्दृष्टस्सौम्यैर्युतश्च स लक्ष्मवान्।। २६।।

'समनुपतिता' इति। यस्मिन् गात्रे 'कालाङ्गानि वराङ्ग' मित्यादिना 'कादिविलग्नविभक्तभगात्र' इत्यनेन च 'कन्दृक्' इत्यादिना च कुजस्य शिरः शुक्रस्य

मुखमित्यादिना राशिभिरधिपतीनां स्थानविधिना च। त्रयो ग्रहास्त्रिभिर्लक्षणैस्समनुपतिताः। बुधस्य आश्रयवशात् फलमिति द्योतयितुं सबुधाः इत्युक्तम्। तस्मिन्नङ्गे अशुभाश्चेदशुभेष्ववाप्तिः शुभश्चेत् शुभेष्ववाप्तिः त्रिभिर्लक्षणैस्संवादो ज्ञायते चेन्नियमेन शुभाशुभफलं वक्तव्यमित्यर्थः। 'व्रणकृदशुभ' इति लग्नादारूढाद्वा षष्ठस्थानं रोगस्थानम्। तत्राशुभग्रहश्चेद्रोगो भवति।

तथा च कृष्णीये -

'क्रूरे षष्ठे लग्नात् स्वाङ्गविभागे करोति वैकल्यम्।
केन्द्रत्रिकोणराशिषु न स्युर्गुरुसौम्यभृगुपुत्राः'।। इति।।

सर्वत्र दोषप्रदस्य ग्रहस्य शुभदृष्टौ दोषस्य न्यूनत्वं, शुभप्रदस्य ग्रहस्याशुभदृष्टौ शुभस्यापि न्यूनत्वमिति सिद्धं भवति।

इति गोविन्दसोमयाजिकृतौ बृहज्जातकव्याख्यायां दशाध्याय्याख्यायां पञ्चमाध्यायः

# षष्ठाध्यायः
## अरिष्टाध्यायः

**सन्ध्यायां हिमदीधितिहोरा पापैर्भान्तगतैर्निधनाय।**
**प्रत्येकं शशिपापसमेतैः केन्द्रैर्वा स विनाशमुपैति।। १।।**

'सन्ध्यायां' इति। अथायुर्निरूपणप्रकार उच्यते। तत्र प्रथममरिष्टयोगा उच्यन्ते। सद्योऽरिष्टयोगा एकवर्षान्तमृत्युप्रदाः। अरिष्टयोगाः द्वादशवर्षान्तमृत्युप्रदाः। एते दशानिरपेक्षाः। योगारिष्टास्तु द्वात्रिंशद्वर्षान्तमृत्युप्रदाः। ततः परं सप्ततिवर्षान्तमृत्युप्रदाः मध्यमायुर्योगाः। ततःपरं शतवर्षान्तमृत्युप्रदाः दीर्घायुर्योगाः। एते त्रिविधा दशा सापेक्षाः। ततः परममितायुर्योगाः। एतेषु षट्संज्ञाभिन्नेषु योगेषु संक्षेपेण सद्योऽरिष्टयोगा अत्रोच्यन्ते। 'सन्ध्याया'मिति। सन्ध्याशब्देन सन्ध्याकालस्य अशुभत्वमपि सूचितम्।

तथा चोक्तम् -

'सन्ध्यायां दिग्दाहेऽनलघाते भूमिकम्पनिर्घाते।
ग्रहणपरिवेषकाले जातोऽप्यल्पायुरत्यन्तम्'।। इति।।

'हिमदीधितिहोरा पापैर्भान्तगतै'रिति। हिमदीधितिना चन्द्रेण होरया लग्नराशिना पापैश्च जातो निधनाय भवति। अथवा हिमदीधितिहोरयोः पापैर्दोषैः निधनाय भवति। चन्द्राल्लग्नाद्वा अष्टमेशद्वाविंशद्रेक्काणयोः चतुःषष्ट्यंशकयोश्च चन्द्रलग्नयोश्च गुणदोषवशादायुश्चिन्त्यमित्यर्थः। 'द्वाविंशतिमस्तु कारणं द्रेक्काण' इत्यादि श्लोकादिभिरुपरिष्टादेतत्सर्वं सिद्ध्यति। अत्र 'पाप'शब्देन दुर्निमित्तानि च सूच्यन्ते। 'पापैर्भान्तगतै'रिति। राश्यन्तर्गतेन चन्द्रेण लग्नेन च जातो निधनाय भवति।

तथा चोक्तम् -

'राशिसन्धिषु ये जातास्ते नरा गतजीविताः'। इति।

'राश्यन्तगे सद्भिरनीक्ष्यमाणे चन्द्रे' इति वक्ष्यति च। तथा दुर्निमित्तैर्भान्तगतैः जन्मना लग्नराशिगतैः जातो निधनाय भवति। ननु कथं 'पाप'शब्देन दुर्निमित्तानि वाच्यानि। उच्यते; दुर्निमित्तानि पापफलं निवेदयन्ति खलु।

तथा च संहितायाम् -

'अन्यजन्मान्तरकृतं कर्म पुंसां शुभाशुभम्।
यत्तस्य शकुनं पाकं निवेदयति पृच्छताम्।।

एतदुद्दिश्य 'सन्ध्यायां दिग्दाह' इत्यादि श्लोके दिग्दाहादि दुर्निमित्तान्युक्तानि।

अथ 'प्रत्येक'मित्यादि। 'प्रत्येकं शशिपापसमेतैः केन्द्रैः' शशिना पापेन च समेतैः केन्द्रैः स भावो विनाशमुपैति। यो भावः केन्द्रेषु शशिपापसमेतः स विनाशमुपैति। शशिपापाभ्यां सहोपेतश्चेत् 'विनाशं' विशेषेण नाशमुपैति अविद्यमानत्वमुपैतीत्यर्थः। केवलं पापेनोपेतश्चेत् 'नाश'मदर्शनमुपैतीत्यर्थादुक्तं भवति।

'पापैर्लग्नोपगतैः शरीरपीडां विनिर्दिशेत् कलहम्।
सुखसंस्थैस्सुखनाशं गृहभेदं बन्धुविग्रहञ्च वदेत्।।
अस्ते गमनविरोधः कर्मस्थैः कर्मणामपि विनाशः'। इति।

**चक्रस्य पूर्वेतरभागगेषु क्रूरेषु सौम्येषु च कीटलग्ने।**
**क्षिप्रं विनाशं समुपैति जातः पापैर्विलग्नास्तमयाभितश्च।। २।।**

'चक्रस्य' इति। न केवलमायुर्विषयमेतत्, सर्वकार्योपयोगी।

तथा च कृष्णीये -

'मध्याह्नचतुर्थाभ्यां पूर्वार्धगताश्शुभास्समृद्धिकराः।
कुर्युः पापा हानिं सर्वे मध्याच्च्युता यवनाः'। इति।

'पापैर्विलग्नास्तमयाभित'श्चेति। अनेन चत्वारो योगाः। षष्ठद्वादशगैः द्वितीयाष्टमगैः पापैश्च। अशुभगदिता योगा याप्या भवन्ति शुभेक्षिताः' इत्युक्तत्वात् योगकर्तारश्शुभेक्षिता



न भवेयुः न शुभयुक्ताश्च। चन्द्रलग्नेशजन्मेश्वराणां बलाबलमन्वेष्यम्।

'फलमधिकमिदं यदत्र भावाद् भवनभनाथगुणैर्विचिन्तनीयम्' इत्युक्तत्वात्।

**भौमे विलग्ने शुभदैरदृष्टे षष्ठेऽष्टमे वार्कसुतेन युक्ते।**
**तौ चार्कसंस्थौ शुभदृष्टिहीनौ जातस्य सद्यः कुरुतः प्रणाशम्।। ३।।**

अस्य श्लोकस्य स्पष्टतरोऽर्थः।

**पापावुदयास्तगतौ क्रूरेण युतश्च शशी।**
**दृष्टस्तु शुभैर्न यदा मृत्युश्च भवेदचिरात्।। ४।।**

'पापावुदयास्तगता' विति। लग्नास्तयोः पापौ चन्द्रश्च पापसहितः तदारिष्टयोगः। 'दृष्टस्तु शुभै'रित्यादिनास्यापवादरहितत्वम्। स्वतश्शुभदृष्टिरपवाद इति सिद्धम्। तथा च सारावल्याम् -

'चन्द्रः शुभवर्गस्थः क्षीणोऽपि शुभेक्षितः सुहृद्भागे-
ऽरिष्टहराणां श्रेष्ठो वातहराणां यथा वस्तिः'।। इति।।

'स्वेऽतिमित्रांशक' इति च निरूपणीयम्।

**क्षीणे हिमगौ व्ययगे पापैरुदयाष्टमगैः।**
**केन्द्रेषु शुभाश्च न चेत् क्षिप्रन्निधनं प्रवदेत्।। ५।।**

'क्षीणे हिमगा'विति। 'केन्द्रेषु शुभाश्च न चेदि'ति सर्वारिष्टस्यापवादः।

उत्तरत्र वक्ष्यति च -

'गुरुशशिसहिते कुलीरलग्ने भृगुतनये शशिजे च केन्द्रयाते।
भवरिपुसहजोपगैश्च शेषैरमितमिहायुरनुक्रमाद्विना स्यात्'।। इति।।

अमितायुर्योगकथने गुरुदयश्च गुरोश्चन्द्रयोगश्च शशितनयशुक्रयोः केन्द्रगत्वं शेषाणां त्रिषडायगतत्वञ्चारिष्टयोगापवादलक्षणमिति सिद्ध्यति।

**क्रूरसंयुतश्शशी स्मरान्त्यमृत्युलग्नगः।**
**कण्टकाद् बहिश्शुभैरवीक्षितश्च मृत्युदः।। ६।।**

'क्रूरसंयुत' इति। क्रूरग्रहैरबलैर्वा संयुक्तः स्मरान्त्यमृत्युलग्नगः चन्द्रो मृत्युदः शुभाः यदि न केन्द्रगताः।

तथा च सारावल्याम् -

'व्ययाष्टसप्तोदयगे शशाङ्के पापेन युक्ते शुभदृष्टिहीने।
केन्द्रेषु सौम्यग्रहवर्जितेषु प्राणैर्वियोगं व्रजति प्रजातः'।। इति।।

**शशिन्यरिविनाशगे निधनमाशु पापेक्षिते**
**शुभैरथ समाष्टकं दलमतश्च मिश्रैः स्थितिः।**
**असद्भिरवलोकिते बलिभिरत्र मासं शुभे**
**कलत्रसहिते च पापविजिते विलग्नाधिपे।। ७।।**

'शशिन्यरिविनाशग' इति। अरिविनाशगे केवलं पापेक्षिते शशिनि आशु निधनम्। केवलं शुभेक्षिते समाष्टकं जीवति। मिश्रेक्षिते दश वर्षचतुष्कं जीवति। शुभैस्त्रिभिरेकेन पापेन दृष्टश्चेत् सप्तवर्षं जीवति। शुभैस्सर्वैर्द्वाभ्यामशुभाभ्यां दृष्टश्चेत् पञ्चवर्षं वा षड्वर्षं वा जीवति। पापैस्त्रिभिश्शुभेनैकेन दृष्टश्चेत् द्विवर्षं जीवति। पापैस्त्रिभिर्द्वाभ्यां शुभाभ्यां दृष्टश्चेत् त्रिवर्षम्। पापैस्त्रिभिरेकेनापि शुभेन न दृष्टश्चेत् एकवर्षं जीवति।

तथा च सारावल्याम् -

'वर्षान्मारयति शशी षष्ठाष्टमराशिसंस्थितो लग्नात्।
सद्यः क्रूरैर्दृष्टस्सौम्यैरब्दाष्टकाच्चैव।।
अशुभशुभैः संदृष्टे वर्षचतुष्केण निर्दिशेदन्तम्।
अनुपातः कर्तव्यं प्रोक्तादूनग्रहैर्दृष्टः।।



अस्यापवादमुपरिष्टाद्वक्ष्यति

'अशुभकृदुडुपोह्नि दृश्यमूर्तिर्गलिततनुश्च शुभोऽन्यथान्यदूह्यम्'।

अह्नि दिवा दृश्यमूर्तिः पूर्वपक्षगतश्चन्द्रोऽशुभकृत् अरिष्टयोगप्राबल्यकृत्। 'गलिततनुश्च' शुभः। दिवा गलिततनुः अपर पक्षे चन्द्रः शुभः अन्यथान्यदूह्यम्। पूर्वपक्षे निशायां चन्द्रश्शुभः।

तथा च सारावल्याम् -

'पक्षे सिते भवति जन्म यदि क्षपायां
कृष्णेऽथवाहनि शुभाशुभदृश्यमानः।
तच्चन्द्रमा रिपुविनाशगतोऽपि यत्ना-
दापत्सु रक्षति पितेव शिशून्न हन्ति'।। इति।।

'असद्भिरवलोकिते' इत्यादि। बलिभिर्वक्रिभिरत्र अरिविनाशे सहिते कस्मिंश्चित् शुभग्रहे वक्रिभिः पापैर्दृष्टे मासं जीवति।

तथा चोक्तम् -

'शशिवत्सौम्याः पापैर्वक्रिभिरवलोकिता न शुभदृष्टाः।
मासेन मरणदास्स्युः पापजितो लग्नपश्चास्ते' ।। इति।।

लग्नाधीशस्य बलादायुश्चिन्त्यमिति सूचितम्। 'कलत्रसहिते च' इत्यत्र 'च' शब्देनारिविनाशस्थानञ्च सूचितम्।

तथा च सारावल्याम् -

'राशिप्रमितैर्वर्षैर्मारयति विलग्नपो रिपुस्थाने।
मासैर्द्रेक्काणपतिर्दिवसैरंशाधिपो हन्ति'।।

कलत्रसहिते इत्यत्र 'च' शब्देन अन्यदपि सूचितम्।

तथा च सारावल्याम् -

'लग्नाधिपजन्मपती षष्ठाष्टमरिःफगौ प्रसवकाले
अस्तमितौ मरणकरौ मासे षष्ठाष्टमे वापि।
चन्द्रः कुजरवियुक्तः स्वसुतस्थाने शुभैर्न संयुक्त।
मरणं शिशोः प्रयच्छति नवमे वर्षे न सन्देहः'।। इति।।

**लग्ने क्षीणे शशिनि निधनं रन्ध्रकेन्द्रेषु पापैः**
**पापान्तस्थे निधनहिबुकद्यूनयुक्ते च चन्द्रे।**
**एवं लग्ने भवति मदनच्छिद्रसंस्थैश्च पापै-**
**र्मात्रा सार्धं यदि न च शुभैर्वीक्षितः शक्तिमद्भिः।। ८।।**

'लग्ने क्षीणे' इति। लग्ने क्षीणे पृष्ठोदये शशिनि निधनं गतवति रन्ध्रकेन्द्रेषु पापैः, लग्ने पृष्ठोदये रन्ध्रकेन्द्रेषु पापैरित्येको योगः। लग्ने पृष्ठोदये शशिनि निधनं गच्छतीत्तपरः। शशिनि निधनं गच्छति रन्ध्रकेन्द्रेषु पापैरिति तृतीयः।

तथा च कृष्णीये -

'पृष्ठोदये विलग्ने क्रूराः लग्नास्तसुखखनिधनगताः।
निधने च शीतरश्मिर्म्रियते रोगार्दितः पुरुषः' ।। इति।।

'पापान्तस्थे' एकराशिस्थितयोः पापयोर्वा द्वितीयद्वादशयोर्वा मध्ये चन्द्र इति। 'पापान्तस्थे निधनहिबुकद्यूनयुक्त' इत्यत्र धुरुधुरा योगापवादः।

तथा च कृष्णीये -

'चतुरश्रधुरुधुरगताः पापाः कुर्वन्ति मरणमचिरेण।
'सौम्यैर्दृष्टा रोगो नात्र प्रभवेद्बलोपेतैः'।। इति।।

'एवं लग्ने भवती'त्यादि चन्द्रलग्नावुभौ पापमध्यगौ मात्रा सार्धं निधनं गच्छति। एतत् 'अशुभद्वयमध्यसंस्थिता'वित्यादियोगे 'मदनच्छिद्रसंस्थाः पापग्रहाः' विनैवोक्तत्वात् अत्रायं श्लोकः। किमत्रोच्युते? तत्र तु गर्भनाश उक्तः। अत्र तु जातस्य संवत्सरान्तर्मरणमुक्त्वा गर्भस्यापायबाहुल्यमिति वक्ष्यामः।

**राश्यन्तगे सद्भिरवीक्ष्यमाणे चन्द्रे त्रिकोणोपगतैश्च पापैः।**
**प्राणैः प्रयात्याशु शिशुर्वियोगमस्ते तु पापैस्तुहिनांशुलग्ने।। ९।।**

'राश्यन्तगे' इति। राशिषु केचित् मृत्युभागाः शास्त्रान्तरेषु कथिताः परिपठिताः। तेषु स्थितश्चन्द्रो भागसङ्ख्येष्वब्देषु मृत्युदो भवति। 'अन्त'श्शब्दोऽत्र मृत्युपर्यायः। मृत्युभागाः



शास्त्रान्तरेषु द्रष्टव्याः।

तथा चोक्तम् -

'क्षीरप्रायो लोकमित्रेश्वरज्ञः काव्यश्चित्रो भाग्यलोके मुखेन।
मौनी राज्यं मृत्युभागाः प्रदिष्टा मेषादीनां वर्णसङ्ख्यैर्हिमांशोः।।
मृत्युभागस्थितश्चन्द्रः पापयुक्तो न सौम्यगः।
निधने वापि केन्द्रे वा मात्रा सह विनश्यति'।। इति।।

अथवा 'राश्यन्तगो' राश्यरिष्टम्। राशिमृत्युभागेऽपि जातस्यारिष्टयोगोऽस्ति। राशिमृत्युभागा अपि शास्त्रान्तरेषूक्ताः। तथा चोक्तम् -

'यज्ञे धन्यो पुत्ररौद्रं मखज्ञः प्राज्ञो भानुर्गोत्रजाया नरज्ञः।
भद्रोऽनित्यं मृत्युभागा प्रदिष्टा मेषादीनां तेषु जातोऽप्यनायुः।।
दारुणान्तर्दशाकाले राश्यरिष्टसमन्विते।
तस्मिन् काले मृतिं विद्यादन्यथा रोगमाप्नुयात्'।। इत्युक्तत्वात्।।

त्रिकोणोपगतैः पापैश्चारिष्टम्।

तथा चोक्तम् -

'त्रिकोणस्थेषु पापेषु कुष्ठं शूलं मतिभ्रमः।
स्थानभ्रंशः कुलभ्रंशो वंशच्छेदोऽथवा भवेत्'।।

'अस्ते तु पापैस्तुहिनांशुलग्नगे' इति। उद्यद्द्रेक्काणादारभ्य एकोनविंशद्द्रेक्काणे पापे स्थिते लग्ने चन्द्रे चारिष्टम्।

तथा च सारावल्याम् -

'उद्यद्द्रेक्काणजामित्रे यस्य स्याद्दारुणग्रहः।
होरागतः शशाङ्कश्च सद्यो हरति जीवितम्'।।

**अशुभसहिते ग्रस्ते चन्द्रे कुजे निधनाश्रिते**
**जननिसुतयोर्मृत्युर्लग्ने रवौ तु स शस्त्रजः।**
**उदयति रवौ शीतांशौ वा त्रिकोणविनाशगै-**
**र्निधनमशुभैर्वीर्योपेतैश्शुभैरयुतेक्षिते।। १०।।**

'अशुभेति' - अशुभसहिते ग्रस्ते ग्रस्ततया चन्द्रस्य पूर्णबलो न विद्यते। तथा च सारावल्याम् -

'ग्रहणोपगते चन्द्रे सक्रूरे लग्नगे कुजेऽष्टमगे।
मात्रा सार्धं म्रियते चन्द्रवदर्केण शस्त्रेण'।।

'अशुभसहिते ग्रस्ते चन्द्रे कुजे निधनाश्रिते' इत्येकोऽरिष्टयोगः लग्नेशेन।
तथा च होरासारे -

'ग्रहणपरिवेषकाले जातः पापग्रहे विलग्नस्थे।
लग्नेशे बलहीने जीवति पक्षत्रयं त्रिमासं वा'।।

'उदयति रवौ' इत्यादि। उदयति चन्द्रे रवौ वा त्रिकोणविनाशगैश्च पापैर्निधनम्। 'निधन'शब्देन इष्टोपघातत्वं सूचितम्।
तथा च विद्वज्जनवल्लभाख्ये -

'केन्द्रत्रिकोणोपगतैः शुभाख्यैः पापेषु केन्द्राष्टमवर्जितेषु।
ब्रूयान्नराणामखिलार्थसिद्धिं विपर्ययस्स्यात् पुनरन्यथास्थैः'।।

'लग्ने क्षीणे शशिनि निधनं रन्ध्रकेन्द्रेषु पापैः' इति पूर्वमुक्तम्। इदानीं 'उदयति रवौ शीतांशौ वा त्रिकोणविनाशगैर्निधनमशुभैः' इत्युक्तम्। तस्मात् सर्वेषु केन्द्रत्रिकोणाष्टमेषु पापाश्च लग्ने चन्द्रश्च सर्वकार्येषु कष्ट इत्युक्तं भवति। 'शशाङ्कलग्नोपगतै' रित्यादिनाप्ययमर्थस्सूचितः।

**असितरविशशाङ्कभूमिजैर्व्ययनवमोदयनैधनाश्रितैः।
भवति मरणमाशु देहिनां यदि बलिना गुरुणा न वीक्षिताः।। ११।।**

'असितरवी'ति। असितादयश्चत्वारो व्ययादिस्थानगतास्सहवर्तमानाः आशु मृतिप्रदाः 'देहिनां' इति। आत्मनो वा भ्रातुर्वा बन्धोर्वा पुत्रस्य वा भार्याया वा गुरोर्वा स्वसम्बन्धिबन्धूनां नाश इति। यावत् यत् भावादारभ्य उक्तेषु व्ययादिस्थानेष्वसितादयः स्थिता चत्वारो ग्रहाः तस्यात्मादिभावभूतस्य देहिनो नाश इत्यर्थः। अथवा 'व्ययनवमोदयनैधनाश्रितैः' इति। 'व्ययनैधनं' सप्तमस्थानं तत्रगताश्चेत् भार्यानाशः।



'नवमनैधनं' चतुर्थस्थानं तत्रगताश्चेत् मातृनाशः बन्धुनाशो वा। उदयनैधनमष्टमस्थानं तत्र गताश्चेत् स्वदेहनाशः इत्यादि। व्युत्क्रमेण 'नैधनोदयनवमव्ययगतै' रसितादिभिरप्यरिष्टयोगः। 'यदि बलिना गुरुणा न वीक्षिताः' इति। सर्वेषां योगानां कर्तारो ये ग्रहाः तेषाञ्च सूचितमिति। गुरुदृष्टौ सत्यां अरिष्टयोगवैफल्यं सूचितम्। शुभदृष्टिषु गुरुदृष्टेराधिक्यम्।

**सुतमदनवमान्त्यलग्नरन्ध्रेष्वशुभयुतो मरणाय शीतरश्मिः।
भृगुसुतशशिपुत्रदेवपूज्यैर्यदि बलिभिर्न्न युतोऽवलोकितो वा।। १२।।**

'सुतमदे'ति। तत्र भृगुसुतादिदृष्टियोगौ चन्द्रस्य सर्वत्रारिष्टयोगापवादत्वेनोक्तौ। 'अशुभयुते'त्यनेन अशुभक्षेत्रांशकदृष्टियोगाश्चिन्त्याः। अर्थान्तरम् - सुतमदननवमान्त्यलग्नरन्ध्रेष्वशुभयुतश्शीतरश्मिर्मरणाय। सुतान्त्यलग्नरन्ध्रेषु सुतनाशाय। मदनान्त्यलग्नरन्ध्रेषु भार्यानाशाय। नवमान्त्यलग्नरन्ध्रेषु गुरुनाशाय इत्यादि। एवं अरिष्टाध्याये उक्तः। एतेऽरिष्टयोगाः आचार्येण सुपरीक्षिताः प्रोक्ताः। ननु च किमन्यैस्सारावल्यादिशास्त्रैरुक्ताः अन्येऽरिष्टयोगाः नोक्ताः। उच्यते तेषु शास्त्रेषु अरिष्टयोगाः बहवो निर्दिष्टाः। तेषामपवादाश्च तथैवोक्ताः। अपवादानां मध्ये कस्यचिदपवादस्य सदा सम्भवात् अरिष्टयोगानामफलत्वमपि सिद्धं भवति। तस्मात्तदुभयकथनमनर्थं भवतीति मत्वा संक्षेपात् केचित् सारभूता एवाचार्येणोक्ताः। तस्मादप्यरिष्टानान्तदपावादानाञ्च बलाबलविज्ञानादेव फलनिष्पत्तिज्ञानमिति शास्त्रानन्तरैस्तेषां विज्ञानं कर्तव्यम्। 'पृथुविरचितशास्त्राद् गत्यनूकादि च चिन्त्यं' इत्याचार्येणात्रोक्तत्वात् शास्त्रान्तरं चिन्त्यमिति सिद्धं भवति। ननु कस्मादायुर्योगाः नोक्ताः। पूर्वापरपर्यालोचनेन सिद्धं भवतीति। 'शशाङ्कलग्नोपगतैश्शुभग्रहैः' इत्युक्तम्। 'केन्द्रेषु शुभाश्च न चेत् क्षिप्रं निधनं प्रवदेत्' इत्यत्र केन्द्रे शुभाः आयुष्कराः इति विज्ञायते। 'क्रूरेण युतश्च शशी दृष्टस्तु शुभैर्न यदा' इत्यत्र लग्नाच्चन्द्राच्च केन्द्रे शुभाः सन्ति चेत् आयुर्भवतीत्यवगम्यते। 'मात्रा सार्धं यदि न च शुभैर्वीक्षितश्शक्तिमद्भिः' इत्यत्र शुभानां बलवत्त्वे सत्येव वीक्षणफलमिति ज्ञातव्यम्। 'यदि बलिना गुरुणा न वीक्षिता' इत्यनेन दोषहरणे शुभवर्धने च शुभानां मध्ये गुरोर्वीर्याधिक्यमस्तीत्युक्तं भवति।

तथा चोक्तम् -

'निश्शेषदोषहरणे शुभवर्धने च विर्यं गुरोरधिकमस्त्यखिलग्रहेभ्यः।

तद्वीर्यपाददलशक्तिभृतौ ज्ञशुक्रौ चान्द्रं बलं तु निखिलग्रहवीर्यबीजम्'।। इति।

'शुभं वर्गोत्तमे जन्म वेसिस्थाने च सद्ग्रहे।

अशून्येषु च केन्द्रेषु कारकाख्यग्रहेषु च'।। इति वक्ष्यति।

पुनः 'होरादयस्तनुकुटुम्बसहोत्थबन्धुपुत्रारिपत्निमरणानि शुभास्पदायाः रिःफाख्यमिति' प्रथमं द्वादशभावा उक्ताः। तस्मान्मरणमष्टमराशौ तनुर्लग्नराशौ च चिन्त्यमिति सिद्धं भवति।

कथञ्चिन्त्यत इति।

'सुहृदरिपरकीयस्वर्क्षतुङ्गस्थितानां फलमनुपरिचिन्त्यं लग्नदेहादिभावैः।

समुपचयविपत्ती सौम्यपापेषु सत्यः कथयति विपरीतं रिःफषष्ठाष्टमेषु।।

इत्युक्तत्वात् लग्नादिभावेषु सौम्यपापेषु सत्सु समुपचयविपत्ती विज्ञातव्ये। रिःफे शुभे सति व्ययाभावः। जीवस्य तु खलश्चेत्युक्तत्वात्। 'फलमधिकमिदं यदत्र भावाद्भवनभनाथगुणैर्विचिन्तनीयम्' इत्युक्तमपि सर्वत्र चिन्त्यम्। तन्वादिभावानां तद्राशि तन्नाथयोर्बलवत्त्वे तद्भावपुष्टिः अन्यथा हानिः। 'शुभाश्च न चेत्' इत्यनेन केन्द्रे शुभानामायुष्करत्वमस्ति।

तथा चोक्तमन्यत्र -

'त्रिषडेकादशसंस्थैः पापैः सौम्यैः केन्द्राश्रितैरशीत्यब्दम्।

जीवति तत्रोद्भूतो मिश्रैर्वा षष्टिवर्षन्तु'।। इत्युक्तत्वात्।

'गुरुचन्द्रौ हिबुकस्थौ लग्नेशे लाभगे बलाढ्ये च।

सौम्ये दशमं याते त्वशीतिवर्षञ्च परमायुः'।। इति।।

'लग्ने क्षीणे शशिनि निधनं रन्ध्रकेन्द्रेषु पापैः' इति केन्द्राष्टमेषु पापानां अतिकष्टत्वात्। 'त्रिकोणोपगतैश्च पापैः' इति त्रिकोणोपगतानां पापानामप्यतिकष्टत्वमुक्तम्। तस्मादतिशयेन कष्टाः केन्द्रत्रिकोणनिधनेषु पापाः इति सिद्धं भवति। अन्यथा शुभाश्च भवन्ति।



तथा चोक्तम् -

'केन्द्रत्रिकोणनिधनेषु न यस्य पापा लग्नाधिपस्सुरगुरुश्च चतुष्टयस्थौ।

भुक्त्वा सुखानि विविधानि सुपुण्यकर्मा जीवेच्च वत्सरशतं स विमुक्तरोगः'।। इति।

'अहनि निशि च चन्द्रे स्वेऽधिमित्रांशके वा सुरगुरुसितदृष्टे वित्तवान् स्यात् सुखी च' अरिष्टनाशकत्वमप्यनेनोक्तम्। 'सौम्यैः स्मरारिनिधनेष्वधियोग इन्दोः' इत्यादि योगोऽप्यरिष्टहरः। 'होराफलं लग्नपतेः समानम्' इति वक्ष्यमाणेन जातकफलं समस्तं लग्नाधिपसमानम्। लग्नपतौ बलाढ्ये शुभयुते दृष्टे पापदृष्टियोगरहिते च होराफलं शुभं परिपूर्णं भवति। अन्यथा ह्यशुभं भवति। चन्द्रप्राधान्येन लग्नप्राधान्येन लग्नांशप्राधान्येन चन्द्रांशकप्राधान्येन वा आयुर्निरूपणीयमिति।

**योगे स्थानं गतवति बलिनश्चन्द्रे स्वं वा तनुगृहमथवा।**
**पापैर्दृष्टे बलवति मरणं वर्षस्यान्तः किल मुनिगदितम्।। १३।।**

'योगे स्थानम्' इति। 'योगे स्थानं गतवति चन्द्रे' चन्द्रशब्देन शुभाशुभफलदो लग्नाधिपो वा तत्तद् भावाधिपो ग्रहो विवक्षितः। बलिनो ग्रहस्य राशिं वा स्वस्थितराशिं वा प्रविशति तदा शुभाशुभफलप्राप्तिः। पापैर्दृष्टे बलवति मरणं निधनमित्यर्थः। शुभैर्दृष्टे शुभम्। 'वर्षस्यान्तः'शब्देन ग्रहपरिवृत्तिर्वोच्यते। चन्द्रस्य नक्षत्रमासादर्वाक्, सूर्यस्य संवत्सरादन्तः भौमस्यापि स्वपरिवर्तनादन्तः इत्यादि। बृहस्पतेः द्वादशवत्सरादन्तः फलदग्रहस्य स्वराश्युच्चलग्नबलवद्गृहगतराशिप्राप्तिकाले फलसिद्धिः।

तथा चोक्तम् -

'कालेन यावता गच्छेच्छुभः पापोऽपि वा ग्रहः।

लग्नं स्वोच्चं स्वगेहं वा तस्मिन् काले फलं भवेत्।।

फलदग्रहवच्चिन्त्याश्चन्द्रसूर्योदयस्थितिः।

कालेन यावता प्राप्ताः शुभः पापोऽथवोदयम्।।

तत्काले पृच्छतां वाच्यमतीतं स्याच्छुभाशुभम्।

शुभः पापोऽपि वा लग्नं यस्मिन् काले प्रवेक्ष्यति।।
तत्काले प्रवदेद्भावि शुभाशुभफलं नृणाम्।
एवं रिःफार्थलग्नैश्च भूतभव्यभवत्फलम्'।।
'लग्नादापञ्चमगैरानवमस्थैश्च पञ्चमान्नवमात्।
आलग्नगैरपि भवद् भावि च भूतं शुभाशुभं वाच्यम्।।
लग्नवदुदितं कृत्वा द्वादशभावानतीतरविभागे।
यतिमे पापस्ततिमे वर्षे भावक्षयः शुभैस्सम्पत्'।।इति।।

अथवा प्रश्नादौ तत्काले मरणादिदुःखकरं यस्मिन् राशौ गुलिकादिषु कष्टतमः तस्मिन् राशौ। स राशिः 'योगे बलिनः स्थान'मित्युक्तम्। शुभशकुननिमित्तञ्च यस्मिन् राशौ शुभग्रहाः शुभफलदा ग्रहाश्च तस्मिन् राशौ। तत्र 'चन्द्र'शब्देन तत्र चन्द्रार्कमन्दजीवा गृह्यन्ते। तेषु तस्मिन् काले यः कष्टः स तस्मिन् राशौ तिष्ठति सति मरणादि चिन्त्यम्। 'वर्षस्यान्तः किल मुनिगदितम्' इति किलशब्दोऽत्र विकल्पार्थः। अरिष्टफलं सर्वदा भविष्यतीति सुपरीक्षितम्। तथापि मुनिगदितमेव कथनीयमिति।

इति गोविन्दसोमयाजिकृतौ बृहज्जातकव्याख्यायां दशाध्याय्याख्यायां षष्ठाध्यायः

# सप्तमाध्यायः
## आयुर्दायाध्यायः

मययवनमणित्थशक्तिपूर्वैर्दिवसकरादिषु वत्सराः प्रदिष्टाः।
नवतिथिविषयाश्विभूतरुद्रा दशसहिता दशभिस्स्वतुङ्गभेषु।। १।।

'मययवने'ति। अथ दशोच्यते। 'स्वतुङ्गभेषु' स्वोच्चस्थेषु ग्रहेषु जातस्य राजयोगसम्भवात् राज्ञामुच्चनीचदशा नेतव्याः। 'यशस्विनाञ्च जन्तूनामुच्चनीचक्रमो यतः' इत्युक्तत्वात् मययवनेत्यादिबह्वाचार्यकथनात् सर्वपुरुषाणाञ्चिन्तनीयमित्युक्तं भवति। कलियुगादावेते वत्सराः उपदिष्टाः पुनस्त्रैराशिकवशादायुः ह्रसति इति।

नीचेऽतोऽर्धं ह्रसति हि ततश्चान्तरस्थेऽनुपातो
होरा त्वंशप्रतिममपरे राशितुल्यं वदन्ति।
हित्वा वक्रं रिपुगृहगतैर्हीयते स्वत्रिभागः
सूर्योच्छिन्नद्युतिषु च दलं प्रोझ्य शुक्रार्कपुत्रौ।। २।।

'नीचेतोर्ध'मिति 'होरा त्वंशप्रतिम'मित्यत्र 'तु' शब्देनांशनाथस्य बलाधिक्ये अंशतुल्यं राशिनाथस्य बलाधिक्ये राशितुल्यमित्यत्र सूचितम्।
तथा चोक्तम् -

'अंशेशस्य बलाधिक्येंऽशतुल्यं राशिपस्य तु।
बलाधिक्ये राशितुल्यं साम्येऽपि स्याद् भतुल्यता' ।। इति।।

'हित्वा वक्रम्' इत्यत्र 'वक्र'शब्देन वक्रचारी ग्रहश्चोच्यते। तदंशकक्रमानयने

वक्रचारिणो ग्रहस्य शत्रुक्षेत्रहरणं न विधेयम्। शत्रुक्षेत्राणि तु मययवनादिषु केषाञ्चित् पक्षे 'जीवे जीवबुधौ' इति। अन्येषां 'सत्योक्ते सुहृद' इत्यादिना कल्पनीयानि फलसंवादादेव निर्णयः'। 'सूर्योच्छिन्नद्युतिषु' इत्यत्र 'तु'शब्देन एकराशिगतत्वेऽर्धं राश्यन्तरगतत्वे त्र्यंशं ह्रीयते। तथा चोक्तम् -

'हरत्यर्धं ग्रहो मूढस्त्र्यंशं राश्यन्तरस्थिति'रिति।

'तु' शब्देन अंशकक्रमे बुधस्यापि मौढ्यहरणं नास्तीत्यपि सूचितम्। 'शुक्रार्की हरतो नायुश्चन्द्रजश्चांशकक्रमे' इति वचनात्।

**सर्वार्धत्रिचरणपञ्चषष्ठभागाः क्षीयन्ते व्ययभवनादसत्सु वामम्।**
**सत्स्वर्धं ह्रसति,ततस्तथैकगानामेकोंशं हरति बली तथाह सत्यः।। ३।।**

'सर्वार्धे'ति एकगानां एकोंशं हरति बलीति।

तथा चोक्तम् -

'एकर्क्षगेषु बहुषु बलवानपहारकः'

सर्वेऽप्यपहरन्तीति केचिदाहुर्न साधु तत्' ।। इति।।

दृश्यार्धहरणादन्येप्येवमेव। दृश्यार्धहरणादन्यान्यपि हरणानि सम्भवन्ति चेत् दृश्यार्धहरणं कृत्वा अन्येषु महद्धरणं कार्यमिति 'कृते दृश्यार्धकेऽन्येषु महदेवैकमिष्यते' इत्युक्तत्वात्।

**साधोंदितोदितनवांशहतात्समस्ताद्**
**भागोष्टयुक्तशतसङ्ख्य उपैति नाशम्।**
**क्रूरे विलग्नसहिते विधिना त्वनेन**
**सौम्येक्षिते दलमतः प्रलयं प्रयाति।। ४।।**

'सार्धोदित' इति- 'विधिना त्वनेन' इत्यत्र 'तु' शब्देन ग्रहबलादन्यैः लक्षणैर्दीर्घायुषो सम्भवे लग्नायुष्येव क्रूरोदये ह्रीयमानमायुस्त्याज्यमिति सूचितम्। 'लग्नायुष्येव तच्छोध्य'मिति



वचनात् अल्पायुष्ये समस्तायुष्येवं शोध्यमिति। 'स्वात् स्वात् संशोध्यमायुषः' इति वचनात्।

**समाः षष्टिर्द्विघ्ना मनुजकिरणां पञ्च च निशा**
**हयानां द्वात्रिंशत् खरकरभयोः पञ्चककृतिः।**
**विरूपा सा त्वायुर्वृषमहिषयोर्द्वादश शुनां**
**स्मृतं छागादीनां दशकसहिताः षट् च परमम्।। ५।।**

'समाः षष्टिः' इति। द्विघ्नाः षष्टिर्विंशत्यधिकशतं संवत्सराश्च पञ्चदिवसाश्च मनुजानां करिणाञ्च परमायुः। हयानामश्वानां द्वात्रिंशत्संवत्सराः। खरकरभयोः पञ्चककृतिः पञ्चविंशतिवत्सराः। वृषमहिषयोः सा पञ्चककृतिर्विरूपा चतुर्विंशत्संवत्सराः इत्यर्थः। शुनो द्वादशसंवत्सराः परमायुः छागादीनां इत्यत्र आदिशब्देनाविमृगाणामपिग्रहणं दशकसहिता षट् षोडशसंवत्सराः परमायुः। किमर्थमत्र करिप्रभृतीनां परमायुरुक्तमिति चेदुच्यते। तेषां करिप्रभृतीनामायुर्निरूपणार्थमिदं परमायुरुक्तम्। उक्तेन परमायुषा सूर्यादीनां ग्रहाणां पृथक् पृथक् दशासंवत्सराः त्रैराशिकेनावगन्तव्याः। अस्मिन् त्रैराशिके तु 'नवतिथि-विषयाश्विभूतरुद्रा दशसहिता दशभि'रित्युक्तसंवत्सरा समुदायससप्तविंशत्यधिकशतं तत् 'प्रमाणराशिः'। नवतिथ्याद्युपदिष्टाः सूर्यादीनां पृथक् पृथक् संवत्सराः 'फलराशि' त्रैराशिकेनावगन्तव्याः। अस्मिन् त्रैराशिके तु हयानां द्वात्रिंशदित्याद्युक्तं परमायु'रिच्छाराशिः' पृथक् पृथक् फलराशीनां संगुण्य प्रमाणराशिना विभजेत्। लब्धं सूर्यादीनां पृथक् पृथक् दशासंवत्सराः भवन्ति। ततो हयादीनां जन्मकालीनैः ग्रहैरुक्तेन विधिनायुर्निरूपणीयमित्युक्तं भवति।

**अनिमिषपरमांशके विलग्ने शशितनये गवि पञ्चवर्गलिप्ते।**
**भवति हि परमायुषः प्रमाणं यदि सहितास्सकलास्स्वतुङ्गभेषु।।६।।**

'अनिमिषे'ति। अस्य श्लोकस्य इन्द्रदैवत्यच्छन्दः। तेनास्मिन् योगे जातश्चक्रवर्ती च भवतीति सूचितम्। अन्यच्च कैश्चित् गणिततन्त्रे बुधैः निरूपिते वृषे पञ्चककृतिलिप्तात्मको

बुधो रवौ मेषदशमांशके न सम्भवति। अत्र बुधः वृषभराशेः पञ्चविंशतितमलिप्तायां न पञ्चविंशतिभागे इति ज्ञानात् वादमेतन्न साधु। गणितासम्भवादिविषयाः आचार्येणापि तत्र तत्र सूचिताः 'चतुर्थभवने सूर्यात् ज्ञसितौ भवतः कथम्?' इत्यादिना। ईदृशः कुत्रचित् दृश्यते। तस्मात् कालान्तरे ग्रहगणितानामदृढत्वात् कदाचित् गणितेन बुधस्तादृशो भविष्यतीति विचिन्त्यम्। तदर्थं खलु पञ्चसिद्धान्तिकाः प्रादुर्भूताः। कदाचिदेकः सिद्धान्तः संवदति दृग्गणितेनानीतयोः ग्रहयोः कदाचिदन्यः पुनः कदाचिदपरः। तस्मात्तत्काले परीक्ष्य ग्रहाणां दृग्गणितसाम्यमानेतव्यम्।

**आयुर्दायं विष्णुगुप्तोऽपि चैवं देवस्वामी सिद्धसेनश्च चक्रे।**
**दोषश्चैषां जायतेऽष्टावरिष्टं हित्वा नायुर्विंशतेः स्यादधस्तात्।। ७।।**

'आयुर्दाय'मिति - बह्वाचार्याभिप्रेतो ह्ययमुच्चनीचदशामार्गः कदाचित् व्यभिचरति। तदर्थमिदमुक्तम्।

**यस्मिन् योगे पूर्णमायुः प्रदिष्टं तस्मिन् प्रोक्तं चक्रवर्तित्वमन्यत्।**
**प्रत्यक्षोऽयं तेषु दोषोऽपरोऽपि जीवत्यायुः पूर्णमर्थैर्विनापि।। ८।।**

'यस्मिन् योग' इति प्रत्यक्षो यथा तेषु दोषोऽपरोऽपीति। तत्तद्विषयविभागः प्रत्यक्षज्ञानादृत्यायं मार्गो नाङ्गीकर्तव्य इत्यभिप्रायः। तस्मात् जन्मकालं सम्यगवगम्य दशामार्गानानीय येन दशामार्गेणानुभूतफलसंवादो दृश्यते तया भविष्यत्फलं चिन्तयेदिति। तथा चोक्तम् -

'यस्मिन् क्रमे सङ्गृहीते पूर्वभुक्तदशाफलम्।
न विसंवादमभ्येति स क्रमो मम सम्मतः' ।। इति।। ✓

**स्वमतेन किलाह जीवशर्मा ग्रहदायं परमायुषस्स्वरांशम्।**
**ग्रहभुक्तनवांशराशितुल्यं बहुसाम्यं समुपैति सत्यवाक्यम्।। ९।।**



'स्वमतेने'ति। स्वमतेनेत्येको दोषः कदाचित् संवदतीति। ग्रहभुक्तनवांशराशि-तुल्यं बहुसाम्यमिति। सत्यवाक्यत्वात् सत्याचार्यस्य सत्यनाम्ना न केवलं रूढं गौणञ्च भवति। सत्यवचनस्य प्रामाण्यमस्तीत्यर्थः। 'नवांशराशितुल्य'मिति लग्नराशेश्च लग्नांशकप्राबल्यो अंशकक्रमदशा आनेतव्या इति।✓

**स्वतुङ्गवक्रोपगतैस्त्रिसङ्गुणं द्विरुत्तमस्स्वांशगृहत्रिभागगैः।**
**इयान् विशेषस्तु भदत्तभाषिते समानमन्यत् प्रथमेप्युदीरितम्।। १०।।**

'स्वतुङ्गवक्रोपगतैः' इति। भदत्तभाषिते सत्योक्ते पक्षे इयान् विशेषः, स्वतुङ्गवक्रोपगतैर्ग्रहैर्य आयुर्दाय आनीतः स त्रिसंगुणः कार्यः त्रिभिर्गुण्यः इत्यर्थः। वर्गोत्तमस्वनवांशकस्वगृहस्वद्रेक्काणगतैः ग्रहैः प्राप्त आयुर्दायो द्वाभ्यां गुण्यः इत्यर्थः। अत्र 'तु'शब्देन अयमर्थोऽवगम्यते। यदीदमायुः 'ग्रहभुक्तनवांशराशितुल्यं' इत्युक्तम्। तद्ग्रहबलात् दीर्घायुष्यसम्भवे पुरुषस्य ग्रहाणां भुक्तमेषाद्यंशतुल्यां दशामानीय हरणानि कृत्वा द्वित्रिगुणसम्भवे द्वित्रिगुणञ्च कृत्वा सम्पादिते ग्रहभुक्तमेषादिराशिसङ्ख्यातुल्यैः संवत्सरैः संयोज्य सम्पादनीयमिति 'ग्रहभुक्तनवांशराशितुल्य'मित्यनेनैव ज्ञातव्यं भवति। 'समानमन्यत् प्रथमेप्युदीरित'मिति प्रथमे उच्चनीचदशाविधाने यदुदितं तदत्रापि समानम्। दृश्यार्धहरणशत्रुक्षेत्रहरणमूढहरणानि पूर्ववत् कार्याणीत्यर्थः। अत्रापि कोऽपि विशेषोऽस्ति। अंशकक्रमविधाने उदासीनहरणं च क्रियते। शत्रुक्षेत्रगतस्य त्रिभागहरणविधानात् उदासीनक्षेत्रगतस्य षड्भागहरणञ्च विधेयं भवति। 'स्वतुङ्गवक्रोपगतैस्त्रिसंगुणम्' इत्यत्र तुङ्गवक्रोपगतयोः सहपाठात् गण्यसाम्याच्च स्वोच्चतुल्यं बलं वक्रगतौ च भवतीत्यपि सूचितं भवति। ✓

**किंत्वत्र भांशप्रतिमं ददाति वीर्यान्विता राशिसमञ्च होरा।**
**क्रूरोदये योपचयस्स नात्र कार्यञ्च नाब्दैः प्रथमोपदिष्टैः।। ११।।**

'किंत्वत्रे'ति। अत्र सत्योपदेशे किञ्चित् विशेषोऽस्ति। लग्नराश्यंशकस्य लग्नराशितो बलाधिक्ये होराराश्यंशप्रतिममायुर्ददाति। अंशकतो होरा वीर्यान्विता चेत् राशिसममायुर्ददाति।

पुनश्च क्रूरोदये य उपचयउच्चनीचमार्गे विहितः सोऽत्र न कर्तव्यः। प्रथमोपदिष्टैः 'नवतिथी'त्याद्यब्दैश्च न कार्यमिति।

सत्योपदेशः प्रवरोऽत्र किन्तु कुर्वन्त्ययोग्यं बहुवर्गणाभिः।
आचार्यकं त्वत्र बहुघ्नतायामेकन्तु यद्भूरि तदेव कार्यम्।। १२।।

'सत्योपदेश' इति। अत्र कलियुगे अंशकक्रमदशा संवादभूयिष्ठा इति।

गुरुशशिसहिते कुलीरलग्ने भृगुतनये शशिजे च केन्द्रयाते
भवरिपुसहजोपगैश्च शेषैरमितमिहायुरनुक्रमाद्विना स्यात्।। १४।।

'गुरुशशिसहित' इति अमितायुर्योगमुक्तं बह्वत्र निरूपणीयम्। तत्र सर्वे ग्रहाः उक्तस्थानगताश्चेत्तस्यायुरमितम्। चन्द्रलग्नौ पृथक्स्थौ चेत् ताभ्यां पृथक् निरूपणीयं 'चन्द्राद्वा' इति वक्ष्यति च। केन्द्रस्थानां शुभानां आयुष्करत्वं त्रिषडेकादशगतानां पापानामप्यायुष्करमस्ति। तद् सर्वत्र चिन्तनीयम्। चन्द्रलग्नयोर्बलाधिक्यञ्चायुष्करत्वं, बलिष्ठस्य जीवस्य लग्नगतत्वञ्च, 'बलिष्ठो लग्नगः सूरिः सर्वारिष्टविनाशकृदिति वचनात्।

इति गोविन्दसोमयाजिकृतौ बृहज्जातकव्याख्यायां दशाध्याय्याख्यायां सप्तमाध्यायः

# अष्टमोऽध्यायः

## दशान्तर्दशाध्यायः

उदयरविशशाङ्कप्राणिकेन्द्रादिसंस्थाः
प्रथमवयसि मध्येऽन्त्ये च दद्युः फलानि।
नहि न फलविपाकः केन्द्रसंस्थाद्यभावे
भवति हि फलपक्तिः पूर्वमापोक्लिमेऽपि।। १।।

'उदयरविशशाङ्के'ति। उदयरविशशाङ्कप्राणिकेन्द्रादिसंस्थाः प्रथमवयसि मध्येऽन्त्ये च फलानि दद्युः। विंशत्यधिकशतसंवत्सराः परमायुः। तत् त्रिभागं कृत्वा प्रथमभागे वयसि उदयप्राधान्येन फलनिर्देशः। मध्यभागे वयसि चन्द्रप्राधान्येनान्त्यभागे वयसि रविप्राधान्येन फलनिर्देशः कार्य इति। अस्मिन्नर्थे उदयरवीति क्रमो न विवक्षितः। अथ दशापरिग्रहविधौ उदयरविशशाङ्केषु बलवतो दशा प्रथमा। पुनस्तत् केन्द्रेषु गतस्य। पुनः पणपरगतस्य। पुनरापोक्लिमगतस्य। तदुक्तं 'नहि न फलविपाक' इत्यादिना। बहुषु ग्रहेषु केन्द्रगतेषु प्रथमं लग्नगतस्य पुनश्चतुर्थगतस्य पुनस्सप्तमगतस्य अन्त्ये दशमगतस्य; पुनः पणपरगतस्य। पणपरे प्रथमं द्वितीयगतस्य पुनः पञ्चमगतस्येत्यादि पूर्ववत्, आपोक्लिमेऽपि तद्वत्। उच्चनीचमार्गेषु 'दिवसकरादिष्वि'ति दिवाकरस्य प्रथमोक्त्या तदादिदशापरिग्रहः। 'ग्रहभुक्तनवांशराशितुल्यं' राशिकथनादंशकक्रमे लग्नादि दशापरिग्रहः। 'चन्द्रारेन्दुजे'ति चन्द्रस्य प्रथमोक्त्या निसर्गादियो चन्द्रादिदशापरिग्रहः इति प्रायशः उपदिष्टं भवति। बाल्ये यौवने वार्धके केन्द्रादिस्थाः।

तथा च सारावल्याम् -

'केन्द्रात् परं पणपरमापोक्लिमसंज्ञितं ततः परतः।
बालयुवस्थविरत्वे क्रमेण फलदा ग्रहास्तेषु' ।। इति।।

अयमध्यायः प्रश्नादावुपयुज्यते। 'उदयरविशशाङ्कप्राणिनः' यस्मिन् काले प्रष्टा स्वाभिमतं पृच्छति तदा उदयराशिमवगम्य छायाजलयन्त्रादिभिः गतनाडिकां विज्ञाय ताभिरुदयलग्नमानीय तेन शुभाशुभञ्चिन्त्यम्। तदानीमेव रविमानीय तेनापि शुभाशुभस्य पाककालश्च निरूपणीयः। चन्द्रमपि तदानीमानीय तेन लग्नवत्फलं निरूपणीयम्। 'प्राणी'ति। पृच्छकस्य भावादिना तेनारूढेन भूचक्रराशिना च उदयारूढरविवशादुपगतेन छत्रराशिना च केन्द्रादिसंस्थैः ग्रहैश्च फलञ्चिन्त्यते। केन्द्रस्थैः शुभाशुभैः प्रथमे वयसि सदसद्फलपरिपाकः। पणपरस्थैः मध्ये वयसि। आपोक्लिमस्थैरन्त्ये वयसि। 'केन्द्रसंस्थाद्यभावे' सर्वदा सदसद्फलविपाको भवत्येव। केन्द्रसंस्थ आद्यो भावः 'केन्द्रसंस्थाद्यभावः' लग्नमित्यर्थः। तेन त्रिषु वयस्सु च फलनिरूपणं कर्तव्यमित्यर्थः। किमापोक्लिमस्थाः अन्त्ये वयस्येव फलं दद्युरित्यत आह। 'पूर्वमापोक्लिमेपी'ति आपोक्लिमे स्थिताः पूर्वमपि फलं दद्युरिति। किं पुनः पणपरस्थाः। तृतीयभावेन सहजगुणाः प्रथमे वयसि न चिन्त्याः। नवमेन गुरुगुणदोषाः, षष्ठेन शत्रवः, पञ्चमे पुत्राः, द्वितीयेन धनम्, एकादशेन धनलाभमित्यादि। सर्वभावफलमपि सर्वदा चिन्त्यमित्यर्थः 'केन्द्रादिसंस्थाः' इत्युक्तविधिना 'पूर्वमापोक्लिमेपी'ति पक्षान्तरं वा। आपोक्लिमे गतफलमिति, केन्द्रे वर्तमानफलं, पणपरे भविष्यदिति।

**आयुः कृतं येन हि यत्तदेव कल्प्या दशा सा प्रबलस्य पूर्वा।**
**साम्ये बहनां बहुवर्षदस्य तेषां च साम्ये प्रथमोदितस्य।। २।।**

'आयुः कृत'मिति। उदयारूढच्छत्रचन्द्राद्यैः सर्वप्रश्नेऽपि प्रथममायुश्चिन्त्यम्। अरिष्टयोगाः राजयोगादयश्च सर्वे चिन्त्याः। तथा दशाः चानेतव्याः।

तथा चोक्तम् -

'जन्मलग्नतया प्रश्नलग्नं सङ्कल्प्य पण्डितः।
जातके यद्यदुद्दिष्टं तत्तत् प्रश्नेऽपि चिन्तयेत्'।। इति।।

तत्र विशेषः आरूढच्छत्रलग्नाधिपतीनां यो बलवान् तस्य दशा अवस्था पूर्वा भवति। ग्रहाणां सप्तावस्था निरूपणीयाः।



तथा चोक्तम् -

'अतिबालः समर्क्षस्थो बालो बन्धुगृहे स्थितः।
कुमारस्स्वगृहस्थः स्यात् स्वत्रिकोणे युवा भवेत्।।
उच्चस्थानगतो राजा वृद्धश्शत्रुगृहे स्थितः।
मृतनामातिनीचस्थो दशैवं स्थानतो भवेत्'।।
'सूर्यादुदितमात्रोऽसावतिबालः प्रकीर्तितः।
बालः सप्तांशकादूर्ध्वं कुमारस्तु ततः परम्।।
वक्रारम्भे युवा प्रोक्तो वक्रकाले नराधिपः।
आसन्नास्तमयो वृद्धो मृतोस्तङ्गत ईरितः।।
अतिबालदशाकाले जडो रोदनतत्परः।
बालस्य तु दशाकाले क्रीडासक्तः प्रहर्षितः।।
कुमारस्य दशाकाले विद्यासक्तश्चरेन्नरः।
यौवनस्थदशाकाले कामी भोगपरायणः।।
वृद्धसंज्ञदशाकाले बलहीनो जडात्मकः।
मृतग्रहदशाकाले मरणं याति निश्चयात्'।। इति।।

एवं आरूढाधिपतिर्वा उदयाधिपतिर्वा लग्नांशपतिर्वा यो बलवान् तस्य या अवस्था सात्र पूर्वा भवतीति। तेषां बलसाम्ये बहुवर्षदस्य बहुकालफलदस्य निगदिता इति निरूप्य बहुकालं यस्य फलस्य संवादः तेन ग्रहेण फलञ्चिन्त्यम्। तेषाञ्च साम्ये प्रथमोदितस्य बहुफले संवादिनां साम्ये यो ग्रहः प्रथमोदितः तेषु राशिष्वेकत्र राशौ स्थितेन वदेदित्यर्थः।

**एकर्क्षगोऽर्धमपहृत्य ददाति तु स्वं**
**त्र्यंश्यं त्रिकोणगृहगः स्मरगः स्वरांशम्।**
**पादं फलस्य चतुरश्रगतः सहोरा-**
**स्त्वेवं परस्परगताः परिपाचयन्ति।। ३।।**

'एकर्क्षगोर्धमपहृत्य ददाती'ति। एकराशिगतौ द्वौ ग्रहौ चेत्तयोरेकः अन्यस्य

फलं स्वं ददाति स्वीकृत्य ददातीत्यर्थः। अन्यस्य फलं शुभं स्वयं शुभश्चेत् तत् पुष्टं करोति। अशुभश्चेत् स्वयमशुभोऽत्यन्तमशुभम्। एतैर्ग्रहैः स्वकैर्भावैर्गुणदोषाः भवन्ति। पञ्चमस्थशुभाशुभदैः पुत्रवशात्, नवमस्थशुभाशुभदैः पितृवशात्, सप्तमस्थशुभाशुभदैः कलत्रवशात्, चतुर्थगतैर्मातृवशात्, अष्टमस्थैरायुःक्लेशादिभिः। यथा पञ्चमस्थः शुभः पुत्रगुणात् आत्मगुणं त्र्यंशाधिकं करोति, नवमस्थः शुभः पितृगुणादात्मगुणं त्र्यंशाधिकं करोति, सप्तमस्थश्शुभः कलत्रगुणादात्मगुणं सप्तांशाधिकं करोति। एवं दोषञ्च। एवं परस्परगताः परिपाचयन्ति इति।

**स्थानान्यथैतानि सवर्णयित्वा सर्वाण्यधश्छेदविवर्जितानि।**
**दशाब्दपिण्डे गुणना यथांशं छेदस्तदैक्येन दशाप्रभेदः।। ४।।**

'स्थानानी'ति। एतानि स्थानानि पञ्चमनवमसप्तमचतुर्थाष्टमस्थानानि अन्यानि च सवर्णयित्वा लग्नवदुदितं कृत्वा पूर्वोक्तत्रिकोणादिस्थानानि 'छेदविवर्जितानि' पापसम्बन्धाभावात् शुभयोगाच्च छेदो नाशः। तेन हीनानि यदि चिन्तितानि तदानीं दशाब्दपिण्डे 'गुणना'द्दशाब्दपतिः शुभ एव। तस्य भावस्य यथां'शच्छेदः' लग्नं द्वादशधा विभज्य उद्यदंशकेन वर्तमानाब्दे गुणदोषौ चिन्त्यौ। अतीतैः द्वादशांशकैरधः अतीतसंवत्सरेषु गुणदोषौ चिन्त्यौ, एष्यांशैः भविष्यत्संवत्सरेषु। तदुक्तम् - यथा 'छेदः' यथा अंशस्य छेदो भवति पापयोगात् अधिपतिबलहान्याद् तदैक्येन तत्संयोगात् 'दशाप्रभेदः' अवस्थाप्रभेदः अवस्था दुःखमित्यर्थः। तस्मिन् संवत्सरे तस्य भावस्य दुःखमित्यर्थः।

तथा चोक्तम् -

'लग्नवदुदितं कृत्वा द्वादशभागानतीतरविभागे।
यतिमे पापस्ततिमे वर्षे भावक्षयः शुभैः सम्पत्।
एष्यद्द्वादशभागैः सदसद्युक्तैस्तथैष्यवर्षेषु'।। इति।।

**सम्यग्बलिनस्स्वतुङ्गभागे सम्पूर्णा बलवर्जितस्य रिक्ता।**
**नीचांशगतस्य शत्रुभागे ज्ञेयानिष्टफला दशा प्रसूतौ।। ५।।**



जातकेषु सर्वबलसम्पूर्णस्य दशा शुभा। सर्वबलहीनस्य दशा अशुभा। इतरा मध्यमा।

तथा च सारावल्याम् -

'स्वोच्चस्वराशिनिजभागसुहृद्गृहस्थाः
सम्पूर्णवीर्यरुचिरा बलिनस्स्वकाले।
मित्रोच्चभागसहिताः शुभदृष्टियुक्ताः
श्रेष्ठां दशां विदधति स्ववयस्सु खेटाः।।
नीचशत्रुगृहं प्राप्ताः शत्रुनीचांशसूर्यगाः।
विवर्णाः पापसम्बन्धा दशां कुर्युरशोभनाम्' ।। इति।।

प्रश्नादौ तु उदयाधिपरविशशाङ्कारूढपतयश्च तैर्युक्तराश्यधिपाश्च सम्यग् बलिनश्चेत् स्वोच्चभागसंस्थाः सम्पूर्णफलदाः। तेषु बलहीनेषु 'रिक्ता' पुरुषस्यावस्था नीचांशगताः शत्रुभागगताश्चेत् 'अनिष्टफला दशावस्था'। 'प्रसूतौ' इत्युक्तत्वात् जन्मसमये प्रश्नसमये च ग्रहाः बलसहिताश्चेत् शुभफलं सामग्र्यम्। यथा गुरोः 'हेमाश्वात्मज-कुञ्जराम्बरचय' इति दशाफलमुक्तमेतन्नियतं दृश्यते। लोके जनानां गुरुदशाकालस्सम्भाव्यः न तेषां उक्त फलप्राप्तिरित्यनुपपत्तिनिराकरणाय 'प्रसूता'वित्युक्तम्। प्रसूतौ सम्पूर्णबले ग्रहेऽनुभवत्त्वं नृपत्वं भवतीत्युक्तम्। 'जनयति नृपमेकोऽप्युच्चगो मित्रदृष्टः' इत्यादिना ततः कुञ्जराश्वादि प्राप्तिश्चोपपद्यत इति। 'अनिष्टफले'त्यत्र 'फल' शब्देन पूर्वत्र सम्पूर्णेष्टफला इत्येतदुक्तं भवति। जन्मकाले ग्रहे बलवति दशायां तस्य उक्तानि शुभफलान्येव। शुभग्रहस्स्वोच्चगतो लग्नगश्चेत्तत् सर्वार्थसिद्धिर्भवति।

तथा च विद्वज्जनवल्लभाख्ये -

'पश्यत्येकश्चेच्छुभेषु स्वमुच्चं लग्नं प्राप्तः खेचरः प्रश्नकाले।
स्थानैश्वर्यार्थोच्छ्रयो मानवृद्धिर्वाच्या निस्सन्देहमेवात्र तज्ज्ञैः' ।। इति।।

ननु तस्मिन् 'सम्यग्बलिन' इत्यादिश्लोके दशादातुः ग्रहस्य शुभग्रहदृष्टिरस्ति चेद्दशा शुभेति नोक्तम्। सारावल्यां तु 'शुभदृष्टियुक्ताः श्रेष्ठान्दशां विदधती'त्युक्तम्। कथमेतत् घटते ? नैष दोषः। 'अशुभगदिता योगा याप्या भवन्ति शुभेक्षिताः', 'दृष्टस्तु

शुभैर्न यदा मृत्युस्तु भवेदचिरात्, यदि न च शुभैर्वीक्षितश्शक्तिमद्भिः, 'शुभैरयुतेक्षिते', 'भृगुसुतशशिपुत्रदेवपूज्यैर्यदि बलिभिर्न युतोऽवलोकितो वा' इत्यादि वचनैश्शुभदृष्टे रशुभनाशकत्वं केन वा नोह्यते? 'क्षीणेन्द्वर्कमहीसुतार्कतनयाः पापार्बुधस्तैर्युतः' इत्युक्तस्य ग्रहाणां शुभाशुभफलदाने ज्ञापनं विना किं प्रयोजनमवगम्यते। तस्मात् शुभग्रहदृष्टिश्शुभा इति किं वक्तव्यम्? पुनरुच्चगतं लग्नस्थं ग्रहं उच्चगो ग्रहः पश्यति चेत् राज्ञो राज्यसिद्धिरपि वक्तव्यम्। लग्नशब्देनारूढो विवक्षितः।

तथा च विद्वज्जनवल्लभाख्ये -

'यदि विलग्नसमुच्चगं ग्रहं समवलोकयति ग्रह उच्चगः।
भवति तत्समये समुपेयुषस्स यदि राज्यमिति प्रवदेद् बुधः'।। इति।

'जनयति नृपमेकोऽप्युच्चगो मित्रदृष्टः प्रचुरधनसमेतं मित्रयोगाच्च सिद्धं' इति वक्ष्यति च। उच्चस्य ग्रहस्य वक्रगतेश्च बलं नान्यैः हरिष्यते।

तथा च सारावल्याम् -

'उच्चराशौ विलोमे च बलं नान्यैर्हरिष्यते।
कालस्यातिबलत्वं स्यात्तस्मात् स्वोच्चेऽतिवक्रिते' ।। इति।। ✓

**भ्रष्टस्य तुङ्गादवरोहिसंज्ञा मध्या भवेत् सा सुहृदुच्चभांशे**
**आरोहिणी निम्नपरिच्युतस्य नीचारिभांशेष्वधमा भवेत् सा।। ६।।**

भ्रष्टस्य तुङ्गादिति। अतितुङ्गात् भ्रष्टस्यातिनीचभावावधिदेशस्थाने 'अवरोहि' संज्ञा दशा। अतिनीचात् परिच्युतस्य अत्युच्चभागान्तरस्थितौ आरोहिणी दशा। एतदुक्तं भवति। परमोच्चे यत् फलमुक्तं तस्मादारभ्य क्रमेण ह्रसति परमनीचे शून्या भवति। तत्रापि सुहृदुच्चभांशादि स्थितिवशात् तत्फलस्योत्कर्षापकर्षौ ज्ञेयौ। पुनरयमुपदेश उच्यते। जन्मलग्नेशयोर्यो बलवान् जन्मकाले तस्यावरोहित्वे पूर्वस्मात् तस्य ग्रहस्योपघातो भवति। आरोहित्वे वृद्धिर्भवति। एवमुच्चनीचवशादपि फलञ्चिन्त्यमित्युक्तं भवति। उच्चनीचवशात् मूलत्रिकोणगृहमित्रोदासीनशत्रुक्षेत्रवशाच्च फलविशेषश्चिन्त्यते इत्युक्तम्।



**नीचारिभागे समवस्थितस्य शस्ते गृहे मिश्रफला प्रदिष्टा।**
**संज्ञानुरूपाणि फलानि चैषां दशासु वक्ष्यामि यथोपयागम्।। ७।।**

नीचारिभाग इति। अत्र नीचारिभागे शस्तगृहस्थस्य दशा मिश्रफला। अत्र ग्रहसंस्थितराशिमात्रावगमेन न केवलं वक्तव्यम्। अंशकपरिज्ञानञ्चावश्यकमित्यवगन्तव्यम्। 'नीचारिभागे' सर्वेषु राशिषु नीचारिभागेषु नीचनवांशके शत्रुनवांशे इति। नीचारिगृहे शस्ते नवांशे च स्थितस्य दशा मिश्रफला इत्येतदप्यनेनेवोक्तं भवति। 'शस्तानि गृहाणि उच्चत्रिकोणक्षेत्रबन्धुराशयः। तेषु राशिष्वपि किञ्चित् फलं भिद्यते।

तथा च सारावल्याम् -

'अत्युग्रमतिद्रव्यं महान्तमपि भास्करः स्वतुङ्गस्थः।
मृष्टाशनांबराढ्यं सुभूषणं शीतगुः कुरुते।।
तेजस्विनं कुतनयो दुःखसहं गर्हितं प्रवासरतम्।
मेधाविनं कुलाढ्यं सुनिपुणवाक्यं बुधः स्वोच्चे।।
विख्यातं गुरुराढ्यं विद्वांसं भूतसत्कृतं कुशलम्।
स्वोच्चे भृगोश्च तनयो विलासहास्यप्रगीतनृत्तरसम्।।
स्वोच्चस्थो रवितनयो नृपलब्धनियोगमभिजनयेत्।
ग्रामपुराधिपतित्वमरण्यकधान्यं कुनारिलाभञ्च।।
भानुस्त्रिकोणसंस्थो धनवन्तं मुख्यशीलमतिनिपुणम्।
भोक्तारं धनवन्तं शशी प्रसूतौ त्रिकोणगः पुरुषम्।।
वक्रोऽपि तस्करपतिं शूरं खलु निर्भयञ्चापि।
सौम्यो विनोदशीलं जयिनं त्रिकोणे नरं कुरुते।।
जीवः पुरोहितवरं मन्त्नरं नयविदं सुखोपेतम्।
दानवगुरुरपि जनयेत् ग्रामपुराणां वरिष्ठमाढ्यमतिसुभगम्।।
आत्मत्रिकोण आर्किर्धनदृप्तं कुलपतिञ्च शूरम्।
तीक्ष्णमयूखः कुरुते महोग्रमत्युच्चकर्माणम्।।
धर्मरतं हिमरश्मिर्मनस्विनं रूपवन्तमात्मर्क्षे।

आढ्यं प्रचण्डचपलं भौमः कुरुते स्वराशिगः पुरुषम्।।
शशितनयोऽपि विधत्ते वल्गुकथं पण्डितञ्चापि।
काव्यश्रुतज्ञमाढ्यं गुरुचेष्टं वाक्पतिः स्वराशिस्थः।।
दानवपूज्यः कुरुते कृषीवलं स्फीतवित्तञ्च।
कुरुते शनैश्चरोऽपि मान्यमदुःखं स्वराशिगः पुरुषम्।।
मित्रगृहेऽर्कः ख्यातं स्थिरसौहृदमर्थदातारम्।
मित्रर्क्षगः शशाङ्को यतस्ततो लब्धसौख्यधनमानम्।।
अङ्गारकोऽपि कुरुते सुहृद्धनरक्षणासक्तम्।
शशिजस्सुहृद्गृहगतः कुरुते चातुर्यहास्यधनवन्तम्।।
वचसामधिपः पूज्यं सतां च सुविशिष्टकर्माणम्।
मित्रगृहे भृगुतनयः सुहृत्प्रियं दयितचित्तमतिशूरम्।।
भास्करसूनुः कुरुते परान्नभोजनमधर्मकर्मरतम्।
नीचे सविता कुरुते प्रेष्यं बान्धवजनावधूतञ्च।।
हिमरश्मिरल्पपुण्यं रोगिणमतिदुर्भगं लोके।
नीचस्थः क्षितितनयोऽनर्थव्यसनोपतप्तमतिनीचम्।।
नीचे हिमकरपुत्रः क्षुद्रं स्वजनबन्धुवैरं च।
नीचे गुरुः प्रकुरुते मलिनं प्राप्तावमानमतिनीचम्।।
असुरदयितोऽस्वतन्त्रं प्रणष्टदारं विषमशीलं च।
कोणो विपन्नशीलं विगर्हिताचारमध्वनिरतञ्च।।
कुरुते शत्रुगृहेऽर्को निस्वं विषयप्रपीडितञ्चापि।
तुहिनमयूखः कुरुते हृद्रोगिणमरिगृहे नरं सततम्।।
बन्धामयमरिभाजं विकलं रुधिरोतिदुर्भगं लोके।
विज्ञानमतिविहीनं बुधोऽरिभे नैकदुःखमतिदीनम्।।
अरिभे गुरुर्विधत्ते नयहीनं क्लीबमधनञ्चासद्वृत्तम्।
शुक्रोऽरिगृहे भृतकं कुतन्त्रमतिदुःखिनं जनयेत्।।
भास्करपुत्रः कुरुते मलिनं व्याध्यध्वशोकसन्तप्तम्'। इति।



एतत् सर्वं राशिफलाध्यायेन 'कुलसमकुलमुख्य' इत्यादिना च सिद्ध्यतीति। इत्यादिराश्याश्रयवशादुक्तानां अंशकाश्रयवशादन्यथा निरूपणीयमिति 'नीचारिभागे समवस्थितस्य शस्ते गृहे मिश्रफला प्रदिष्टा' इत्युक्तम्। एवं इष्टानिष्टमिश्रफलविशेषं निरूपणीयम्। एतदिष्टानिष्टफलानयनं 'सम्यग्बलिन' इत्यादिश्लोकद्वयेन 'उच्चत्रिकोणस्वसुहृद्' इत्यादिनोपरिष्टाद्भावाध्याये वक्ष्यमाणे श्लोकेनाचार्येण सूत्रितम्। अत्रान्यशास्त्रेऽपि स्पष्टमुक्तमत्र मयोच्यते। अर्कादिग्रहात् परमनीचभागान् विशोध्य शिष्टान् राशीन् दशभिः भागान् विंशत्या च गुणयेत्। पुनश्चेष्टाकेन्द्रं पूर्ववदानयेत्। सायनांशोऽर्कस्त्रिराशिसहितोऽर्कस्य चेष्टाकेन्द्रम्। भानुस्फुटरहितश्चन्द्रश्चन्द्रस्य चेष्टाकेन्द्रम्। कुजादीनान्तु मध्यमस्फुटान्तरार्धं मध्यमे स्फुटाधिके शीघ्रोच्चे योजयेत्। मध्यमे स्फुटादूने शीघ्रोच्चाद्विशोधयेत्। तस्मात् शीघ्रोच्चात् स्फुटं त्यजेत्। एवञ्चेष्टाकेन्द्रमानीय राशिं दशभिर्भागान् विंशत्या च गुणयेत्। चेष्टाबलं भवति। तयोरुच्चचेष्टाबलयोर्योग-दलमिष्टफलम्। एतत् षष्टिभ्योऽपनीय शिष्टमनिष्टफलं भवति।

तथा च हरिदत्तः

'नीचोने तु ग्रहे चेष्टाकेन्द्रे षडधिके सति।
चक्राद्विशोध्य शिष्टात्तु राशयो दशताडिताः।।
भागान् नखघ्नान् चारोप्य चोच्चचेष्टाफले उभे।
तयोर्योगदलं चेष्टमनिष्टं षष्टिवर्जितम्'।। इति।।

अथोच्चादिस्थितिभेदेन फलविशेषमानयेत्। मूलत्रिकोणस्वक्षेत्रातिमित्र-मित्रसमशत्र्वतिशत्रुस्थानेषु पञ्चचत्वारिंशत् त्रिंशत् द्वाविंशत् पञ्चदशाष्टौ चत्वारो द्वौ च षष्ट्यंशा इष्टफले योज्याः। अनिष्टफले तु पञ्चदश त्रिंशत् अष्टत्रिंशत् पञ्चचत्वारिंशत् द्विपञ्चाशत् अष्टपञ्चाशत् षष्ट्यंशाः योज्याः। उच्चनीचराश्योरनुपातेन पूर्वमानीतमेव। शत्रुमित्रादयोऽप्युच्चनीचराश्योर्नास्ति। उच्चमूलत्रिकोणभागनियमः पूर्वोक्त एव। अर्धं होरादिषु विभागेषु सवर्गे उक्तसङ्ख्यार्धं तत्र तत्र योजयेत्। अर्धं होराद्यंशेषूच्चमूलत्रिकोण-स्वर्क्षातिमित्रमित्रराशिषु त्रिंशत्, द्वाविंशत्, पञ्चदश, द्वादशाष्टौ क्रमेण इष्टफले योज्याः शत्र्वतिशत्रुनीचस्थानेषु स्ववर्गाश्चेदष्टाविंशतिरेकोनत्रिंशत्, त्रिंशत्, अनिष्टफले योजयेत्।

अन्यवर्गे पादं योजयेत्। तद्यथा उच्चे पञ्चदश, मूलत्रिकोणे एकादश, स्वर्क्षे सप्त, अतिसुहृदि षट्, सुहृदि चत्वारि एवमिष्टफले योजयेत्। शत्रौ सप्त, अतिशत्रौ नीचे चाष्टौ अनिष्टफले।

तथा च बादरायणः -

'उच्चनीचे फलं ग्राह्यं न च मित्रादिजं फलम्' इति ✓

षड्वर्गफलमाह पराशरमुनिः -

'तदर्धन्तु फलं ग्राह्यमन्यवर्गे शुभाशुभम्'। इति।

अत्र वर्गफलानयने नियमश्च पराशरहोरायामुक्तः

'पञ्चस्विष्टफलञ्चादौ षष्ठं सममुदाहृतम्।

अशुभास्तु त्रयः प्रोक्ता इति शास्त्रेषु निश्चितः।।इति।।

उच्चमूलत्रिकोणस्वर्क्षातिमित्रमित्रवर्गेषु एतदुक्तम् - 'फलसङ्ख्यामिष्टफले योजयेत्; उदासीनराशिवर्गे तु उभयं कर्तव्यं, शत्र्वतिशत्रुनीचराशिषूक्ताशुभसङ्ख्यामशुभफले योजयेत्' इति। एवमानीतेऽनिष्टफले तस्य ग्रहस्योच्चादिनिसर्गान्तं षट्प्रकारमानीतेन बलसमूहेन गुणयेत्। तद्ग्रहदशायामन्तर्दशायामायव्ययसङ्ख्यासाधने स्याताम्। आभ्यां सर्वग्रहैरानीतां दृष्टिं पृथग्गुणयेत्। एते अपि दृष्टिफलप्रदानकाले आयव्ययसाधने स्याताम्। अथ बलकालायव्ययसाधने उच्येते। उच्चरश्मिबलमेवोच्चबलम्। चेष्टारश्मिबलमेव चेष्टाबलम्। तयोर्योगदलमिष्टफलम्। षष्टितश्शोधितमनिष्टफलं इति विभागः। उच्चादिस्थानेनार्धहोरादिवर्गैश्च युक्तमिष्टफलमनिष्टफलञ्च स्थानबलेन हत्वा गुरुज्ञार्काणां शरषट्कचन्द्रैः सितचन्द्रयोस्त्रिपावकेन्दुभिः भौममन्दयोः षण्णवत्या विभजेत्। स्थानबलकालेषु आयव्ययसाधने भवतः। युक्तेष्टानिष्टफले दिग्बलेन हत्वा त्रिंशता विभजेत्। कालबलेनोक्तवत् सुयुक्तेष्टानिष्टफले इतरफलसंयोगं विधाय कालबलेन गुणयेत्। अर्कज्ञार्याणां अर्कचन्द्रैः विभजेत्। सितेन्द्वोश्शतेन भौममन्दयोः सप्तषष्ट्या विभजेत्। कालबलफलकाले आयव्ययसाधने भवतः। एवमयनबलयुक्तेष्टानिष्टफलेऽयनबलेन हत्वा सर्वेषामेव त्रिंशता विभजेत्। एवं चेष्टाबलेन युक्तचेष्टाबलेन हत्वा सर्वेषामेव त्रिंशता विभजेत्। तत्तत्काले तथा साधने भवतः।



तथा च गर्गः-

'चेष्टोच्चरश्मिसंयोगदलमेव फलं विदुः।

षष्टितश्शोधितं चान्यत् स्थानवर्गोक्तसंयुतम्।।

स्थानदिक्कालवीर्यघ्नं चेष्टायनबलाहतम्।

तदुक्तसङ्ख्यया भाज्यं तत्तत्कालाय साधनम्'।। इति।।

पुनरपि

रविज्ञगुरवः पञ्चषष्ट्चन्द्रैः सितशीतगू।

त्रित्रिचन्द्रैः शनिर्भौमः षण्णवत्या बली मतः।।

दिक्चेष्टायनवीर्ये तु दलमेव प्रकीर्तितम्।

द्वैकैकेन शतेनैव सप्ताङ्गैः कालजे बले।। इति।।

अथ भावानां इष्टानिष्टफले उच्येते। भावानां ग्रहवियुक्तानां अधिपतिफलमेव फलम्। ग्रहयुक्तानान्तु तस्य ग्रहस्य। पापशत्रुनीचराशिश्चेदिष्टफलं भावसाधनेन हत्वा षष्ट्या विभजेत्। लब्धमिष्टफलमेव प्राक्स्थितेऽनिष्टफले योजयेत्। स्थितस्य पापग्रहस्य स भावः उच्चादिपञ्चस्थानञ्चेत् विरोधपरित्यागन्यायेन प्राक्स्थिते एव फले भवतः। शुभग्रहश्चेदुच्चादिपञ्चस्थानं चेदिष्टफलं भावसाधनेन हत्वा षष्ट्यारोपितमिष्टे। एवमिष्टबलमनिष्टबलञ्च सम्पद्येते। एवमेकः सम्प्रदायः। एवमिष्टबलाधिकः शुभः अन्यथा अशुभो ग्रहः। एवमिष्टकष्टबलानयनप्रकारः।

तथा च पराशरमुनिः-

'स्वोच्चे मूलत्रिकोणे च स्वर्क्षेऽतिसुहृदि क्रमात्।

मित्रर्क्षे समर्क्षे च शत्रुभे चातिशत्रुभे।।

नीचे च षष्टिरिष्वब्धिखाग्निवेदकरास्तिथिः।

नागा वेदाः करौ शून्यं शुभमेतत् फलं विदुः।।

षष्टिभ्यो वर्जिताश्चैते शिष्टं स्यादशुभं फलम्' । इति।

एते षष्ट्यंशा उक्ताः।

उच्चनीचराश्योः न च मित्रादिजफलं ग्राह्यं योजयेत्। एकग्रहस्य सर्ववर्गेषु सर्वस्थानानि कतिपयानि वा चेत् सम्भूतानां सर्वेषां उक्तवत् सर्वाः सङ्ख्याः योज्याः।

एकस्योच्चादिपञ्चसु नीचादि त्रिषु कतिपयानि वा चेत् सर्वेषामिष्टेऽप्यनिष्टेऽपि योजयेत् दिग्बलमिष्टे योजयेत् षष्टितश्शोधयित्वा शिष्टमनिष्टे योजयेत्। दिवा जन्म चेत् दिवाबलमिष्टे रात्रिबलमनिष्टे योजयेत्। रात्रौ जन्म चेत् रात्रिबलमिष्टे दिवाबलमनिष्टे योजयेत्। शुक्लपक्षे जन्म चेत् शुक्लपक्षबलमिष्टे योजयेत्। कृष्णपक्षबलमनिष्टे योजयेत्। कृष्णपक्षे जन्म चेत् कृष्णपक्षबलमिष्टे शुक्लपक्षबलमनिष्टे योजयेत्। मेषादिराशिषट्कस्थे रवौ जन्म चेत् उत्तरायनबलमिष्टे योजयेत् अनिष्टेऽपनयेत्। दक्षिणायनबलमनिष्टे तुलादिराशिषट्कस्थे विपरीतं कुर्यात्। फले भवतः शत्रुराशिश्चेदुभयन्न कर्तव्यमिति सन्प्रदायः।

एवमाह यवनेश्वरः -

'भावानां स्वपतेः फले तु विहिते तत्र ग्रहश्चेत्तदा
हत्वा भावफलेन खाङ्गभजिते लब्धं शुभे योजयेत्।
सौम्यश्चेदितरत्र चेतरदथो पापास्तथैवान्यथा
दृग्वीर्योत्थफले तथैव च भवेदुच्चादिषूक्तक्रमात्'।। इति।।

एतदुत्तरत्राचार्येण भावाध्याये -

'फलमधिकमिदं यदत्र भावाद् भवनभनाथगुणैर्विचिन्तनीयम्'।

इति वक्ष्यमाणेन ग्रन्थसन्दर्भेण सिद्ध्यति। इतीष्टानिष्टफलानयने कोऽपि सम्प्रदायः प्रदर्शितः। प्रकृतमनुसरामः। 'संज्ञानुरूपाणि फलानि चैषां' इत्यस्यायमर्थः 'राजानौ रविशीतगू' इत्यादिना च ग्रहयोनिभेदाध्याये शिष्टेन च ग्रन्थेन ग्रहमयं समस्तमित्युक्तम्। यथा 'स्नाय्वस्थ्यसृक्त्वगथ शुक्लवसे च मज्जा मन्दार्कचन्द्रबुधशुक्रसूरेड्यभौमाः' इत्युक्तेन ग्रहाणां धातूनाञ्च सप्तानामभेद उपदिष्टः। तथा सति मन्दस्य च स्नायुधातोश्चाभेदे मन्दस्य 'स्नायु'रिति संज्ञा वक्तव्या। एवं संज्ञाध्यायोक्तं सर्वमुक्तसंज्ञानुरूपाणि। तथा चोक्तम् - तत्र यत् ग्रहरूपं तदुक्तं तस्य ग्रहस्य फलदातृत्वे तत् फलपरिपाकः यथा रवे'रात्मप्रभावा'दि चन्द्रस्य 'मनो'गुणादि कुजस्य 'सत्वं' बुधस्य 'वचन'मित्यादि। 'राजानौ रविशीतगू' इति रविचन्द्रयोः राजकुलवासादि, कुजस्य दण्डनायकत्वयुद्धादि, बुधस्य यौव्वराज्यसेवादि। गुरुशुक्रयोरमात्यवृत्तिसेवादि। 'प्रागाद्याः' इत्यत्र दिक्परिज्ञाने फलं; 'बुधसूर्यसुतौ' इत्यत्र पुंस्त्रीनपुंसकस्व भावादि, 'विप्रादित' इति जातिभेदपरिज्ञाने, 'चन्द्रार्कजीव' इत्यादि गुणस्वभावपरिज्ञाने, 'मधुपिङ्गलदृक्' इत्यादि रूपपरिज्ञाने, 'स्नाय्वस्थी'त्यादि धातुपरिज्ञाने चोपयुज्यते। तदुक्तम् - 'संज्ञानुरूपाणि फलानि चैषां' इति।



**उभयेऽधममध्यपूजिता द्रेक्काणैश्चरभेषु चोत्क्रमात्।**
**अशुभेष्टसमा स्थिरे क्रमाद्धोरायाः परिकल्पिता दशा।। ८।।**

'उभय' इति। अनेन सूत्रत्रयमपि सूच्यते। उभये चरं च अधमं, उभये उभयं च मध्यमं, उभये स्थिरं पूजितम्। चरभे पूजितमध्माधमाः, चरे चरं पूजितं, चरे स्थिरं मध्यमं, चरे उभयमधमम्। 'अशुभेषु समा स्थिरे क्रमात्' स्थिरे उभयं इष्टं, स्थिरे चरं मध्यमं, स्थिरे स्थिरं अशुभमिति।

**एकं द्वे नव विंशतिर्धृतिकृती पञ्चाशदेषां क्रमा-**
**च्चन्द्रारेन्दुजशुक्रजीवदिनकृद्दैवाकरीणां समाः।**
**स्वे स्वे पुष्टफला निसर्गसमये पक्तिर्दशायाः क्रमा-**
**दन्त्ये लग्नदशा शुभेति यवना नेच्छन्ति केचित्तथा।। ९।।**

'एकन्द्व' इति। नैसर्गिकस्वभावश्शरीरिणामेष उक्तः। प्रथमवर्ष चन्द्रोऽधिपतिः। तस्य जलात्मकत्वात् निश्चेष्टता। द्वितीयतृतीययोः भौमः तस्य बालत्वात् हि रसादिरतिर्भवति। चतुर्थवर्षादारभ्य द्वादशवर्षान्तं बुधोऽधिपतिः। तस्य विद्याकारकत्वात् विद्याभ्यासकालः। त्रयोदशवर्षादारभ्य द्वात्रिंशद्वर्षान्तं शुक्रोऽधिपतिः तस्य मदनकारकत्वात् विषयसंगतिः। पुनः पञ्चाशद्वर्षान्तं गुरुरधिपः तस्य ज्ञानसुखस्वरूपत्वात् ज्ञानसुखाद्यनुभूतिः। पुनस्सप्तत्यन्तं रविरधिपः तस्य वृद्धत्वात् आत्मज्ञानसेवाकालः। पुनर्विंशत्युत्तरशतवर्षान्तं शनिरधिपः। तस्य मरणरूपत्वात् मृतप्रायो भवति। 'स्वे स्वे पुष्टफला निसर्गसमये' इत्यनेन बाल्याद्यवस्थानुरूपं दशाफलप्राचुर्यं वक्तव्यं भवति। 'स्वे स्वे पुष्टफला निसर्गसमये' गणितानीता निसर्गदशा पुष्टफला शुभफला पापफला वा पुष्टा भवति। फलप्राचुर्यमस्तीत्यर्थः।

तथा च सारावल्याम् -

'स्वोच्चस्वकालबलिनः सम्पूर्णबलस्य या निसर्गभवा।

उत्तममशुभफलदा सा ग्रहस्य नित्यं दशा भवति'।। इति।।

एष चन्द्रादीनां क्रमेणातिबालबालकुमारयौवनस्थविरपरिणतवृद्धमृतात्मकमप्यनेनोक्तेन दर्शितं भवति।

**पाकस्वामिनि लग्नगे सुहृदि वा वर्गेऽस्य सौम्येऽपि वा**
**प्रारब्धा शुभदा दशा त्रिदशषड्लाभेषु वा पाकपे।**
**मित्रोच्चोपचयत्रिकोणमदगः पाकेश्वरस्य स्थित-**
**श्चन्द्रस्सत्फलबोधनानि कुरुते पापानि चातोऽन्यथा।। १०।।**

'पाकस्वामिनी'ति। दशारिष्टभङ्गोऽनेन उच्यते। न केवलं जन्मकालादृश निरूपणीया दशाप्रारम्भकालादपि। तत्रापि दशापतेर्गुणदोषवशाच्चिन्त्यते। 'पाकस्वामिनि दशानाथे दशाप्रारम्भे लग्नगते सुहृदृक्षेत्रगते वा दशानाथस्य वर्गेऽपि वा शुभर्क्षे वा सौम्ये वा शुभराशिगते वा या दशा प्रारभ्यते सा शुभा भवति।

तथा च सारावल्याम् -

'प्रवेशे बलवान् खेटः शुभैर्वा सन्निरीक्षितः।

सौम्यातिमित्रवर्गस्थो मृत्यवे न भवेत्तदा'।। इत्यादि।।

'त्रिदशषड्लाभेषु वा पाकपे' उपचयस्थे दशापतौ प्रारब्धा च शुभदा इति। तथार्थान्तरं उच्यते। लग्नादिद्वादशराशिभिर्ये भावाः निरूप्यन्ते तेषामधिपाः पाकस्वामिनः। अर्कादयो ये ग्रहाः पित्रादिकारकाः ते च तद्वत् तत्पित्रादिपदार्थपाकस्वामिनः। एवं यस्य पदार्थस्य यः पाकस्वामी दशाप्रारम्भे तस्मिन् लग्नगते सुहृदृक्षेत्रगे तस्य वर्गे लग्नगतस्य दशायां तस्य पदार्थस्य शुभं भवति। मुहूर्तादावप्येवम्।

तथा चोक्तम् -

'पुत्रादिभावसिद्ध्यर्थाः क्रियाः पुंसवनादयः।

सिद्ध्यन्ति भावनाथस्य वारक्षेत्रोदये कृताः' ।। इति।।



पुन'स्सौर्या'मित्यादिना यानि शुभफलान्युक्तानि तेषां वृद्धिर्भवति।

प्रश्नादावप्येवमूह्यम्। कारको यस्य फलस्य तस्मिन् लग्नगे बन्धुगते वा तस्य वर्गे लग्नगे तस्मिन् स्ववर्गगे सौम्यक्षेत्रगते वा उपचयगते वा तस्य फलस्याचिरात् सिद्धिर्वक्तव्या इति। 'मित्रोच्चोपचये'त्यादि। 'चन्द्रस्सत्फलबोधनानि कुरुते' इत्यत्राभिप्रायान्तरमस्ति। चन्द्रस्य हि फलानां बोधयितृत्वं रवेर्दशाफलानां पाचकत्वम्। 'राजानौ रविशीतगू' इत्युक्तत्वात् चन्द्रार्काधीनत्वं कुजादीनामुक्तं पूर्वमेव व्याख्यातम्।

शास्त्रान्तरे -

'सविता दशाफलानां पाचयिता चन्द्रमा प्रबोधयिता।

आदित्यचन्द्रवशगाः सर्वे ताराग्रहा ज्ञेयाः'।। इति।।

तस्मादेकस्यान्दशायामुक्तानि शुभफलानि मित्रोच्चोपचयादिस्थानगते चन्द्रे अनुभूयन्ते। मित्रोच्चोपचयादन्यराशिगे चन्द्रे अशुभफलान्यपि भवेयुरिति द्रष्टव्यम्। चन्द्रस्य मित्रोच्चोपचयादिस्थितत्वं दशाप्रारम्भे निरूपणीयमिति केचित्।

**प्रारब्धा हिमगौ दशा स्वगृहगे सौख्यार्थमानावहा**
**कौजे दूषयति स्त्रियं बुधगृहे विद्यासुहृद्वित्तदा।**
**दुर्गारण्यपथालया कृषिकरी सिंहे सितर्क्षेऽन्नदा**
**कुस्त्रीदा मृगकुम्भयोर्गुरुगृहे मानार्थसौख्यावहा।। ११।।**

'प्रारब्धा हिमगा'विति। सर्वत्र चन्द्रस्य स्थितिवशादन्यग्रहाणां फलविभागभेदोस्तीति सूच्यते। अंशकाश्रयेप्येतदेव फलं वक्तव्यम्। चन्द्रस्य शुभत्वे सत्यन्यग्रहाणां शुभत्वम्। विपरीते विपरीतत्वम्। चन्द्रबलवशादेवान्येषां स्वफलदानशक्तिरित्युक्तम्।

तथा च श्रीपतिः

'अमृतकिरणवीर्याद् वीर्यमाश्रित्य सर्वे विदधति फलमेते खेचराः साध्वसाधु।

निजनिजविषयेषु व्याप्रियन्ते यथामून्यलमिह मनसेवाधिष्ठितानीन्द्रियाणि'।।

इति।

**सौर्यं स्वं नखदन्तचर्मकनकक्रौर्याध्वभूपाहवै-**
**स्तैक्ष्ण्यं धैर्यमजस्रमुद्यमरतिः ख्यातिः प्रतापोन्नतिः।**
**भार्यापुत्रधनारिशस्त्रहुतभुग्भूपोद्भवा व्यापद-**
**स्त्यागः पापरतिः स्वभृत्यकलहो हृद्क्रोडपीडामयाः।। १२।।**

'सौर्या'मित्यादि श्लोकपूर्वार्धेन शुभफलानि अपरार्धेनाशुभफलानि गदितानि। 'भूपाहवै'र्धनमिति पूर्वार्धेनोक्तम्। 'शस्त्रहुतभुग्भूपोद्भवा व्यापद' इत्यपरार्धेनोक्तम्। भूपात् धनसिद्धिरपि भूपादापच्च। कथं एतत् घटते? उभयं भवति वा? उच्यते सूर्यस्य बलपुष्टौ पूर्वार्धेनोक्तं शुभफलं बलहानावपरार्धेनोक्तमशुभफलम्।

तथा च सारावल्याम् -

'भानुदशायां लभते नखरदचर्मौषधाध्वविषकलहः।
अर्था नु गैरिकवह्निक्रौर्यनरेन्द्राहवाद्यैश्च।।
नृपतेरर्थावाप्तिं धैर्यं भूयस्तथोद्यमं तैक्ष्ण्यम्।
ख्यातिप्रतापविद्याश्रेष्ठत्वं भूपतित्वञ्च।।
भृत्यार्थचोरचक्षुश्शस्त्राग्न्युदरक्षितीश्वराद् बाधाः।
सुतपत्नीबन्धुजनैस्सम्पीडा स्याच्च पापरतिः।।
क्षुत्तृष्णार्तिश्शोको हृत्पीडा पैत्तिकास्तथा रोगाः।
गात्रच्छेदो भवति हि सूर्यदशायामनिष्टायाम्'।। इति।।

एवं सर्वग्रहदशायां यस्य ग्रहस्य शुभफलमुक्तं तस्मिन् बलवति तद्भवति। बलहीनेऽशुभं भवति। मध्यबले मिश्रम्। एत'द्दशासु शस्तास्वित्या'दि ग्रन्थेनाचार्येणैवोक्तं भवति। ननु आचार्योक्तेभ्यो दशाफलेभ्योऽतिरिक्तानि सारावल्युक्तानि उच्यते। निरूपणे तु सारावल्यां उक्तान्याचार्येणाप्युक्तानि भवन्ति। अत्रौषधविषाभ्यामर्थसिद्धिराचार्येणाप्युक्तानि भवन्ति। 'अर्कांशे तृणकनकोर्णभेषजाद्यैः' इत्यत्र भेषजेनार्थसिद्धिरुक्ता। 'भार्यापुत्रधनारिशस्त्र' इत्यत्रा'रि'शब्देन विषचोरादयोऽपि गृह्यन्ते। 'शस्त्र'शब्देन 'गात्रच्छेद'श्च सूचितः इत्यादि निरूप्यताम्।



प्रश्नादावपि दुस्थे रवौ अशुभान्युक्तानि दशाफलानि वक्तव्यानि। सुस्थे तु शुभानि दशाफलानि वक्तव्यानि। 'कालात्मा दिनकृत्' इत्यात्मप्रभावश्चिन्त्यः। 'राजानौ रविशीतगू' इति राजविषये उपयुज्यते। 'रक्तश्श्याम' इति वर्णविषयः। 'वह्न्यम्बु' इत्यादि देवताविषयः। 'विप्रादितः' इति वंशविषयः 'चन्द्रार्कजीवा' इत्यादि सत्त्वादिगुणविषयः 'मधुपिङ्गलदृक्' इति आकृतिविषयः। 'स्नाय्वस्थि' इत्यादि धातुविषयः। 'देवाम्बु' इत्यादि स्थानविषयः। 'वस्त्रं स्थूलं' इत्यादि वस्त्रनिर्देशविषयः। 'दिवाकरेन्द्वोः' इत्यादि पितृमातृनीरूपणविषयः। 'व्ययगृहगतश्चन्द्रो वामं हिनस्ति' इत्यादिना नयनरोगादिविषयः। 'सूर्ये काष्ठचतुष्पदेन' इत्यादिना देहपीडादि। 'पित्तप्रकृति' इत्यादिना धातुकोपः। अग्न्यधिपत्वात् ज्वरादिभयम्। अग्निभयञ्च दाहादि। अस्थ्यधिपत्वात् अस्थिस्रावहृत्क्रोडपीडामयाः। शिवदैवतत्वात् शिवकोपः। सिंहराशीश्वरत्वादपस्मारः इत्यादि सर्वं प्रश्ने विचिन्तनीयम्।

**इन्दोः प्राप्य दशां फलानि लभते मन्त्रद्विजात्युद्भवा-**
**निक्षुक्षीरविकारवस्त्रकुसुमक्रीडातिलान्नश्रमैः।**
**निद्रालस्यमृदुद्विजामररतिः स्त्रीजन्म मेधाविता**
**कीर्त्यर्थोपचयक्षयौ च बलिभिर्वैरं स्वपक्षेण च।। १३।।**

'इन्दोः प्राप्य दशा'मिति। 'क्षीर'शब्देन जलञ्चोच्यते। 'कीर्त्यर्थोपचयक्षयौ' च। पक्षवशात् अन्यत् सूर्यदशावत्।

**भौमस्यारिविमर्दभूपसहजक्षित्याविकाजैर्धनं**
**प्रद्वेषस्सुतमित्रदारसहजैर्विद्वद्गुरुद्वेषिता।**
**तृष्णासृग्ज्वरभंगपित्तजनिता रोगाः परस्त्रीष्टता**
**प्रीतिः पापरतैरधर्मनिरतिः पारुष्यतैक्ष्ण्यादि च।। १४।।**

'भौमस्ये'ति। भौमस्य अरिविमर्दभूपसहजक्षित्याविकादीनां कारकत्वञ्चोक्तम्।

मेषाधिपत्यात् शिरोरोगः। अग्निमयत्वान्नयनरोगः अग्निशस्त्रविषभयम्। 'पित्त'शब्देनापस्मार-भ्रान्त्यादि सूचितम्। 'भंग'शब्देन पिटकाद्यपि सूचितम्। 'अरि' शब्देन चोरोऽपि सूचितः। एतासु दशासु, बलवत्सु ग्रहेषु यैः हेतुभिः धनसिद्धिरुक्ता प्रतिकूलस्थानगतेष्वबलेषु च तेषु तैर्धनहानिरपि तर्कणीया।

बौध्यां दौत्यसुहृद्गुरुद्विजधनं विद्वत्प्रशंसा यशो
युक्तिद्रव्यसुवर्णवेसरमहीसौभाग्यसौख्याप्तयः।
हास्योपासनकौशलं मतिचयो धर्मक्रियासिद्धयः
पारुष्यश्रमबन्धमानसरुजा पीडा च धातुत्रयात्।। १५।।

'बौध्या'मित्यादि। यथा सवितृदशानिरूपणप्रकार उक्तः। तद्वत् सर्वेषामपि निरूपणीयम्। 'दौत्यसुहृदि'त्यादि फलम्।

जैव्यां मानगुणोदयो मतिचयः कान्तिः प्रतापोन्नति-
र्माहात्म्योद्यममन्त्रनीतिनृपतिस्वाध्याययज्ञैर्धनम्।
हेमाश्वात्मजकुञ्जराम्बरचयः प्रीतिश्च सद्भूमिपैः
सूक्ष्मोहागमनैपुणं श्रवणरुग्वैरं विधर्माश्रितैः।। १६।।

'जैव्या'मिति। हेमाश्वात्मजादीनां मतिचयस्यापि गुरोः कारकत्वमवगन्तव्यम्।

शौक्र्यां गीतरतिप्रमोदसुरभिद्रव्यान्नपानाम्बर-
स्त्रीरत्नद्युतिमन्मथोपकरणज्ञानेष्टमित्रागमाः।
कौशल्यं क्रयविक्रये कृषिनिधिप्राप्तिर्धनस्यागमो
वन्यव्याधनिषादधर्मरहितैर्वैरं शुचः स्नेहतः।। १७।।



'शौक्र्यां' इति गीतादीनां शुक्रस्य कारकत्वमवगन्तव्यम्। विवाहादि मन्मथोपकरणशब्देनोक्तम्।

सौरीं प्राप्य खरोष्ट्रपक्षिमहिषीवृद्धाङ्गनावाप्तयः
श्रेणीग्रामपुराधिकारजनिता पूजा कुधान्यागमः।
श्लेष्मेर्ष्यानिलकोपमोहमलिनव्यापत्तितन्द्रीश्रमा
भृत्यापत्यकलत्रभर्त्सनमपि प्राप्नोति च व्यङ्गताम्।। १८।।

'सौरी'मित्यादि पूर्ववत् सुगमः। 'सौर्यां स्व'मित्यादि सप्तश्लोकोक्तं प्रश्नादावप्युपयुज्यते।

दशासु शस्तासु शुभानि कुर्वन्त्यनिष्टसंज्ञास्वशुभानि चैवम्।
मिश्रासु मिश्राणि दशाफलानि होराफलं लग्नपतेस्समानम्।। १९।।

'दशासु शस्तासु' इति। बलवशात् हि दशानां शस्तत्वं उक्तम्। 'सम्यग्बलिनस्स्व-तुङ्गभागे सम्पूर्णा' इत्यादिनोक्तास्संज्ञाः। स्वतुङ्गभागे स्थितस्य सम्यग्बलिनः इत्युक्तत्वात् स्थानबलेन तुङ्गाश्रयेणान्यैः दिक्कालचेष्टादिभिर्बलैरन्वितस्येत्युक्तं भवति। तस्मात् बलवशात् दशायाः कष्टत्वमिष्टत्वञ्चोच्यते।

तथा चोक्तम् -

'सम्पूर्णवीर्यस्सविता करोति राज्यादिसिद्धिञ्जनरञ्जनादीन्।
पादोनवीर्येण युतोऽस्य पुष्टिं गृह्यादिवस्तुस्वजनाभिवृद्धिम्।।
वीर्यार्धयुक्तो विपदाभिभूतिं पश्चात् सुखाप्तिं सुतदारसौख्यम्।
पादेनवीर्येण युतोऽपि दुःखं व्याध्यादिकोपं शमनञ्च पश्चात्।।
षड्भागवीर्यः स्वसुतामयार्तिमूर्ध्वाङ्गरोगं पिटकञ्च पश्चात्।
इष्टासु हानिन्त्वथ षोडशांशवीर्योतिदुःखं मरणं बलोनः।।
चान्द्री दशा पुष्टफला ददाति स्त्रीराज्यशस्त्रान्नसुगन्धबन्धून्।

पादोनजा स्त्रीग्रहणं जलात्तु धनं कफार्तिं निजमातृसौख्यम्।।
अर्धांशजा स्त्रीकलहं सुगन्धद्रव्यान्नपानं स्वजनैर्विरोधम्।
स्त्रीभ्यो धनं पित्तमरुत्प्रकोपं या षोडशांशा जलतोऽर्थहानिः।।
वृद्धांगनासक्तिवधूविनाशौ वीर्यैर्वियुक्तो विषबन्धघातम्।
स्त्रीभीतिपाथोभयपाण्डुरोगान् निरन्नतामात्मजनैर्वियुक्तिम्।।
देहक्षयञ्च प्रददाद्यरिष्टं सम्पूर्णवीर्यस्य कुजस्य दाये।
भूपुत्रसेनाधिपतित्वलाभान् पूजा गुरुणां गुणवान् धनाढ्यः।।
शूली भवेत् पित्तमरुत्प्रकोपात् पादोनवीर्यः प्रददाति राज्यम्।
सर्वैर्विरोधं कलहं वधूभिर्वीर्यार्धयुक्तो धनयुक्तदारः।।
विपक्षवीर्यञ्च रुजां करोति चार्थव्ययाङ्गव्रणपित्तकोपान्।
द्विजातिरोषान् पदवीर्ययुक्तः षड्भागवीर्यो वसनार्थहानिः।।
स्त्रीपुत्रदारस्य गदप्रदाता कुष्ठाक्षिकर्णोद्भवरोगपीडाम्।
शस्त्रक्षतिं स्वल्पबलः करोति विहीनवीर्यो मरणं प्रदद्यात्।।

इत्यादि बलवशात् 'सौर्या स्व' मित्यादिनोक्तानि फलानि विभज्य जातिकुल-देशावस्थानुरूपं वदेत्। ननु बलवशादेव केवलं सर्वेषां ग्रहाणां शुभाशुभत्वमिति चेत् शुभानां शुभकृत्त्वमशुभानामशुभकृत्त्वञ्च कथं सम्पद्यते? उच्यते, 'सौर्या स्व'मित्यादिना श्लोकस्य पूर्वार्धेन शुभफलान्युक्तानि अपरार्धेनाशुभान्युक्तानि। भौमस्य दशाफलेषु पूर्व श्लोकस्य पूर्वपादेन शुभफलमुक्तं त्रिभिः पादैरशुभफलमुक्तम्। मन्दस्य तु श्लोक पूर्वार्धेन साधारणशुभफलमुक्तम्। अपरार्धेनात्यन्तमशुभफलञ्च प्रोक्तम्। तस्मादेषां त्रयाणां दशासु शस्तासु' शुभस्याल्पत्वमशुभफलावाप्तिरपि निरूपणीया। 'अनिष्टासु दशासु' शुभमल्पमपि न भवति। अशुभमत्यन्तं भवति। बुधस्य दशाफलोक्तिस्त्रिभिः पादैश्शुभफलत्वमुक्त्वा अन्त्यपादेनाशुभफलमुक्तम्। गुरुदशायां प्रायशश्शुभफलान्येवोक्तानि। अन्त्ये तु किञ्चिदशुभफलमुक्तम्। शुक्रस्यापि तद्वत्। तस्मादेषां त्रयाणां 'शस्तासु दशासु' शुभफलानि वस्तूनि प्रायशो भवन्ति। 'अनिष्टसंज्ञासु' शुभफलमल्पमशुभं न भवति। चन्द्रास्याप्येवं चिन्त्यम्। इयानत्र विशेषोऽभिप्रेतः। पुनरष्टमाधिपत्यादिदोषकृत्त्वं सर्वग्रहाणां साधारणमेव।



तत्रापि बलञ्चिन्त्यम्। अथ प्रश्नादौ 'दशासु शस्तासु शुभानि कुर्वन्ति' अवस्थासु मङ्गलासु पृच्छकस्य शुभानि भवन्ति। 'अनिष्टसंज्ञास्व'वस्थासु अशुभानि भवन्तीति। 'होराफलं लग्नपतेः समानं' होराफलं जातकफलं समस्तं लग्नेशसमानम्। लग्नेशस्य प्रश्नादावारूढेशस्य बलं विशेषाच्चिन्त्यमित्यर्थः।

**संज्ञाध्याये यस्य यद्द्रव्यमुक्तं कर्माजीवे यस्य यच्चोपदिष्टम्।**
**भावस्थानालोकयोगोद्भवञ्च तत्तत् सर्वं तस्य योज्यं दशायाम्।।२०।।**

'संज्ञाध्याय' इत्यत्र दशाफलनीरूपणे। न केवलं 'सौर्या'मित्याद्युक्तफलान्येव वाच्यानि। किन्तु बहुधा हि ग्रहस्य फलपरिपाकाः दशावशादन्तर्दशावशाद्विदशा-वशाद्राशिवशात् योगवशादष्टवर्गवशात् होराद्रेक्काणादिवर्गाश्रयवशात् च यद्यद् फलं तत्सर्वं दशासु योज्यम्। 'संज्ञाध्याये यस्य यद्द्रव्यमुक्त' मित्यत्र संज्ञाध्याये 'कालात्मा दिनकृत्' इत्यादि ग्रन्थेन यः पदार्थः उक्तः सर्वो योज्यः। 'संज्ञाध्याये यस्य यद्द्रव्यमुक्त'मित्यत्र आदित्यादीनां आत्मत्वादि राजत्वादि च रक्तश्यामत्वादि च, ताम्रादिवर्णपदार्थाश्च ताम्रादिद्रव्याणि च, सत्त्वादि गुणाश्च, विप्रादि जातयश्च अन्यान्यपि यानि ग्रहस्वरूपाण्युक्तानि तानि सर्वाणि दशासु योजनीयानि। एतदुक्तं भवति। आदित्ये बलवति जातस्यादित्यदशायां आत्मप्रभावः राजप्रसादः ताम्रवर्णवस्त्रसिद्धिः ताम्रद्रव्यलाभः क्षत्रियकुलवासः सत्त्वगुणस्वभावः मधुपिङ्गलदृगित्याकृतिः अस्थिधातुपुष्टिः इत्यादि। आदित्ये बलहीने सति एषां हानिरपि चिन्तनीया। एवं चन्द्रादीनामपि स्वस्वानुरूपमूह्यम्। 'योज्य'मित्यत्र जातिदशावस्थानुरूपं योजनीयमित्यर्थः। अथवा शास्त्रान्तरेषु ग्रहाणां द्रव्याण्युक्तानि तानि। 'अर्के तनुस्थे' इति लग्नेऽर्कस्य फलमुक्तम्। तत्र 'शूर'शब्देन क्रियालस्यं क्रोधित्वं प्रचण्डत्वं मानित्वम् अक्षमताप्युक्तम्। 'स्तब्ध' शब्देनोन्नत्वं प्रभुत्वं चोक्तम्। इत्यादि बहवोऽर्थास्सूच्यन्ते ते सारावल्यादिषु द्रष्टव्याः। अर्कस्य अग्निरूपत्वात् कर्शनत्वं पित्तप्रकृतित्वात् पैत्तिकत्वमल्पकफं च निरूपणीयम्। न केवलं एतावता 'समपुचयविपत्ती सौम्यपापेषु सत्यः कथयति विपरीतं रिःफषष्ठाष्टमेषु'। मूर्त्यादिभावेषु यत्र सौम्यः तस्य भावस्योपचयं; यत्र पापाः तस्य भावस्य विपत्तिः। विपरीतं रिःफषष्ठाष्टमेषु। शुभोऽपि नाशं करोति। रिःफे शुभो व्ययनाशं

करोति। अष्टमे शुभो मरणनाशं करोति। षष्ठे शुभो रिपुनाशं करोति। पापो विपरीतमिति सत्यः कथयति। आचार्यस्य मतं तु अष्टमव्यययोः सर्वे नेष्टाः षष्ठे शुभाः शत्रुनाशकाः इति। कथमेतदवगतमिति चेत् अष्टमे गुरौ 'नीच' इति फलमुक्तम्। द्वादशे गुरौ 'खल' इति। षष्ठे बुधगुर्वो'रशत्रु' इति। शुक्रस्य गुरुवदित्युक्तम्। अष्टमे रवौ 'स्वल्पात्मजो निधनगे विकलेक्षणश्च' इत्युक्तम्। व्यये 'पतितस्तु रिःफे' इति कुजशन्योरादित्यवदित्युक्तम्। तस्मादष्टमद्वादशयोः सर्वे ग्रहाः नेष्टाः इति सिद्धं भवति। 'सधनोऽन्त्ये' इत्युक्तत्वात् शुक्रं विना सर्वे ग्रहाः मृत्युव्यययोः नेष्टाः इत्यवगन्तव्यम्।

तथा च स्वल्पजातके -

'पुष्णन्ति शुभा भावान् मूर्त्यादीन् घ्नन्ति संस्थिताः पापाः।
सौम्याः षष्ठेऽरिघ्नाः सर्वे नेष्टा व्ययाष्टमगाः'।।

एतानि दशायां योजनीयानि। तानि शास्त्रान्तरादानीय लिख्यन्ते।

तथा च सारावल्याम् -

'व्यालाग्निशैलकर्णिकसुवर्णविषशस्त्रभेषजनृपाश्च।
म्लेच्छास्थितारकान्तारकाष्ठादेः प्रभुः सूर्यः।।
कुसुमभोज्यमणिरजतेक्ष्वादिशङ्खलवणोदकेष्टवस्त्राणाम्।
भूषणनारीघृततैलादिप्रभुश्चन्द्रः।।
रक्तोत्पलताम्रमनःशिलास्वर्णरुधिरपात्राणाम्।
क्षितिनृपतिमूर्छाभिघातचौरपैत्तिकसहजानां प्रभुर्भौमः।।
श्रुतिलिपिशिल्पकलादौ सुनिपुणता मन्त्रिदूतप्रभूतहास्यानाम्।
खगयुग्मख्यातिविविधौषधिमणिप्रभुः सौम्यः।।
माङ्गल्यधर्मपौष्टिकमहत्त्वशिक्षादियागपुरराष्ट्राणाम्।
यानासनसुवर्णधान्यादेः सुवेशपुत्रप्रभुर्जीवः।।
वस्त्रमणिरत्नभूषणविवाहरम्येष्टगन्धमाल्यानाम्।
सुयुवतिनिधुवनविद्यासखित्वरजतप्रभुः शुक्रः।।
त्रपुशीसकाललोहकुधान्यमृतिदैन्यबन्धादेः।
नीचस्त्रीपण्यकदासवृद्धदीक्षाप्रभुः सौरिः।।



एवं ग्रहाणां द्रव्यमुक्तम्।

कर्माजीवफलं भावफलं 'शूरस्तब्धो' इत्यादि 'वृत्ताताम्रदृक्' इत्यादि स्थानफलं 'चन्द्रे भूपबुधौ' इत्यादि दृष्टिफलं राजयोगचन्द्रयोगद्विग्रहयोगप्रव्रज्यायोगारिष्टयोगनिर्याणयोगाश्रययोगोद्भवफलं सर्वं दशासु योज्यम्। तत्र भावफलाध्याये स्वल्पं फलमुक्तम्। तथा हि 'शूरस्तब्धो विकलनयनो निर्घृणोऽर्के तनुस्थे' किं सर्वदा सर्वाणि वाच्यानि? तत्र विभागोऽस्ति। तदुच्यते 'सुहृदरिपरकीयस्वर्क्षतुङ्गस्थितानां फलमनुपरिचिन्त्यं लग्नदेहादिभावैः' 'अनुपरिचिन्त्यं' फलदग्रहबलपुष्टिः।

किञ्च -

'फलमधिकमिदं यदत्र भावाद्भवनभनाथगुणैर्विचिन्तनीयम्'।

भावराशेः भावाधिपस्य च भावस्थग्रहस्य च बलाधिक्यात् भावफलमधिकं भवति।

'सुहृदरिपरकीयस्वर्क्षतुङ्गस्थितानां फलं' कथं अनुपरिचिन्त्यमिति चेत् तदर्थमुक्तम् - 'उच्चत्रिकोणस्वसुहृच्छत्रुनीचग्रहार्कगैः। शुभं सम्पूर्णपादोनदलपादाल्पनिष्फलमिति।

तथा चोक्तमन्यत्र माधवीये -

'स्वोच्चे प्रदीप्तः सुखितस्त्रिकोणे स्वस्थः स्वगेहे मुदितः सुहृद्भे।
शान्तस्तु सौम्यग्रहवर्गसंस्थः शक्तो मतोऽसौ स्फुटरश्मिजालः'।।
'ग्रहाभिभूतः स निपीडितः स्यात् खलस्तु पापग्रहवर्गसंस्थः।
सुदुःखितश्शत्रुगृहे ग्रहेन्द्रो नीचेऽतिभीतो विकलोस्तयातः'।।
'दीप्तः पूर्णं विधत्ते शुभमथ सुखितः पादहीनं तदर्धं
स्वस्थः पादैर्विहीनं त्रिभिरथ मुदितः शान्तशक्तौ च तद्वत्।
अत्यल्पं त्वत्र योऽन्ये विदधति विकलो भीतसंज्ञश्च नष्टं
भीताद्यादीप्तनिष्ठास्त्वशुभमपि तथा व्युत्क्रमेण ग्रहास्ते'।।

तस्मात् भावानां अधिपतिबलमाश्रितराशिबलं चावलोक्य फलं वक्तव्यम्।

तथा चोक्तम् -

'अधिपः सर्वभावानां कारकः परिकीर्तितः।
कर्ता भावगतः प्रोक्तः तथा तद्भाववीक्षितः।।

बलहीनेऽरिनीचस्थे दुःस्थे वा भावनायके।

भावस्य सम्पदं कर्तुं न शक्यं भावमाश्रितैः'।।

लग्नादिद्वादशभावानां स्वाधिपतिना सौम्यग्रहैश्च योगसम्भवे सति वृद्धिर्भवति। शत्रुग्रहैः पापैरपि दृष्टियोगसम्भवे सति हानिर्भवति।

तथा च षट्पञ्चाशिकायाम् -

'यो यो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात् तस्य तस्याभिवृद्धिः।

पापैरेवं तस्य भावस्य हानिर्निर्देष्टव्या पृच्छतो जन्मतो वा'।।

'पृच्छतां जन्मिनां वा' इति वा पाठः। आचार्येणाप्युक्तमनिष्टयोगाध्याये।

तथा तत्प्रकाद्ररः -

'लग्नात् पुत्रकलत्रभे शुभपतिप्राप्तेऽथवालोकिते।

चन्द्राद्वा यदि सम्पदस्ति हि तयोर्ज्ञेयोऽन्यथाऽसम्भवः'।। इति।।

अयं विधिः न केवलं पुत्रकलत्रविषयः; सर्वभावसाधारणस्स्यात्। बह्वर्थोऽयं श्लोकः। पुत्रकलत्रभे शुभपतिप्राप्ते शुभैः पत्या वा प्राप्ते एतैरालोकिते वा तयोः सम्पदस्ति। यद्वा शुभानां पतिः शुभपतिः। शुभप्रवरौ गुरुशुक्रौ इत्यर्थः।

'दोषाम्बुराशितरणाय कृपार्द्रचेताः पोतं ससर्ज गुरुशुक्रमयं विधाता'।

इति यथाक्रमं गुरुशुक्राभ्यां पुत्रकलत्रभे प्राप्तेऽथवालोकिते वा यदि तयोः सम्पदस्ति। अथवा शुभपतिः शुभं भवनं भाग्यस्थानम्। तत्पतिना प्राप्ते अवलोकिते पुत्रकलत्रभे यदि तयोः सम्पदस्ति। अर्थादशुभपतिप्राप्तेऽथवालोकिते पुत्रकलत्रभे यदि तयोरभावो ज्ञेयः। 'अन्यथाऽसम्भवः' इति वचनात् अशुभमष्टमं मरणस्थानत्वात् तत्पतिरष्टमेशस्तेन युतदृष्टो भावो नाशं व्रजति।

तथा चोक्तम् -

'यद्भावस्थोऽष्टमपः तद्भावो नश्यते न सन्देहः' इति।

लग्नस्य लग्नेशस्य वा पुत्रकलत्रयोः ईशयोगदृष्ट्या तत्सम्भव इति। एवं भावे-योगबलात् आश्रयबलात् सुहृत्सौम्यारिवीक्षणात् अन्यथा भवति।



तथा च सारावल्याम् -

'योगाश्रयबलयोगात् सौम्यसुहृद्रिपुनिरीक्षणाच्चैव।

उच्चादिभवनसंस्थैः ग्रहैश्च बलमन्यथा भवति'।।

'चन्द्राद्वा' इति चन्द्रस्य बलिष्ठत्वे एतस्मात् फलसिद्धिः। अत्र ग्रहाणां कारकत्वमस्ति। अत्र चोक्तम् -

'आत्मप्रभावशक्तिश्च पितृचिन्ता रवेः फलम्।

मनोबुद्धिप्रभावं च मातृचिन्ता तु चन्द्रतः।।

भ्रातृसत्त्वगुणान् भूमिं भौमेन तु विचिन्तयेत्।

वाक्प्रागल्भ्यं च विज्ञानं बुधेन परिचिन्तयेत्।।

गुरुणा देहपुष्टिः स्यात् बुद्धिपुत्रार्थसम्पदः।

शुक्राद्विवाहकर्म स्यात् भोगस्थानं च वाहनम्।।

आयासव्याधिदुःखानि मरणं च शनैश्चरात्'।

एतदस्मिन्नेव पूर्वोक्तेन सिद्ध्यति। कथमिति चेत् 'कालात्मा दिनकृत्' इत्यादिना श्लोकार्धेन 'दिवार्कशुक्रौ' इत्यादिना च 'सहजक्षित्याविकाजैर्धनम्' इत्यनेन 'हेमाश्वात्मजकुञ्जराम्बरचय' इत्यनेन च विज्ञातव्यमिति। 'उग्रग्रहैः' इत्यनेन श्लोकेन शुक्रस्य भार्याकारकत्वं स्पष्टीकृतम्। पूर्वं च 'सितश्च मदन' इति बीजक्षेपः। 'शौक्र्यां गीतरती'त्यनेन विवृतम्। 'उग्रग्रहैः' इत्यनेन भार्यारिष्टं, सप्तमाधिपतेरप्येवमूह्यम्।

उग्रग्रहैरित्यत्र गार्गिवचनम् -

'चतुर्थाष्टमगैः शुक्रात् सौरारार्कैर्हुताशनात्।

तेषां द्वितीयमध्यस्थे तथा शुक्रे प्रपातनात्।

शुक्रे सद्योगदृग्घीने पाशाद् भार्यावधो भवेत्'।। इति।।

'शोषी परस्परगृहांशकयोः' इत्यत्र गार्गिवचनम् -

'परस्परगृहे यातौ यदि वापि तदंशगौ

भवेतामर्कशीतांशू तदा शोषी प्रजायते।'

गुरोः पञ्चमाधिपतेश्च एतत् पुत्रारिष्टत्वमवगन्तव्यम्। पुंस्त्रीविभागस्तु 'बुधसूर्यसुतौ' इत्यनेन श्लोकेन निरूपयितव्यः, बुधशन्योः नपुंसकत्वे तद्वर्गे तत्सम्बन्धे दत्तादिसिद्धिः,

पुत्राणां सङ्ख्या तु 'दृष्ट्या समानं प्रवदेत्' इत्यादिना ज्ञेया। 'लग्नात् व्ययारिगतयोः' इति नयनकारकत्वं चन्द्रार्कयोः 'घूनस्थयोः नवमपञ्चमसंस्थयोर्वा शुक्रार्कयोः' इत्यत्र 'अर्क' शब्देन अङ्गारकोऽपि गृह्यते।

तथा च सारावल्याम् -

'घूने कुजभार्गवयोर्जातः पुरुषो भवेद्विकलदारः।

धीधर्मस्थितयोर्वा परिकल्प्यं पण्डिताः प्राहुः'।।

इत्यरिष्टाध्यायोक्तमपि दशायां योज्यम्। अथ 'स्थान'शब्दस्यार्थ उच्यते। 'वृत्ताताम्रदृक्' इत्यत्राध्यायोक्तफलम्। राशितन्नाथस्वभावाः अत्रोच्यन्ते। 'वृत्तताम्रदृक्' इति कुजधर्मः। 'उष्णशाकलघुभुक्' इति मेषधर्मः। 'क्षिप्रप्रसादः' सेनाधिपधर्मः 'अटनकामी दुर्बलजानुरङ्गनावल्लभः कुनखी व्रणाङ्गितशिराः तोये च भीरुः' इति मेषधर्मः। अन्ये सेनापतिधर्माः। एवं चन्द्रस्य अन्येषु राशिषूक्तं फलमपि। अन्येषां ग्रहाणां च राशिफलानि राशितन्नाथस्वभावाः इत्यवगन्तव्याः। तेन राशौ बलवति तदधिपे च बलसहिते युक्ते ग्रहे च बलवति कथितबलानां समग्रप्राप्तिः। राशौ बलहीने तदधिपे च न वाच्यम्। ग्रहे च बलहीने तथैव।

तदुक्तमाचार्येण -

'बलवति राशौ तदधिपतौ च स्वबलयुतः स्याद्यदि तुहिनांशुः।

कथितफलानामविकलदाता शशिवदतोऽन्येऽप्यनुपरिचिन्त्याः'।।

एतत् स्थानफलमपि दशायां योज्यमिति। 'आलोक'शब्दस्यार्थ उच्यते। 'चान्द्रे भूपबुधौ' इत्यादिना मेषाद्येकैकराशिगतस्य चन्द्रस्य अन्यग्रहवीक्षणफलान्युक्तानि। तथा मेषाद्यंशगतस्य चन्द्रस्यापि तान्युक्तानि। पूर्वशास्त्रेषु विस्तरतः कथितानि। इह तु संक्षेपादेकैकं फलमेव कथितम्। तेनापि शुभाशुभविभागो विज्ञायते। ततः पूर्वशास्त्रैरवगन्तव्यानि। चन्द्रस्य तावत् कथितं 'शिशिरकरसमागमेक्षणानां सदृशफलं प्रवदन्ति लग्नजातम्' इत्युक्तत्वात् लग्नस्यापि कथितम्।

'भानौ तद्वत् इन्द्वादिदृष्टे' इत्युक्तत्वाद्रवेरपि दृष्टिफलमुक्तम्। लग्नचन्द्रयोरर्कस्य च फलनिरुपणे प्राधान्यात् तत् फलमेव इह कथितम्। 'शिशिरकरसमागमेक्षणानां सदृशफलं प्रवदन्ति लग्नजातं 'भेन्द्वर्कास्पदपतिगांशनाथवृत्त्या' इति वक्ष्यति। 'उदयरविशशाङ्कप्राणिकेन्द्रादिसंस्था' इत्युक्तञ्च पूर्वम्। तस्मात् लग्नचन्द्रार्काणां जातकफलनिरूपणे प्रधानोपकारित्वमिति विज्ञायते।अन्येषां ग्रहाणाञ्च प्रतिराशिदृष्टिफलमस्ति। तत्पूर्वशास्त्रेषु विस्तरतः कथितञ्च। तत् 'कालात्मा दिनकृदि'त्यादिश्लोकरूपेण सूत्रेण वीक्ष्यमाणग्रहञ्च तदाश्रितराशिञ्च वीक्ष्य ग्रहञ्च निरीक्ष्य तेषां दृष्टिफलं स्वधिया तर्कणीयम्। पूर्वशास्त्राणि चावगम्य तत्फलन्निर्णेतव्यञ्च।



चन्द्रस्यांशकवीक्षणस्य इयान् विशेषः। 'वर्गोत्तमस्वपरगेषु शुभं यदुक्तं तत्पुष्टमध्यलघुताऽशुभमुत्क्रमेण' इत्युक्तमंशकफलं निरूपणीयमिति सूचनार्थम्। एवं भूतदृष्टिफलमपि स्वदशायां योज्यम्। अथ 'योग' शब्दस्यार्थ उच्यते। तत्र प्रथमं राजयोगाः उक्ताः। 'प्राहुर्यवनाः' इत्यादिना त्रिभिरुच्चगतैः क्रूरैरपि महीपतिः भवति। 'स्वोच्चेषु षोडश नृपा' इति। अतो योगानां विभागेन सङ्ख्योकरणमपि। फलभेदोऽस्ति। 'अपि खलकुलजाता मानवा राज्यभाजः' इत्यादिश्लोकेन जातिदेशावस्थानरूपं वक्तव्यम्। कानिचित्तु अवश्यंभवितव्यतया वक्तव्यानि। तद्विभागो लक्षणानां बलविभाग इति सूचितम्। राजयोगे यस्य ग्रहस्यातिबलं तद्दशायां राज्यप्राप्तिः।

तदुपरि वक्ष्यति -

'कर्मलग्नगतपाकदशायां राज्यलब्धिरथवा प्रबलस्य।

शत्रुनीचगृहयातदशायां छिद्रसंश्रयदशा परिकल्प्या'।।

दशमगतस्य दशायां राज्यं प्रवदेत्।

तथा चोक्तम् -

'बलयुक्तो दशमगतस्तस्य दशायां विनिर्दिशेद्राज्यम्।

तत्रोच्चवर्गगतो यदि स तु सम्पूर्णभूमिभाग् भवति।।

उच्चस्थो बलयुक्तस्सौम्यः सोमेन शोभनेन युतः।

तस्य दशायां राज्यं प्राप्नोत्यन्तर्दशायाञ्च।।

जन्मसमये ग्रहेन्द्रा बहुधा बलसंयुतास्तथा सुस्थाः।

तेषां दशासु मतिमान् सम्पत्तिं निर्दिशेद्यथायोग्यम्।।

अन्यांश्च राजयोगान्यालोच्य बलाधिकस्य वर्षेषु।

राज्यं ब्रूयान्मतिमान् कारकविहगपाके वा।।

नीचेऽस्तगेऽरिराशौ रन्ध्रे व्ययलाभेऽथवा बलैर्हीने।

तस्य दशायां भ्रंशं विनिर्दिशेद् बन्धनञ्चापि'।।

इति राजयोगाश्चिन्त्याः। एतेषां राजयोगानां भङ्गोऽपि निरूपणीयः। अन्येषु शास्त्रेषु विस्तरतोऽन्यैः आचार्यैः निर्दिष्टः। आचार्येण तु राजयोगोक्तप्रकारवैपरीत्येन चिन्तनीय इति नोक्तः। 'प्राहुर्यवनास्स्वतुङ्गगैः क्रूरैः' इत्यत्र स्वतुङ्गगैः क्रूरैरित्यत्र स्वनीचगैः क्रूरैः इति वैपरीत्येन राजयोगभङ्गः।

तथा च सारावल्याम्।

'सर्वे क्रूराः केन्द्रे नीचारिगता न सौम्ययुतदृष्टाः।

शुभदा व्ययरिपुरन्ध्रे तदापि भङ्गो भवेन्नृपतेः'।। इति।।

ननु केवलं प्राहुर्यवनाः 'स्वतुङ्गगैः क्रूरैः' इत्यस्य वैपरीत्यमेवात्रोक्तम्। तेषां क्रूराणां केन्द्रगतत्वं सौम्यग्रहादृष्ट्युतत्वं च शुभानां व्ययरिपुरन्ध्रगतत्वञ्च योगोपकारितयोक्तम्। कथमेतदवगम्यते? तदुच्यते अवगमोपायः। क्रूराणां नीचगतत्वं योगवैपरीत्येन केन्द्रगतत्वे 'स्रक्सर्पौ कथितौ पराशरेण' तत्र सर्पयोगलक्षणेन 'न' सौम्ययुतदृष्टत्वं 'अशुभगदिताः योगाः याप्याः भवन्ति शुभेक्षिताः इत्यनेन तर्कणीयम्। 'वक्रार्कजार्कगुरुभिः' इत्यत्रापि वैपरीत्येन राजयोगभङ्गः।

तथा च सारावल्याम् -

'कुजार्कजीवार्किभिरत्र नीचैर्द्वाभ्यां त्रिभिर्वैकतमेऽपि लग्ने।

निशाकरे वृश्चिकराशिसंस्थे विशीर्यते राजकरो हि योगः'।। इति।।

'वर्गोत्तमगते लग्ने' इत्यत्रापि वैपरीत्यं ग्राह्यम्।

तथा च सारावल्याम् -

'लग्नं गतोत्तमोनं न खेचरैर्दृश्यते यदा भङ्गः।

भवति हि नृपयोगानां दारिद्र्याय प्रजातस्य।।



अन्त्याष्टमादिभागे चरराश्यादिषु वा शशी यदा क्षीणः।

एकेनापि न दृष्टो ग्रहेण भङ्गः सदा नृपतेः' ।। इति।।

'उच्चत्रिकोणगैर्बलसंस्थै'रित्यत्रापि वैपरीतमवगन्तव्यम्।

तथा च सारावल्याम् -

'घटोदये नीचगतैस्त्रिभिर्ग्रहैर्बृहस्पतौ सूर्ययुते च नीचगे।

एकोऽपि नोच्चे तु शुभेन सङ्गतः प्रयान्ति नाशं शतशो नृपोद्भवाः'।।

इत्यादि शास्त्रान्तरादवगन्तव्यम्। ऊहशक्तिरस्ति चेदस्मादेवावगन्तव्यम्। राजयोगसद्भावेऽप्युत्पातानां बाहुल्ये सति राजयोगभङ्गः।

तथा च सारावल्याम् -

'उल्कायाः पतने चैव निर्घातव्यतिपातयोः।

केतोश्च दर्शने चैव यान्ति नाशं नृपोद्भवाः।।

अन्यैः क्रूरोत्पातैस्त्रिशङ्कुताराद्युदयैश्च सद्यः।

क्षिप्रं प्रयाति विलयं नृपयोगो भानुजो यदि विलग्ने।।

कर्तारो नृपतीनां गगनसदो युद्धकांक्षिणो मलिनाः।

क्रूरा जर्जरदेहा विघ्नं जनयन्ति राजयोगस्य'।। इत्यादि।।

ग्रहाणां नीचगतत्वं विशेषतश्चिन्तनीयम्। इयानत्र विशेषोऽभिप्रेतः। ग्रहाणामुच्चत्रिकोणक्षेत्रांशगतत्वं वक्रगतत्वमुच्चक्षेत्रादिराशिगतत्वं विशेषतश्चिन्त्यम्। 'बलयोगात् फलमंशकर्क्षयोः' इति राश्यंशयोस्साम्यं पूर्वमेवोक्तम्। अपि च 'ग्रहभुक्तनवांशराशितुल्यं बहुसाम्यं समुपैति सत्यवाक्यम्' इति सत्यमतप्रशंसयापि अंशकप्राधान्यमेवात्र व्यक्तीभवति। चान्द्रयोगास्तु 'हित्वार्कम्' इत्यादिना ग्रन्थेनोक्तं तत्र सुनभानभाधुरुधुरास्त्रयो योगाः। 'स्वयमधिगत' इत्यादिना तेषां फलं च कथितम्। तत्र योगकर्तृभेदेन फलभेदोऽस्ति। शास्त्रान्तरेषु विस्तरतो निर्दिष्टः। अत्र तु 'उत्साहशौर्यधनसाहसवान्' इत्यादिना ग्रहस्वभावाः कथिताः। तेन च पूर्वोक्तफलेन च विचार्य फलं वाच्यम्। तदर्थं 'त्रिंशत्स्वरूपा' इत्यादिना सङ्ख्याकरणम्। अत्र योगकर्तारो ग्रहाः केन्द्रगताश्चेद्योगस्यातिशुभत्वं कल्पयेत्।

तथा च सारावल्याम् -

'चन्द्राद् ग्रहैर्निगदिताः सुनभादयस्स्युः केन्द्रस्थितैर्यदि भवन्ति च तेऽत्र योगाः।

विश्वम्भरापतिकुलेषु महत्सु जाता योगेषु तेषु मनुजेश्वरतां लभन्ते'।।

चतुरश्रे द्यूने वा पापैर्धुरुधुरायोगश्चेदशुभफलमपि चिन्तनीयम्। 'पापान्तस्थे निधनहिबुकद्यूनयुक्ते च चन्द्रे' इति स्वेनैवोक्तत्वात्। एते योगाः न यदा भवन्ति तदा 'केमद्रुम' इति केषाञ्चिन्मतम्। अन्येषां गर्गप्रभृतीनान्तु मते सुनभादीनां लक्षणाभावे विलग्नकेन्द्रे अथवा चन्द्रे केनचित् ग्रहेण युते केमद्रुमाभाव इति।

तथा च सारावल्याम् -

'एते न यदा योगाः केन्द्रे ग्रहवर्जिते शशाङ्कश्च।

केमद्रुमोऽतिकष्टः शशिनि च समस्तग्रहादृष्टे'।। इति।।

'केचित् केन्द्रनवांशकेषु वदन्ति' केचित् श्रुतकीर्तिप्रभृतयः केन्द्रेषु गतैः ग्रहैर्योगान् वदन्ति। केचित् जीवशर्मप्रभृतयो नवांशकेषु गतैर्ग्रहैर्योगान् वदन्ति। चन्द्रात् चतुर्थस्थितैस्सुनभा दशमस्थितैरनभा तु चतुर्थदशमयोः स्थितैर्धुरुधुरा इति।

तथा च श्रुतकीर्तिः -

'चन्द्राच्चतुर्थसंस्थैस्सुनभा दशमस्थैः कीर्तितानभा।

विहगैरुभयस्थितैर्धुरुधुरा केमद्रुमसंज्ञितोऽन्यथा'।। इति।।

चन्द्राक्रान्तनवांशराशेः द्वितीयराशिगतैस्सुनभात्र च विद्यात्। व्ययराशिगैर्ग्रहैस्तथानभां वक्त्युभये धुरुधुराम्।

तथा च जीवशर्मा -

'यद्राशिसंज्ञे शीतांशुर्नवांशे जन्मनि स्थितः।

तद्द्वितीयस्थितैर्योगस्सुनभाख्या प्रकीर्तिता।।

द्वादशे त्वनभा ज्ञेया द्वितीयद्वादशस्थितैः।

प्रोक्तोऽयं धुर्धुरायोगोऽन्यथा केमद्रुमः स्मृतः'।। इति।।

'केचित् केन्द्रनवांशकेषु च वदन्ती'त्यनेन च व्याख्यातोऽयमर्थ इति। व्यक्तं भवति।

किमर्थमाचार्येणैवं कृतम्? तन्मतानां आदरणीयता न चेत् इति कल्पनीयम्। 'उक्तिप्रसिद्धा न ते' इति वचनात् ग्रहाणां बलपौष्कल्ये तन्मतमपि सङ्गच्छते इति



तन्मतञ्च प्रकाशितम्। 'अशुभकृदुडुपोऽह्नि दृश्यमूर्ति'रिति। अह्नि दृश्यार्धगतश्चन्द्रोऽशुभकृत् भयशोकादिकृत् गलिततनुः अपरपक्षचन्द्र इत्यर्थः। 'अन्यथान्यदूह्यं' निश्यदृश्यार्धगतः शुभकृत्। पूर्यमाणतनुः शुभश्च।

तथा च सारावल्याम् -

'औत्पादिकः कृशतनुर्निशि चाप्यदृश्यो दृश्यो दिवा शिशिरगुर्भयशोकदाता।

एवं स्थितश्शुभफलं पृथिवीपतित्वं यातोऽन्यथा प्रकुरुते परिपूर्णमूर्तिः'।। इति।।

'गलिततनुरह्नि शुभः' इति शास्त्रान्तरेऽप्युक्तम्।

'पक्षे सिते भवति जन्म यदि क्षपायां कृष्णेऽथवाहनि शुभाशुभदृश्यमानः।

तच्चन्द्रमा रिपुविनाशगतोऽपि यत्नादापत्सु रक्षति पितेव शिशून् न हन्ति'।।

इति।

नन्वयमर्थो 'अशुभकृदुडुप' इत्यादिना कथमुच्यते। 'अह्नि दृश्यमूर्तिरुडुपः अशुभकृत्' 'अह्नि दृश्यमूर्तिः' इति अह्न्युदितः इत्यर्थः। तच्छुक्लपक्षे एव घटते। 'गलिततनुः' कृष्णपक्षचन्द्रः अह्नि शुभकृत् इत्यर्थः। 'अन्यथान्यदूह्यं' रात्रौ शुक्लपक्षचन्द्रः शुभः अपरपक्षचन्द्रः अशुभः इति सङ्गच्छते।

'अहनि निशि च चन्द्रे स्वेऽतिमित्रांशके वा।

सुरगुरुसितदृष्टे वित्तवान् स्यात् सुखी च'।।

इति च निरूपणीयम्। अत्राहनि गुरुदृष्टे निशायां सितदृष्टे इति क्रमो विवक्षितः। नाभसयोगास्तु समस्ताः साधारणत्वेन चिन्तनीयाः। द्विग्रहयोगास्तु 'तिग्मांशुर्जनयत्यथेन्दुसहितो यन्त्राश्मकारं नर'मिति 'यन्त्राणि' 'अघरत'मनृतवधबन्धादिरतं, 'श्मश्रुकरो' नापितवृत्तिः। 'कथितफलैः परतोऽपरे विकल्प्याः' इति 'परतो परे' परतः द्विग्रहयोगेभ्यः त्रिग्रहयोगादयः कथितफलैरूहेन कल्पनीयाः। अर्कचन्द्रकुजयोगे अर्कचन्द्रयोगजमर्ककुजयोगजं चन्द्रकुजयोगजं च फलमूहेन विकल्पनीयमिति। त्रिग्रहचतुर्ग्रहपञ्चग्रहषड्ग्रहयोगफलं शास्त्रान्तरे चिन्तनीयमित्यर्थः। प्रवज्यायोगास्तुः 'एकस्थैश्चतुरादिभिः' इत्यादिनोक्ताः। चतुरादिभिः चतुर्भिः पञ्चभिः षड्भिर्वा सप्तभिर्वा। बलयुतैः सर्वैरनस्तगैः अनीचगैः। 'पृथक् वीर्यगैः' स्वोच्चादिगतैः। 'प्रवज्या बलिभिः समा'श्चेद्यदिबलवन्तः तैः समं प्रव्रज्या भवति। 'माहेयज्ञे'त्यादिना दीक्षाकथनम्।

तथा च सारावल्याम् -

'अग्नीनां परिचारका गिरिनदीतीराश्रमे तापसाः
सूर्याराधनतत्परा गणपतेर्भक्ता उमासेवकाः।
गायत्रीं जपतां वने नियमिनां गङ्गाभिषेकार्थिनां
कौमारव्रतमिच्छतामधिपतिस्तेषां सदा भास्करः'।

'वृद्ध'शब्देनोक्तमर्थं वक्ष्यामि। सारावल्यामुक्तम् -

'वृद्धश्रावकभस्मधूलिधवलाः शैवव्रते ये स्थिताः
बाह्या पातकिनां गता भगवतीभक्ताश्च निस्सङ्गिनः।
सिद्धान्ते खलु सोमनाम्नि निरताः कापालिका निष्ठुरा-
स्तेषां नायकतां वहन् शशिधरः खट्वाङ्गपाणिद्युतिः'।।
'उपासका बुद्धसमाश्रयं गताश्शिखां विना पाण्डरभिक्षवश्च ये।
सुवाससो रक्तपटा जितेन्द्रियाः प्रभुस्सदेषां क्षितिजः प्रकीर्तितः'।।
आजीविनां कुहकिनां समयाधिका ये ये दीक्षितास्तनुभृतः खलु गारुडे च।
तन्त्रे मयूरपिशिताशनयोगयुक्तास्तेषां शशाङ्कतनयोऽधिपतिर्निरुक्तः।।
एकं त्रीनथवा वहन्ति मुनयो दण्डान् कषायाम्बराः
वानप्रस्थमुपागताः फलपयोभुक्ताश्च ये भिक्षवः।
गार्हस्थ्येन तु संस्थिता नियमिनः सत्ब्रह्मचर्यां गता-
स्तेषां दण्डपतिस्सुरेन्द्रसचिवस्तीर्थेषु ये स्नातकाः।।
पाशुपतयज्ञदीक्षाव्रतेषु ये नित्यमेव संयुक्ताः।
वैष्णवचरकाणामपि तेषान्नेता प्रकीर्तितश्शुक्रः।।
पाषण्डव्रतनिरता दिगम्बराश्च भिक्षवो ये च।
तेषामधिपतिरार्किः श्रावकतरुमूलिनश्च दुस्तपसः'।। इति।।

एते आचार्योक्ताः प्रव्रज्याः ग्रहबलवशात् वक्तव्याः इति। कारकयोगाश्चिन्त्या 'स्वर्क्षतुङ्गमूलत्रिकोणगा' इत्यत्र स्वर्क्षाद्यंशकानाञ्च ग्रहणमस्ति।



तथा च सारावल्याम् -

'तुङ्गसुहृत्स्वगृहांशे स्थिता ग्रहाः कारकास्समाख्याताः।
मेषूरणेऽपि रविरिति विशेषतो वक्ति चाणक्यः।।
लग्नगतास्सुखसंस्थाः कामस्थाश्चापि कारकाः सर्वे।
एकादशेऽपि केचिद्वाञ्छन्ति न तन्मतो मुनीन्द्राणाम्'।। इति।

तत्र स्वोच्चत्रिकोणक्षेत्रगतैः कुजादिभिस्ताराग्रहैः रुचकादिपञ्चमहायोगाः शास्त्रान्तरेषु प्राधान्येन कथिताः। अत्र तु 'अशून्येषु च' इत्यत्रान्तर्भूताः भवन्ति। तेन विशेषन्न प्रदर्शितम्। ते पञ्चमहायोगाः प्राधान्येन निरूपणीयाः।

तथा च सारावल्याम् -

'स्वक्षेत्रे च चतुष्टये सुबलिभिस्स्वोच्चस्थितैर्वा ग्रहैः
शुक्राङ्गारकमन्दजीवशशिजैरेतैर्यथानुक्रमात्।
मालव्यो रुचकश्शशोऽथ कथितो हंसश्च भद्रस्तथा
सर्वेषामतिविस्तरं मतिमतां संक्षिप्यते लक्षणम्'।।

योगकर्तृग्रहानुरूपं फलञ्च वक्तव्यम्। चान्द्रयोगाध्याये 'उत्साहशौर्यधनसाहसवान् महीज' इत्यादिना ग्रन्थेन तर्कणीयं यत् फलं तस्यातिशयोऽत्र योगानामूह्यम्। विशेषादपि सारावल्यामुक्तं यदत्र लिख्यते -

'बलरहितेन्दुरविभ्यां युक्तैर्भौमादिभिर्ग्रहैर्मिश्राः।
न भवन्ति भूमिपालाः दशासु तेषां सुखार्थयुताः'।।
'न स्थूलोष्ठो न विषमवपुर्नातिरिक्ताङ्गसन्धि-
र्मध्ये क्षामः शशधररुचिर्हस्तिनासः सुगण्डः।
सन्दीप्ताक्षस्समसितरदो जानुदेशान्तपाणि-
र्मालव्यायां विलसति नृपः सप्ततिर्वत्सराणाम्'।।
'दीर्घास्यः स्वच्छकान्तिर्बहुरुचिरबलस्साहसावाप्तकार्य-
श्चारुभ्रूर्नीलकेशश्चरणरणरतो मन्त्रविच्चोरनाथः।
रक्तश्यामोऽतिशूरो रिपुबलमथनः कम्बुकण्ठः प्रधानः
क्रूरो भर्ता नराणां द्विजगुरुविनतः क्षामसज्जानुजङ्घः'।।

'खट्वाङ्गपाशवृषकार्मुकवज्रवीणा रेखाङ्कहस्तचरणश्च शताङ्गुलश्च।
मन्त्राभिचारकुशलस्तुलया सहस्रं मध्ये च तस्य कथितं मुखदैर्घ्यतुल्यम्।।
विन्ध्याचलसह्यगिरीन् भुनक्ति सप्ततिसमा नगरदेशान्।
शस्त्रानलकृतमृत्युः प्रयाति देवालयं प्रियो रुचकः।।
तनुद्विजास्यो द्रुतगः शशोऽयं शठोऽतिशूरो निभृतप्रतापः।
वनाद्रिदुर्गेषु नदीषु सक्तः कृशोदरो नातिलघुप्रसिद्धः'।।
'पर्यङ्कशङ्खहलशस्त्रमृदङ्गमाला
वीणोपमा यदि करे चरणे च रेखाः।
वर्षाणि सप्ततिमितानि करोति राज्यं
प्रात्यन्ति कः क्षितिपतिः कथितो मुनीन्द्रैः'।।
'रक्तास्योन्नतनासिकस्सुचरणो हंसः प्रसन्नेन्द्रियो
गौरः पीनकपोलरक्तकरजो हंसस्वरः श्लेष्मलः।
शङ्खाब्जाङ्कुशदाममत्स्ययुगलैर्खट्वाङ्गमालाघटै-
श्चिह्नैः पादकराङ्कितो मधुनिभे नेत्रे च वृत्तं शिरः'।।
'पातीह देशान् खलु शूरसेनान् गान्धारगङ्गायमुनान्तरालान्।
जीवेन्नगघ्नां दशवर्षसङ्ख्यां पश्चाद्वनान्ते समुपैति नाशम्'।।
'शार्दूलप्रतिमाननो द्विपगतिः पीनोरुवक्षस्थल-
स्सद्वाक् पीनसुवृत्तबाहुयुगलः तत्तुल्यमानोच्छ्रयः।
कामी कोमलसूक्ष्मरोमनिकरैः संरूढगण्डस्थलः
प्राज्ञः पङ्कजगर्भपाणिचरणः श्वासाधिको योगवित्'।।

भद्रयोगफलं अत्र न पश्यामि। दर्शनानन्तरं लिखामि।
मयात्र दृष्टम् -

'शङ्खासिकुञ्जरगदाकुसुमेषुकेतुचक्राब्जलाङ्गलविचिह्नितपाणिपादः।
पत्रागरुद्विपमदप्रथमाम्बुसिक्तभूकुङ्कुमप्रतिमगन्धतनुस्सुघोणः।।
शास्त्रार्थविद्धृतियुतस्समसंहतभ्रूर्नागोपमो भवति वस्तुनिगूढगुह्यः।
सत्कुक्षिधर्मनिरतस्सुललाटजङ्घो धीरस्थिरोऽप्यसितकुञ्चितकेशभारः।।



स्वतन्त्रस्सर्वकार्येषु स्वजनं प्रति न क्षमी।
भुज्यते विभवञ्चास्य नित्यमर्थिजनैः परैः।।

कारकयोगे जन्म शुभमिति।
तथा च सारावल्याम् -

'नीचकुले सम्भूतः कारकविहगैः प्रधानतां याति।
क्षितिपतिवंशसमुत्थो भवति नरेन्द्रो न सन्देहः' ।। इति।।

आश्रययोगास्तु 'कुलसम' इति। 'स्वभैकवृद्ध्या' अत्र 'स्व' शब्दः त्रिकोणादीनामपि उपलक्षणम्। ग्रहाणां पृथक् पृथक् उच्चक्षेत्राद्याश्रयफलं शास्त्रान्तरेषूक्तम्। अत्र युगपत् स्वक्षेत्राद्याश्रयफलमुच्यते। पृथक् पृथक् आश्रयफलन्तु पूर्वं स्थानबलाध्याये कथमित्यत्र नोक्तम्। अत्र कुलसममुख्यादीनां ग्रहानुगुणफलविशेषं निरूपणीयम्। अत्र 'स्वभा'दिस्थितग्रहः लग्नजन्मराशितदङ्गेशानामन्यतमश्चेत् कुलसमत्वादिगुणं विशेषेणापि वक्तव्यम्। 'जनयति नृपमेकोऽप्युच्चगो मित्रदृष्टः' इति। पूर्वश्लोकेन स्वभवनस्थितस्य मित्रभस्थितस्य फलमुक्तं, अनेन श्लोकेन उच्चस्थितस्य फलमुच्यते। तत्रायं विशेषः। स्वभवनस्थितेषु सप्तसु ग्रहेष्वपि नृपत्वम्। मित्रस्थितेष्वपि यथैवोक्तम्। उच्चस्थितः एकोऽपि अनन्यापेक्षः नृपं जनयति। उच्चप्राधान्यं अत्रापि द्योतितः। 'प्रचुरधनसमेतं मित्रयोगाच्च सिद्धं' इत्यनेन योगात्दृष्टेः प्राधान्यं सूचितम्। 'विवसुः' इत्यादि। 'विवसु'र्निर्द्रव्यः, 'विसुख'श्चिन्ताबहुलः नीचश्च। 'मूढो' मूर्खः अधर्मरतः। 'व्याधितो' निश्चेष्टः भृतकश्च। 'बन्धुतप्तः' प्रभिन्नदारः अगृहश्च दासश्च। 'वधसमेतः' सर्वैर्वध्यः ताड्यः। 'दुरितसमेतः' परान्नभोक्ता परहिंस्यः दरिद्रः दुःखभाक् पतितः सर्वदा दुःखं दुरितफलं अनुभवीत्यर्थः। शत्रुगृहेषु फलानामीषन्न्यूनत्वम्। अनेन पूर्वं दशासु 'शत्रुनीचगृहयातदशायां छिद्रसंश्रयदशा परिकल्प्या' इत्यनेनापि राजयोगभङ्ग ऊह्य इति। निर्याणयोगास्तु 'मृत्युः मृत्युगृहेक्षणेन बलिभि'रिति। 'होरादय' इत्यनेन श्लोकेन अष्टमं मरणस्थानं इति सिद्धम्। तत्र ये ग्रहाः द्रष्टारः स्थिताश्च तेषां अधिकबलिना ग्रहेण मरणं वक्तव्यम्। तत्र प्रश्नादौ तु 'मृत्युग्रह'मिति कालमृत्यादि गुलिकादयश्चिन्त्याः। 'शैलाग्राभिहतस्य' इत्यादिना मृतिभेदः उच्यते। तद्धि चन्द्रपापग्रहैः प्रायशो भवति। योगानामभावे 'द्वाविंशतिमस्तु कारणम्' इत्युच्यते।

'मेषाद्ये द्रेक्काणे क्रूरग्रहवीक्षिते च संयुक्ते।
अम्ब्वहिविषपित्तकृन्मरणं नृणां समादेश्यम्'।।

इत्यादिना सारावल्यामुक्तेन ग्रन्थे द्रेक्काणैश्चिन्त्यम्।

तथा च तत्रैवं सारावल्याम् -

'उदयाद्द्वाविंशतिमद्रेक्काणो भवति कारणं मृत्योः।
तस्याधिपतिभवो वा निर्याणं सूचयेत् स्वगुणैः।।
मेषाद्ये द्रेक्काणे क्रूरग्रहवीक्षिते च संयुक्ते।
अम्ब्वहिविषपित्तकृन्मरणं नृणां समादेश्यम्।।
विद्याद्द्वितीयभागे मरणं जलकृमिहिमारण्ये।
एवं तृतीयभागे तटाककूपप्रवाताद्वा।।
वराहाश्वखरोष्ट्रेभ्यो मृत्युर्ज्ञेयो वृषस्याद्ये।
पित्ताग्निवातचोराद्द्वितीयभागे वृषस्यैव।।
विद्यात् तृतीयभागे यानासनवाजिवातकृतम्।
पुंसां भवति हि मरणं रणशिरसि महास्त्रकृतमेव।।
आद्ये मिथुनत्र्यंशे कासश्वासैश्च सलिलवाताद्वा।
भवति हि मृत्युर्महिषाद्वृषभद्वितीयके सन्निपाताद्वा।।
पवनासिचतुश्चरणात् पर्वतनागात्तथारण्यात्।
भवति हि मृत्युः पुंसामन्त्ये भागे तु जुतुमस्य।
ग्राहेण मद्यपानात् कण्टकदोषेण वा तथा स्वप्नात्।।
भवति हि कर्कटकाद्ये मृत्युर्नृणां भवति नूनम्।
अभिघाताद्विषपानान्मध्यत्र्यंशे समादिष्टम्।।
प्लीहाप्रमेहगुल्मासृक्तन्द्रीदोषैस्तथा चान्त्ये।
सलिलविषपादरोगात् सिंहाद्यत्र्यंशके भवेन्मृत्युः।।
मध्ये तृतीयभागे जलामयकृतो विपिनदेशात्।
विषशस्त्रयोगदोषैस्तथा च विषान्नपानाद्वा।।
अन्त्ये सिंहत्र्यंशे भवति हि मृत्युर्न सन्देहः।



आद्ये कन्यात्र्यंशे मस्तकरोगान्तथानिलान्मृत्युः।।
व्यालाच्च शैलदुर्गमध्ये भूपात्मजादथवा।
करभखरशस्त्रतोयादभिघातस्त्रीकृतान्नपानाद्वा।।
अन्त्ये कन्यात्र्यंशे नृणां मृत्युः समादिष्टः।
आद्ये वणिक्त्रिभागे युवतिचतुष्पान्निपातदोषेण।।
मध्ये तु जठरदोषैरन्त्ये व्यालाम्बुजातेभ्यः।
आद्येऽलिनस्त्रिभागे विषशस्त्रस्त्रीरसान्नपानकृतम्।।
मध्ये कटिवस्तिभवस्त्रम्सनरोगैर्भवति मृत्युः।
अन्त्ये भृंगत्र्यंशे लोष्टकपाषाणघातवेदनया।।
भवति हि मरणं नृणामथवा जङ्घास्थिभङ्गकृतम्।
चापधराद्ये त्र्यंशे गुदानिलसमुद्भवैर्विविधरोगैः।।
मध्ये विषमददोषैर्भवति नृणां चानिलकृतैर्वा मृत्युः।
अन्त्ये तृतीयभागे जलमध्ये तत्समुत्थितैर्वापि।।
मृत्युर्नृणां दृष्टो जठरामयदोषसम्भूतः।
मकराद्ये द्रेक्काणे नृपहिंस्रव्याघ्रकारणान्मृत्युः।।
ऊरुविनाशकादथवा जलचरसत्वाद्विषैकशफसर्पात्।
दहनास्त्रतस्करेभ्यो ज्वरादमानुषविभेदनान्मध्ये।।
अन्त्ये मकरत्र्यंशे स्त्रीभिर्मृत्युः समादिष्टः।
कुम्भे प्रथमत्र्यंशे स्त्रीभिस्तोयात् जठररोगैः।।
ज्ञेयो मृत्युर्नृणां पर्वतवनगहनविपदैर्वा।
मध्ये स्त्रीकृतदुःखैर्गुह्यजरोगैर्भवति मृत्युः।।
अन्त्ये मृतिश्चतुष्पदमुखरोगकृतैर्भवेत् पुंसाम्।
त्र्यंशे मीनयुगाद्ये गुल्मग्रहणीप्रमेहयुवतीभिः।।
जङ्घाजठरजरोगैर्ग्राहकृतैस्समादिशेन्मृत्युः।
नौभेदाज्जलमध्ये झषभवने द्वितीयजातानाम्।।
अन्त्ये भवति हि मरणं कुत्सितरोगैर्न सन्देहः।

एवं द्रेक्काणो मरणकारणं इत्युक्तं 'तस्याधिपतिर्भपोऽपि वा निर्याणं प्रयच्छती'ति। 'तस्याधिपतिः' द्वाविंशद् द्रेक्काणाधिपतिः। 'भपो'ष्टमाधिपतिः अथवा 'तस्याधिपतिः' निर्याणाधिपतिः दुःखाधिपत्यात् शनिः। द्वाविंशद् द्रेक्काणेशाष्टमेशमन्दाः तद्युक्त-राश्यंशेश्वराश्च गुलिकराश्यंशेश्वरश्च निर्याणे चिन्त्याः। ननु द्वाविंशद्रेक्काणाष्टमेशमन्दयुक्त-राश्यंशकेशगुलिकराश्यंशकेशाः चिन्त्या इत्याचार्येण न प्रसज्यते। नैषः दोषः। आचार्येणात्र प्रसक्तमेव। कथमिति चेत् उच्यते। 'तस्याधिपति'रित्यत्र 'दुःखं दिनेशात्मज' इति संज्ञाध्याये कथितत्वात् मरणस्यात्यन्तदुःखत्वात् मरणकारकश्शनिरित्युक्तं भवति। गुलिकस्य शनेश्वरांशकसम्भवत्वात् गुलिकोऽपि मरणकारक इति विज्ञायते। 'क्रूरेऽष्टमे विधवता निधनेश्वरोऽंशे यस्य स्थितो वयसि तस्य समे प्रदिष्टा' इति निधनेश्वरयुक्तांशकेशस्य मरणकारकत्वम् उपदिष्टम्। तस्मात् सर्वेषां निधनकारकग्रहाणां तद्युक्तांशकेशानां च मरणकारकत्वमूह्यम्। एतदुक्तं भवति। जन्मकाले लग्नात् बलयुतश्चन्द्राद्वयोऽष्टमो राशिः' तत्र 'मृत्युः मृत्युग्रहेक्षणेन बलिभिस्तद्धातुकोपोद्भवः इत्युपदेशात् अष्टमं दृष्टग्रहेण वा; 'अष्टमे सूर्याद्यैः' इत्युपदेशात् अष्टमे स्थितग्रहेण वा - 'द्वाविंशतिमस्तु कारणं द्रेक्काण' इत्युपदेशात् तस्याधिपेन वा शनैश्चरेण वा गुलिकेन वा 'भपोऽपि वा' इत्युपदेशात् अष्टमेशेन वा एतैर्युक्तराश्यंशकेशैर्वा मरणञ्चिन्त्यमिति। एतेषां यो दुर्बलोऽनिष्टस्थानगतश्च भवति तस्य दशायामन्तर्दशायां तदुक्तव्याध्यादिहेतुर्मरणञ्चिन्त्यमिति। मरणकालो शनैश्चराद्यवस्थानं च एषां राशित्रिकोणेषु निरूपणीयम्। पूर्वं सद्योमरणाध्याये प्रोक्तयोगानां सम्भवे योगकर्तृग्रहदशायां च मरणञ्चिन्त्यम्।

इत्थं प्रायशो 'योग'शब्दार्थ उक्तः। अथ प्रश्नविषयेऽप्ययं श्लोकश्चिन्त्यः ममास्य कार्यप्राप्तिः कथमिति पृष्टे 'संज्ञाध्याये यस्य यद्द्रव्यमुक्तं' यस्य यद् द्रव्यं सहितं यद्वस्तु दैवज्ञायार्पितं वा उक्तं वचनं; यत् 'कर्माजीवेषु' यद्व्यापरः तंत्र दृष्टः, 'आजीवे उपदिष्टः' श्रूयमाणं 'भावस्थानालोकयोगोद्भवञ्च - 'भावो' पृच्छकस्वभावः चेष्टा च हर्षशोकादयश्च स्पर्शश्च चेष्टा 'स्थानं' स्थितिप्रदेशो वा, 'आलोकः' पृच्छकस्य दृष्टिः 'योगः' आश्रयसहायो वा एवमादि प्रश्नकाले यद्यत् जायते तत्तत् सर्वं तस्य पृच्छकस्य शुभाशुभनिरूपणदशायां योज्यमिति।



**छायां महाभूतकृताञ्च सर्वेऽभिव्यञ्जयन्ति स्वदशामवाप्य।**
**क्ष्वम्ब्वग्निवाय्वम्बरजान् गुणांश्च नासास्यदृक्त्वक्श्रवणानुमेयान्।। २१।।**

'छायां महाभूतकृतां' इति जातकानां प्रायिकमिति कथयति। पुरुषस्य शरीरादौ प्रत्यक्षमेव दृश्यते इति। स्वमहाभूतच्छायां स्वदशासु व्यञ्जयति ग्रहः महाभूतग्रहयोरपृथक् भावात्। तस्मात् शरीरे महाभूतच्छाया द्रष्टव्या।

तथाचार्यकृतसंहितायाम् -

'छाया शुभाशुभफलानि निवेदयन्ति लक्ष्या मनुष्यपशुपक्षिषु लक्षणज्ञैः।
तेजोगुणान् बहिरपि प्रविभासयन्ती दीपप्रभा स्फटिकरत्नघटस्थिते वा'।।

अथाप्यन्यत्र -

'स्निग्धद्विजत्वङ्नखरोमकेशच्छाया सुगन्धा च महीसमुत्था।
तुष्ट्यर्थलाभाभ्युदयान् करोति धर्मस्य चाहन्यहनि प्रवृत्तिम्।।
स्निग्धा सिताच्छहरिता नयनाभिरामा सौभाग्यमार्दवसुखाभ्युदयान् करोति।
सर्वार्थसिद्धिजननी जननी व चाप्या छाया फलं तनुभृतश्शुभमादधाति।।
चण्डाधृष्या पद्महेमाग्निवर्णा युक्ता तेजोविक्रमैः स प्रतापैः।
आग्नेयी तु प्राणिनां स्याज्जयाय क्षिप्रं सिद्धिं वाञ्छितार्थस्य धत्ते।।
मलिनपरुषकृष्णा पापगन्धानिलोत्था जनयति वधशोकव्याध्यनर्थार्थनाशान्।
स्फटिकसदृशरूपा भाग्ययुक्तात्युदारा निधिरिव गगनोत्था श्रेयसां स्वच्छवर्णाः'।।

न केवलं दशास्वेव महाभूतस्वभावो जायते। जन्मसमयेऽपि एकैकञ्च पृथक् पृथक् एकैकप्रकृतिः अन्वेति तेन एकैको जन्तुरुच्यते।

तथा च सारावल्याम् -

'शब्दार्थविन्न्यायपटुः प्रगल्भो विज्ञानयुक्तो विविधार्थभोगः।
चित्राङ्गसन्धिः कृशपाणिपादो व्योमप्रकृत्या पुरुषोऽतिदीर्घः।।
सत्वेन वायोः पुरुषः कृशाङ्गः क्षिप्रञ्च कोपस्य वशं प्रयाति।
कृत्यैकबुद्धिं भ्रमणे रतश्च दातासितो भूपतिरप्रधृष्यः।।

शूरः क्षुधार्तश्च खलोऽतितीक्ष्णः प्राज्ञः कृशो गौरतनुर्विरोधी।
विद्वान् सुमानी बहुभक्षणश्च वह्निस्वभावः पुरुषोऽतिकायः।।
लावण्यभावो जलजप्रकृत्या प्रियाभिभाषी द्रवभोजनश्च।
चापल्यरूपो बहुमित्रभक्षः क्षोणीपतिर्नातिचिरः प्रगल्भः।।
कर्पूरजात्युत्पलपुष्पगन्धो भुनक्ति भोगान् स्थिरलब्धसौख्यः।
सिंहाभ्रघोषः स्थिरचित्तवृत्तिर्महीस्वभावो भवति प्रजातः'।। इति।।

**शुभफलददशायां तादृगेवान्तरात्मा**
**बहु जनयति पुंसां सौख्यमर्थागमञ्च।**
**कथितफलविपाकैस्तर्कयेद्वर्तमानां**
**परिणमति फलोक्तिः स्वप्नचिन्तास्ववीर्यैः।। २२।।**

'शुभफलददशाया'मिति। दशासु बहुविधासु यया दशया भुज्यमानफलसंवादः तां गृह्णीयादिति द्योतयितुमयं श्लोकः। अन्यथा त्रिप्रकारदशानयनकर्मानर्थं भवति। ननु गणितानीतदशाफलभुक्तिफलयोः संवादेनैव दशा प्रमाणीकर्तव्या चेत् बालानान्दशानयनं न कर्तव्यम्। सत्यं द्वादशवर्षादधस्तनवयस्कस्य बालस्य केवलमरिष्टयोगेनायुर्नाशोपदेशात् यद्येवं दशायाः प्रामाण्यन्न भवति? कथं न दशाप्रमाणभूता एवं स्यात् आयुस्थितिर्जन्म-कालादारभ्य प्रथमे वर्षे केवलं सद्योरिष्टैरेवायुः खण्ड्यते। द्वादशवर्षात् पूर्वमरिष्टयोगैरायुः छिद्यते। आयुर्योगसापेक्षैः दशाभेदैः अत ऊर्ध्वं द्वात्रिंशद्वर्षात् पूर्वं योगारिष्टसंज्ञैररिष्ट-योगैर्दशासापेक्षैः सप्ततिवर्षात् पूर्वं मध्यमायुर्योगसापेक्षैर्दशाभेदैः। अत ऊर्ध्वं विंशत्यधिकशतवर्षात् पूर्वं केवलं दशायाः। अत ऊर्ध्वममितायुर्योगैः। सर्वत्र निर्याण-ग्रहस्थितिरन्वेष्टव्या। 'योगे स्थानं गतवति बलिनश्चन्द्रे स्वं वा तनुगृहमथवा' इत्युपदेशात्। भुक्तफलनिरूपणेनैव दशा प्रमाणीकर्तव्या। अपि च समकालजातयोः द्वयोः शरीरिणोः आयुः सम्पदापद्वैषम्यादपि दशाभेदश्चिन्तनीयः। अस्त्वेवमुपदेशे काचिदपि दशा न प्रमाणीकर्तव्या। मूर्ख,नैषादोषः। अन्येन केनैवं विज्ञायते? आचार्याभिप्रायो भवता न



विदितः। प्रथमं 'मययवनमणिन्थशक्तिपूर्वैः', इत्यादिग्रन्थेन बह्वाचार्यमतश्चिन्तयता आचार्येण 'सत्योपदेशप्रवरोऽत्रे'ति अंशकक्रमदशापि कथिता। पुनः क्वचिद्विषये जीवशर्मीयदशापि सङ्गच्छते इति सापि दर्शिता। तस्मात् त्रिषु दशापरिग्रहप्रकारेषु केनचित् प्रकारेण भुक्तफलसंवादो न भवति इति। 'न हि कथितफलविपाकैस्तर्कयेद्वर्तमानाम्' इत्युक्तम्। तस्मात् परीक्ष्य निर्णेतव्यमित्युक्तं भवति।

वक्ष्यति च नष्टजातकाध्याये -

'इति नष्टजातकमिदं बहुप्रकारं मया विनिर्दिष्टम्।
ग्राह्यमतस्सच्छिष्यैः परीक्ष्य यत्नाद्यथा भवति'।। इति।

गणितस्कन्धेऽपि परीक्षणेनैव दृग्ग्रहणग्रहायोगादीनां संवादो जायते। अन्यथा परस्परभिन्नानां पञ्चसिद्धान्तानां निर्माणं निरर्थकं भवति इति। 'शुभफलददशायां तादृगेवान्तरात्मा' इत्यत्र अन्तरात्मान्तःकरणं मनः तादृक् शुभं प्रसन्नं रागद्वेषादिकलुषितं न भवतीत्यर्थः।

तथा च यात्रायाम् -

'प्रष्टव्यो दैवविदा विस्रब्धमुपाह्वये नराधिपतिः।
रिपुविजयप्रणिधानं प्रति भवतः किं मनः कुरुते'।।
ब्रूयात् स चेन्मनः प्रोत्साहते हर्षयेत्ततश्चैवम्।
चित्तानुकूलता सिद्धिलक्षणं तत्र च श्लोकाः।।
'शुभाशुभानि सर्वाणि निमित्तानि स्युरेकतः।
एकतश्च मनश्शुद्धिः तद्विशुद्धिर्जयावहा' इत्यादि।। इति।।

तस्मात् सर्वेभ्यो लक्षणेभ्यो मनः प्रमाणीकर्तव्यम्। ततो मनः प्रसन्नञ्चेत् दशापि शुभफलदेति विज्ञातव्यम्। मनः 'पुंसां सौख्यमर्थागमनञ्च बहु जनयति' अनयानुगामिनो मनसः प्रवृत्त्या सर्वतस्सौख्यम्, अर्थागमेऽभिमतार्थाः सर्वतः सिद्ध्यन्तीत्यर्थः। 'अन्तराख्ये'ति पाठे शुभफलदशायां शुभफलदान्तर्दशा चेत् तयोरुभयोः संयोगात् बहुसौख्यं अर्थागमं च पुरुषाः लभन्ते इत्यर्थः। 'कथितफलविपाकैस्तर्कयेद्वर्तमानां' इत्यत्र कथितफलानामवश्यं भावित्वं सूचितम्। तदेव दृढीकर्तुं 'परिणमति फलोक्तिः स्वप्नचिन्तास्ववीर्यैः' इत्युक्तम्।

फलवचनं परिणमत्येव। दशाफलं पुरुषेणावश्यं भोक्तव्यमित्यर्थः। किन्तु अवीर्यैर्बलरहितैः ग्रहैः यत्फलमुक्तं तत् स्वप्नचिन्तासु परिणमति, पुरुषेण किमपि नाभुक्तं भवतीत्यर्थः। 'स्वोच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः शुभं सम्पूर्णपादोनदलपादाल्पनिष्फलं' इत्यत्र नीचार्कगयोः प्रायशो नैष्फल्यमुक्तम्। तदत्र 'स्वप्नचिन्तास्ववीर्यैः परिणमतीत्युक्तम्। ननु 'परिणमति फलोक्तिः स्वप्नचिन्तास्ववीर्यै'रिति शुभाशुभसामान्यं प्रत्युक्तम्। 'उच्चत्रिकोणस्वसुहृदि'त्यादिश्लोके सम्पूर्णपादोनदलपादाल्पनिष्फलम्' इति शुभमुक्तम्। तस्मात् शुभाशुभकथनयोरैकात्म्यं कथं स्यात्? उच्यते, एवं हि मन्यते 'कथितफलविपाकैः तर्कयेद् वर्तमानां' इति। अत्र 'उच्चत्रिकोणे'त्यादि श्लोके नैष्फल्यसंवादप्रसङ्गात् श्लोके अर्कादिग्रहस्य तु शुभफलप्रदस्य नैष्फल्ये वर्तमानदशातर्कणं कथितफलविपाकैरनुपपन्नं स्यात् इत्याशङ्कां परिहरन् 'परिणमति फलोक्तिः स्वप्नचिन्तास्वविर्यैः' इति कथयति। तस्मात् शुभफलं प्रत्येव नैवमुदितम्। 'दशासु शस्तासु शुभानि कुर्वन्त्यनिष्टसंज्ञास्वशुभानि चैवम्' इति पूर्वमेव उपदिष्टत्वात्। 'स्वप्नचिन्तासु' इति। स्वप्नाश्च बहुविधा भवन्ति। तथा च यात्रायाम् -

'आनूक आद्ये स्मृत आयुषोऽंशे शेषे त्रिभागे गतिजोपदिष्टः।
धातुप्रकोपग्रहपाकचिन्ता दृष्टाभिचारोद्भव गुह्यकोत्थः।।
गतैष्यजात्यन्तरसत्वसङ्गः स्वप्नेप्यनूके गतिजे च नित्यम्।
धातुप्रकोपादनिलात्मकस्य तुर्वादितुङ्गाम्बरलङ्घनानि।।
पित्तेऽधिके काञ्चनरत्नमालादिवाकराग्निप्रभृतीनि पश्येत्।
श्लेष्माधिकश्चेन्दुभशुभ्रपुष्पसरित्सरोजाम्बुविलङ्घनानि।।
जघन्यमध्यप्रथमे निशांशे प्रावृट्शरन्माधवसंज्ञिते च।
काले मरुत्पित्तकफप्रकोपात् साधारणं स्यात् खलु सन्निपाते।।
दशासु चोक्तग्रहपाकजातं चिन्तासु दृष्टञ्च यथा तथैव।
बीभत्ससत्वादिभवोऽभिचारो पित्तोद्भवो गुह्यरुजः प्रदिष्टः।।
अनूकचिन्ताग्रहदोषदृष्टान्यभीष्टकर्माणि च निष्फलानि।
द्युदृष्टपूर्वाः कथिताश्च तद्वदन्यत्र लोके कथिता विशेषाः।। इति।।



शास्त्रान्तरेऽप्युक्तम् -

'दृष्टः श्रुतोऽनुभूतश्च प्रार्थितः कल्पितस्तथा।
भाविजो दोषजश्चैवं स्वप्नस्सप्तविधः स्मृतः'।। इति।।

अत्र भाविजस्वप्नस्य विशेषोऽस्ति।

'प्रत्यक्षवत् भवति यत् स्फुरतीव चान्तः स्वप्नस्य तस्य नियमात् सदसत्फलाप्तिः।
स्वप्नात् शुभाशुभफलं कथितं नराणामुद्देशमात्रमिहताननुवर्णयामि'।।

ग्रहपाकजस्वप्नो न भाविफलसूचकः इत्यत्रापि सिद्धं भवति। प्रश्नादौ तु 'शुभफलददशायां तादृगेवान्तरात्मा' पृच्छकस्य 'भावस्थानालोकयोगे'षु शुभेषु दैवज्ञस्यान्तरात्मापि प्रसन्नश्चेत् 'बहुसौख्यम्' इष्टार्थागमश्च' भवति। 'कथितफलविपाकैस्तर्कयेद्वर्तमानां' पृच्छकेन यत् फलं कथितं पृष्टं तस्य विपाकैस्तदानीं दृष्टैः श्रुतैर्वा वर्तमानां दशामवस्थां तर्कयेत्। यथा जलप्रश्ने जलदर्शनश्रवणादिना वर्षादिभवतीत्युच्यते। एवं फलं तत् सर्वमेव निरूपणीयमिति। एवं 'स्वप्नचिन्तास्ववीर्यैः' फलोक्तिः परिणमति। स्वप्नस्य वीर्यैः चिन्तास्वविर्यैः च यत् यत् फलवचनं तत् परिणमति। स्वप्नस्य वीर्यलक्षणं 'प्रत्यक्षवद्भवति यत् स्फुरती'त्यादिनोक्तम्। तादृशस्य स्वप्नस्य फलमवश्यं भवति। कालभेदत्वात् कालश्चोच्यते।

वराहमिहिराचार्येणास्मदाचार्येण -

'आद्ये वर्षाद्वत्सरार्धाद्द्वितीये यामे पाको वर्षपादात्तृतीये।
मासात् पाकश्शर्वरी पश्चिमांशे सद्यः पाको गोविसर्गे च दृष्टे'।।

अत्र स्वप्नानां शुभाशुभत्वमन्यस्मात् शास्त्रान्तरादवगन्तव्यम्। 'चिन्तास्ववीर्यासु' पृच्छकस्य प्रश्नसौष्ठवं दैवज्ञसावधानत्वञ्च इति। अलमतिप्रसङ्गेन।

**एकग्रहस्य सदृशे फलयोर्विरोधे**
**नाशं वदेद्यदधिकं परिपच्यते तत्।**
**नान्यो ग्रहस्सदृशमन्यफलं हिनस्ति**
**स्वां स्वां दशामुपगताः स्वफलप्रदाः स्युः।। २३।।**

'एकग्रहस्य' इति। शुभाशुभयोस्सदृशे तयोः द्वयोः फलयोर्नाशं वदेत्। शुभाशुभयोः फलयोर्यदधिकं शुभमशुभं वा तत् परिपच्यते अनुभूयते। कारणबहुत्वाद्वा तस्य गौरवाद्वा आधिक्यम्। एतदुक्तं भवति। नैसर्गिकदशान्तर्दशाविदशाराशिफलभावफलयोगफल दृष्टिफलाष्टकवर्गफलहोरादिवर्गफलप्रत्यब्दमासद्युनिशाफलादिभेदैः शुभाशुभफलविपाकः। तेषु शुभाशुभफलेषु शुभाशुभयोः साम्ये तयोः फलयोरभावः यस्याधिक्यं तस्य पाकः। यथा पुरुषस्य जन्मकाले पुत्रस्थाने गुरुपुत्रप्राप्तिर्न दृष्टा चेत् तत् कथमिति सन्देहे तन्निर्णीयते। तथा विचारः। अनेकविधकारणान्तरेण 'मकरे नीचोऽल्पवित्तोऽसुखी' त्यादि वचनेन गुरोरिष्टफलदत्वं च यदा भवति तदा शुभाशुभफलयोर्विरोधः। पुनरष्टमाधिपतेरशुभदत्वमूह्यम्। 'तस्याधिपतिर्भपोऽपि वा निर्याणं स्वगुणैः प्रयच्छती'ति वचनात् तथोक्तम्।

'यद् भावस्थोऽष्टमपः तद् भावो नश्यते न सन्देह' इति। भावाधिपत्वात् भावपुष्टिः तस्याष्टमाधिपत्यात् भावहानिरित्युभयत्र दृश्यते तत्रापि फलयोर्विरोधः। 'यदधिकं परिपच्यते तदि'त्यस्योदाहरणं तेन तावत् मेषस्थस्य 'मूर्खोऽटनः कपटवान्' इत्यशुभत्वं तस्यैव लग्नगतश्चेत् 'अदृष्टार्थो रोगी'त्यादिनापि अशुभत्वं सूचितम्। 'परविभवपरिच्छदोपभोक्ता रवितनये बहुकार्यकृत् गणेशः' इत्यनेन शुभफलत्वञ्च यत्र सम्भवति तत्राशुभफलस्याधिक्यं तत् परिपच्यते। एवं बहुधा परिपाकाः शुभाशुभफलानि विभज्य निर्णेतव्यानि। बहुधा परिपाकाः श्रीपतिनाप्युपदिष्टाः।
तथा च तद्वाक्यम् -

'पाकं द्वादशधा वदन्ति यवना दिग्भेदभिन्नन्तथा
माणित्था खलु बादरायणमुनिस्तञ्चाष्टधा प्रोक्तवान्।
षड्भेदं खलु सिद्धसेनविबुधस्तद्देवलाद्याः पुन-
र्भेदैरब्धिमितैरुदारधिषणश्रीविष्णुगुप्तस्त्रिभिः।'
'पाकं द्विभेदं पुनराह सत्यः तत् शास्त्रदृष्ट्या कथयाम्यशेषम्'
तस्यार्थो नैसर्गिकेत्यादिना पूर्वमेव व्याख्यातः।

इति गोविन्दसोमयाजिकृतौ बृहज्जातकव्याख्यायां दशाध्याय्याख्यायाम् अष्ठमाध्यायः

# नवमाध्यायः
## अष्टकवर्गाध्यायः

स्वादर्कः प्रथमायबन्धुनिधनद्व्याज्ञातपोद्यूनगो
वक्रात् स्वादिव तद्वदेव रविजाच्छुक्रात् स्मरान्त्यारिषु।
जीवाद्धर्मसुतायशत्रुषु दशत्र्यायारिगश्शीतगो-
स्तेष्वेवान्त्यतपस्सुतेषु च बुधाल्लग्नात्सबन्ध्वन्त्यगः।। १।।

अथाष्टकवर्गाध्यायो लिख्यते। 'स्वादर्क' इति। अस्मिन् श्लोके प्रथमं रविकुजमन्दाः पापग्रहाः प्रोक्ताः, पश्चात् भृगुगुरुबुधचन्द्राः शुभग्रहाश्च। तेनायमर्थो गम्यते- पापग्रहाणां दुःखफलदत्वात् परिहाराय शुभक्रिया कर्तव्या। अष्टकवर्गेण चिन्त्यादृढकर्मफलस्यैव परिहार्यत्वमिति'। अर्कात् कुजात् मन्दाच्च 'प्रथमायबन्धुनिधनद्व्याज्ञातपोद्यूनगोर्कः' शुभः। 'तेष्वेवान्त्यतपस्सुतेष्वि'त्यत्र 'च'शब्दोक्तानि 'दशत्र्यायारिस्थानानि'। लग्नात् 'सबन्ध्वन्त्यगः' इत्यत्र सम्बन्धोऽपि 'दशत्र्यायादिषु' इत्यर्थः। एवमेकैकग्रहादुक्तस्थानेषु गतोर्कः शुभः इत्युक्तम्। अस्याष्टकवर्गफलनिरूपणस्य सुखावबोधाय भूमौ चतुरश्रं राशिचक्रमुत्पाद्य तस्मिन् राशिचक्रे पुरुषस्य जन्मकालेऽपि च ग्रहस्थित्यङ्कितान् राशीन् कृत्वा लग्नराशिञ्च कुर्यात्। ततोऽर्कादिग्रहस्थितस्थानेभ्यो लग्नराशेश्चारभ्य 'स्वादर्कप्रथमायबन्धु'रित्याद्युक्तेषु स्थानेषु बिन्दून् विधाय न्यसेत्। यत्र राशावष्टबिन्दवो दृष्टाः स राशिः कात्स्न्येन शुभः। तत्र चरन्नर्कश्शुभकृत्। यत्र चत्वारो बिन्दवः तत्र राशौ चरन्नर्को मध्यमः यत्र ततो न्यूना बिन्दवः तत्र चरन् क्रमेणाऽशुभकृत्।
तथा चोक्तं सारावल्याम्।

'सूर्यस्याष्टसु बिन्दुषु क्षितिपतेराप्ता विभूतिर्धनं
सप्तस्वद्भुतकान्तिसौख्यविभवः षट्सु प्रतापोन्नतिः।

पञ्चस्वर्थसमागमः सदसतोः साम्यं चतुष्के त्रिके-
त्वध्वश्रान्तिरघं द्विके गदभयं रूपेऽथ शून्ये मृतिः'।।

अर्कस्य पितृकारकत्वादस्याष्टवर्गेण पितृशुभाशुभाश्चिन्त्याः। पित्रादिकारकभूतानामर्कादीनां लग्नतुल्यत्वादर्कस्थितराशेर्नवमं पितृस्थानत्वेन निरूपणीयम्। तत्राष्टकवर्गे फलानि निक्षिप्य त्रिकोणैकाधिपत्यशोधनं कृत्वा सर्वं संपिण्ड्य तद्राशिफलसङ्ख्याभिर्निहत्य सप्तविंशत्या हृत्वा शेषं यन्नक्षत्रं दृश्यते तत् त्रिकोणगते मन्दे पितुः पितृसमस्य वा व्यसनं वाच्यम्। तत्राष्टकवर्गे यस्मिन् राशौ फलभूयस्त्वं स्वगृहे तस्मिन् राशौ देवस्थापनं देवाराधनञ्च समृद्धिकरं भवति। फलभूयस्त्वराशौ स्थिते राजदर्शनव्यवहारादिकं कार्यम्।

**लग्नात् षट्त्रिदशायगस्सधनधीधर्मेषु चाराच्छशी**
**स्वात्सारस्तादिषु साष्टसप्तसु रवेः षट्त्र्यायधीस्थो यमात्।**
**धीत्र्यायाष्टमकण्टकेषु च बुधाज्जीवाद्धनायाष्टगः**
**केन्द्रस्थश्च सितात्तु धर्मसुखधीत्र्यायास्पदानंगगः।। २।।**

उक्तप्रकारे चन्द्राष्टकवर्गान्निक्षिप्य तद्वच्चन्द्रचारस्य शुभाशुभत्वं निरूपणीयम्।
तथा चोक्तं सारावल्याम् -

'इन्दोर्भोगविभूतिकान्तिसुहृदो वस्त्रान्नगन्धोत्सवाः
सन्मन्त्रद्विजसंगमो धृतिमतिर्निर्दुःखसौख्यस्थितिः।
द्वेषो बन्धुजनैः प्रियार्थकलहस्तस्माद्विपद्दुस्तरा
नाशोद्वेगवधादयश्च नियतं प्रोक्तं फलानामिदम्'।। इति।।

अत्र फलभूयिष्ठराशिजां कन्यामुद्वहेत्। अपि च फलभूयिष्ठराशौ राजामात्यदासादियोगश्शुभकरः। फलभूयिष्ठराशिगे चन्द्रे शुभकार्याणि साधयेत्। फलभूयिष्ठराशौ स्वगृहात् वापीकूपतटाकादि जलनिर्माणञ्च कार्यम्। सस्यस्थानजलक्रिया च। फलाल्पराशिगे चन्द्रे मातृक्लेशादिमानसदुःखञ्च।



**वक्रस्तूपचयेष्विनात् सतनयेष्वाद्याधिकेषूदया-**
**च्चन्द्राद् द्विट्त्रिफलेषु केन्द्रनिधनप्राप्त्यर्थगः स्वाच्छुभः।**
**धर्मायाष्टमकेन्द्रगोर्कतनयाज्ज्ञात् षट्त्रिधीलाभगः**
**शुक्रात् षड्व्ययलाभमृत्युषु गुरोः कर्मान्त्यलाभारिषु।। ३।।**

'वक्रस्तूपचयेषु' इति। अनेन श्लोकेन मेषादिराशिषु अष्टकफलेषु निक्षिप्तेषु यस्मिन् राशौ फलाधिक्यं तत्र भौमसञ्चारश्शुभः। सङ्ख्यावशात् फलभेदोऽस्ति।
तथा चोक्तम् -

'भौमस्यार्थमहीसपत्नविजयात्साहोत्थतत्सम्पदो
राज्ञो वल्लभता प्रसिद्धगुणता साम्यं विपद्सम्पदोः।
भ्रातृस्त्रीविरहो प्रियोत्थकलहश्शस्त्राग्निपित्तज्वराः
स्फोटैर्दूषितदेहता जठररुक्मूर्धाक्षिरुङ्मृत्यवः'।।

यस्मिन् राशौ यस्यान्दिशि वा फलभूयस्त्वं तस्मिन् राशौ तद्दिग्गेहे चाग्निकर्म तद्दिशि, युद्धजयः। भौमस्य फलाधिके राशौ भौमसञ्चारो भ्रातृभूमिपराक्रमादिषु शुभः फलशून्यराशौ तेषामशुभः। यद् भावाधिपो भौमो यदा फलभूयिष्ठराशौ सञ्चरति तदा तद्भावपुष्टिकृत्। अन्यत्र राशौ तद्भावनाशकृत्। बहुना किम्। यस्य यस्य पदार्थस्य भौमः कारकः तस्य तस्य मृत्यूपद्रवचिन्तायां भौमस्य बलं अष्टकवर्गफलञ्च निरूपणीयम्। 'भौमस्यारिविमर्दभूपसहजक्षित्याविकाजैर्धनं' इत्यादि अनेन प्रोक्तानां पदार्थानां भौमः कारकः इत्यपि सूचितम्।

**द्व्यायाद्यायाष्टतपःसुखेषु भृगुजात्सत्र्यात्मजेष्विन्दुजः**
**साज्ञास्तेषु यमारयोर्व्ययरिपुप्राप्त्यष्टगो वाक्पतेः।**
**धर्मायारिसुतव्ययेषु सवितुः स्वात्साद्यकर्मत्रिगः**
**षट्स्वायाष्टसुखास्पदेषु हिमगोः साद्येषु लग्नाच्छुभः।। ४।।**

'द्व्याद्यायेष्टे'ति। अनेन श्लोकेन मेषादिराश्यष्टकवर्गफलेषु निक्षिप्तेषु यस्मिन् राशौ फलभूयस्त्वं, तस्मिन् राशौ बुधसञ्चारो विद्याग्रहणादि फलानि विवादजयश्च भवन्ति। यस्मिन् राशौ यद्दिशि वा फलभूयस्त्वं तस्मिन् राशौ तस्मिन् दिग्गेहे च विहारकर्म समीचीनं भवति। राशिचारे सङ्ख्यावशात् फलभेदोऽस्ति।

तथा चोक्तम् -

'ज्ञस्य क्ष्मापतिमान्यता द्रविणधीविज्ञानसौख्याप्तयः
सर्वोद्योगफलोदयो नवसुहृत्प्राप्तिर्निरुद्योगता।
चिन्ताव्याकुलता त्रिदोषजनिता रोगा बलाद् बन्धनम्
व्यापत् क्लेशपरम्परापरिभवः सर्वस्वहान्या मृतिः'।। इति।।

भौमवत् भावाधिपग्रहैस्सर्वैरपि भावोपद्रवपुष्टिश्चिन्त्या भवति।

**दिक्स्वाद्याष्टमदायबन्धुषु कुजात् स्वात् सत्रिकेष्वङ्गिराः**
**सूर्यात् सत्रितपरस्सु धीस्वनवदिग्लाभारिगो भार्गवात्।**
**जायायार्थनवात्मजेषु हिमगोर्मन्दात् त्रिषड्धीव्यये**
**दिग्धीषट्स्वसुखाय पूर्वनवगो ज्ञात् सस्मरश्चोदयात्।। ५।।**

'दिक्स्वाद्याष्टमदायबन्धुषु कुजात्' इति। पुत्रविषये चिन्त्यमेतत्। तदर्थं प्रथमं पुंग्रहाः उक्ताः। पुनः स्त्रीग्रहौ कथितौ। पुनर्नपुंसकग्रहौ प्रोक्तौ। पुनर्लग्नमुक्तम्। जीवस्य सुतस्थाने यानि फलानि शत्रुनीचराशिगतग्रहफलानि त्यक्त्वा शेषफलसमाः पुत्राः भवन्ति। लग्नात् पुत्रस्थाने पुत्राधिपस्थाने च बलसहितपुत्रकारकग्रहफलयोगे च फलाधिक्ये च पुत्राणां सुलभत्वं भवति। द्वादशराशिषु फलसङ्ख्याभेदात् फलभेदोऽस्ति।

तथा चोक्तम् -

'सूरेर्भूपतिपट्टबन्धविभवो नानार्थसौख्याप्तयो
वासोवाहनहेमलब्धिरहितध्वंसक्रियासिद्धयः।
लाभच्छेदविहीनता श्रवणरुक् पुंस्त्वप्रणाशादयो
भूभृत्कोपनमर्थबन्धुविहतिर्बुध्यर्थपुत्रक्षयः'।। इति।।



यद्दिशि यद्राशौ फलभूयस्त्वं तद्दिग्गतगेहे तद्राशौ निधिस्थापनं शुभं भवति। तद्दिक् प्रयाणात् अर्थागम इत्यादिबहुचिन्त्यम्।

**लग्नादासुतलाभरन्ध्रनवगः सान्त्यः शशाङ्कात्सितः**
**स्वात् साज्ञेषु सुखत्रिधीनवदशच्छिद्राप्तिगः सूर्यजात्।**
**रन्ध्रायव्ययगो रवेर्नवदशप्राप्त्यष्टधीस्थो गुरोः**
**ज्ञाद्धीत्र्यायनवारिगस्त्रिनवषड्बन्ध्वागमान्त्यः कुजात्।। ६।।**

'लग्नादासुते'ति। अनेन विधिना फलाधिकराशौ कलत्रसिद्धिः। तत्र भृगोः सञ्चारश्च कलत्रसिद्धिकृत्। फलसङ्ख्याभेदादत्रापि फलभेदोऽस्ति।

तथा चोक्तम् -

'शुक्रस्याखिलभोगवस्त्रवनितापुष्पान्नपानाप्तयो
भूषामौक्तिकपुष्टयः प्रियवधूलाभः सुहृत्संगमः।
माध्यस्थ्यं शुभपापयोर्जनपदग्रामादिविद्वेषिता
स्थानभ्रंशरुजः कफांबुविषभीस्सर्वापदां सङ्गमः'।। इति।

अत्रापि यद्दिशि यस्मिन् राशौ फलभूयस्त्वं तद्दिशि तद्गेहे तस्मिन् राशौ शयनमिति।

**मन्दः स्वात् त्रिसुताप्तिशत्रुषु शुभः गाज्ञान्त्यगो भूमिजात्**
**केन्द्रायाष्टधनेष्विनादुपचयेष्वाद्ये सुखे चोदयात्।**
**धर्मायारिदशान्त्यमृत्युषु बुधाच्चन्द्रात् त्रिषड्लाभगः**
**षष्ठान्त्यायगतः सितात् सुरगुरोः प्राप्त्यन्त्यधीशत्रुगः।। ७।।**

'मन्दस्स्वात्' इति। प्रथमं पापग्रहा उक्ताः मध्ये लग्नम्। पुनश्शुभग्रहाः क्रमाधिक्यवशात् प्रोक्ताः तेनाष्टानां क्रमेण शुभत्वं सूचितम्। शनिफलादङ्गारकफलं शुभं, ततो रविफलं, तस्मात् लग्नफलं, ततो बुधफलं ततश्चन्द्रफलं, ततश्शुक्रफलं, ततो

जीवफलम्। पापग्रहफलेभ्यः शुभग्रहफलं शुभतरमिति सूचितम्। शनेरष्टवर्गे फलशून्यराशौ शनेस्सञ्चारो मरणदुःखादिकृत्। तत्रापि सङ्ख्याभेदात् फलभेदो जायते।

तथा चोक्तम् -

'सौरेर्ग्रामपुरादिकाधिपतिता दासीखरोष्ट्राप्तयः
पूजा चोरनिषादसैन्यपतिभिर्धान्यार्थलाभागमः।
नार्तिर्नापि च सौख्यता सुखवधूभृत्यार्थविध्वंसनम्
बन्धोद्वेगरुजा परा मलिनता भाग्यादिसर्वक्षयः'।। इति।।

यद्दिशि यस्मिन् राशौ फलभूयस्त्वं तद्दिग्गेहे तस्मिन् राशौ नीवारपांसूत्करादिकर्म सुखम्। एवमष्टकवर्गः उक्तः। जन्मराशेरारभ्य ग्रहाणामिष्टानिष्टस्थानेषु चारोऽप्यत्रैवोह्यः तथा कथमिति चेदुच्यते। 'स्वादर्कः' इत्यादि सप्तश्लोकेषु चन्द्रात् यानि स्थानान्युक्तानि जन्मराशेरारभ्य तेषु स्थानेषु तत्तद् ग्रहचारश्शुभः। अनुक्तस्थानेषु अशुभः इति सिद्धं भवति। तथा 'स्वादर्कः' इत्यादिश्लोके 'दशत्र्यायारिगश्शीतगो'रित्युक्तत्वात् जन्मनि चन्द्राक्रान्तराशेः दशत्र्यायारिषु सञ्चरन् सविता शुभः। अन्यस्थानगतोऽशुभः इति। द्वितीयश्लोके 'स्वात्सास्तादिषु' 'षट्त्रिदशायेषु' चरन् चन्द्रः शुभः। अन्यस्थानचारी अशुभः इति सिद्धं भवति। तृतीयश्लोके 'चन्द्राद्द्विट्त्रिफलेष्वि'ति। एषु स्थानेषु चरन् कुजः शुभः। चतुर्थश्लोके 'षट्स्वायाष्टसुखास्पदेषु हिमगो'रिति बुधस्य शुभत्वम्। अन्यत्राशुभत्वञ्च। पञ्चमश्लोके 'जायायार्थनवात्मजेषु हिमगो'रिति जीवस्य शुभत्वमुक्तम्। अन्यत्राशुभत्वञ्च। षष्ठश्लोके 'सान्त्यश्शशाङ्कात् सितः' 'आसुतलाभरन्ध्रनवमान्त्येषु' शुक्रः शुभोऽन्येषु अशुभः इति। सप्तमश्लोके 'चन्द्रात् त्रिषड्लाभगः' इति शनेश्शुभस्थानमुक्तमन्यत्राशुभस्थानमिति। एवञ्चारफलमुक्तम्।

तथा च श्रीपतिः -

'सर्वे लाभगृहस्थितास्त्रिखरिपुष्वर्को कुजार्को त्रिषट्-
प्राप्तौ त्र्याद्यखमन्मथारिषु शशी खास्तारिवर्ज्यं भृगुः।
धीधर्मास्तधनेषु वाक्पतिररिस्वाष्टाम्बुखस्थो बुधः
श्रेष्ठो जन्मगृहाद्धि गोचरविधौ विद्धो न चेत् स्यात् ग्रहैः'।।

इत्येवं चारफलमूह्यम्। पुनरत्र चन्द्राष्टवर्गश्लोके 'जीवाद्धनायाष्टग' इति पादे



सत्यवाक्यविरोधादयुक्त इति केनचित् व्याख्यातमिति यत् तत् न समीचीनमित्यस्माकं प्रतिभाति। गुरोः धनभवाष्टकेन्द्रेषु इति स्वेनैवाचार्येण स्वल्पजातके उक्तत्वात्। शुक्राष्टवर्गे 'त्रिनवषड्बन्ध्वागमान्त्ये कुजा'दिति पाठेऽपि सत्यवाक्यविरोधादयुक्त इत्युक्तम्। तच्चापि न बहु मन्महे। आचार्येण स्वल्पजातके 'आयस्सुखापोक्लिमेषु' कुजात् इत्युक्तत्वादिति।

**इति निगदितमिष्टं नेष्टमन्यद्विशेषा-**
**दधिकफलविपाकं जन्मिनां तत्र दद्युः।**
**उपचयगृहमित्रस्वोच्चगाः पुष्टमिष्टं**
**त्वपचयगृहनीचारातिगैर्नेष्टसम्पत्।। ८।।**

'इति निगदित'मिति - एवं चारफलमूह्यम्। अथाष्टकवर्गफलमुच्यते 'इति निगदितमिष्टम्' इत्यादि विशेषादधिकफलविपाकमिति। ग्रहचारेण वा दशायां वा च इष्टफलमष्टकवर्गेण च इष्टश्चेत्तद्विशेषात् शुभमेव भवति। उक्तविपरीतत्वे विशेषादशुभमेव भवति। अथवा 'इति निगदितमिष्टं नेष्टमन्यत्' इत्युक्तयोरिष्टानिष्टयोर्विशेषादन्तरात् यदधिकं फलं तस्य विपाकं दद्युरिति। 'जन्मिना'मित्यत्र जन्मशब्दप्रसंगात् जन्मकालीनग्रहैरेतदष्टकवर्गफलं निरूप्यत इति सूचितं भवति। अत्र 'दद्यु'रिति राशौ यत्र भागे फलपातः तत्र चरन्तो ग्रहाः तत्फलविपाकं दद्युरिति। फलपातोऽपि प्रस्ताराद्विज्ञायते। प्रस्तारं विनापि अष्टकवर्गफलपातभावं विज्ञातुमुपायोऽस्ति। स उच्यते। राश्यष्टमांशोत्र पञ्चविंशत्युत्तरशतद्वयलिप्तात्मकः। तेष्वष्टमांशेषु शनैश्चरादीनां कक्ष्याक्रमसिद्धानां सप्तानां ग्रहाणां लग्नस्य फलपातो विज्ञायते। तस्मिन् अष्टमांशेऽष्टकवर्गफलं यस्य ग्रहस्य विद्यते तस्मिन् भागे सः ग्रहश्शुभः। अष्टकवर्गसिद्धफलं शनैश्चरस्य चेत् स ग्रहस्तस्मिन् राशौ प्रथमाष्टमांशे शुभः। गुरोश्चेत् द्वितीयाष्टमांशे भौमस्य चेत् तृतीयाष्टमांशे अर्कस्य चेत् चतुर्थाष्टमांशे शुक्रस्य चेत् पञ्चमाष्टमांशे बुधस्य चेत् षष्ठाष्टमांशे चन्द्रस्य चेत् सप्तमाष्टमांशे लग्नस्य चेदष्टमाष्टमांशे इति प्रस्तारफलविज्ञानोपायः। अथवा 'विशेषादधिकफल'मित्यत्र विशेषशब्देन शोधनमुच्यते। त्रिकोणशोधनमेकाधिपत्यशोधनञ्च शास्त्रान्तरादवगम्य तस्मिन्

कृते य'दधिकं' शिष्टं तस्य 'विपाकं' दद्युरिति। त्रिकोणैकाधिपत्यशोधनमत्रोच्यते।

भूचक्रे निहिताष्टवर्गजफले भेषु त्रिकोणेषु य -
न्न्यूनन्तेन समं त्यजेत् त्रिषु च यद्येकत्र न स्यात् फलम्।
गृह्यात्सर्वमतोऽन्ययोर्यदि फलान्येकत्र चेत् केवलं
जह्यात् तानि यदा समं त्रिषु तदा सर्वं विशोध्यन्ततः।। इति।।

त्रिकोणशोधनं कृत्वा पश्चादेकाधिपत्यशोधनं च कुर्यात्। तत्प्रकारमुच्यते -

'ग्रहस्यैकस्य विद्येते क्षेत्रे द्वे द्वे तयोर्द्वयोः।
यद्येकत्र फलं न्यूनं तत्तुल्यं शोध्यते द्वयोः।।
द्वयोस्तुल्यं यदि तदा सर्वं शोध्यं द्वयोरिति।
यद्येकत्र फलं नास्ति तदान्यत्र न शोध्यते।।
अस्ति ग्रहो यदैकत्र तदा तत्र न शोध्यते।
सग्रहादग्रहे न्यूने तत्तुल्यं शोध्यमग्रहात्।।
तुल्ये तु सर्वं संशोध्यमग्रहादुभये ग्रहे।
संयुक्तेन तु संशोध्यं कदाचन इतीर्यते'।।

इति एकाधिपत्यशोधनम्।

अथ द्वादशभावपुष्टिः यत्र यत्र फलाल्पत्वं तत्र तत्र भावाः कष्टा इति। केन्द्रपणपरापोक्लिमेषु फलाल्पताधिकाभ्यां आदिमध्यमान्तावस्थासु शुभाशुभत्वं चिन्त्यम्। व्ययभावादायभावे फलाधिके सति धनागमो भवति। यत्राष्टाविंशति फलानि तस्य भावस्य मध्यमत्वम्। यत्र तदूनानि तस्याधमत्वम्। यत्र तदधिकानि तस्य भावस्योत्तमत्वम्। इत्याद्यष्टकवर्गविधानेन बहुफलं निरूपणीयम्।

तदत्रोच्यते -

'विशेषादधिकफलविपाकं जन्मिनां तत्र दद्युः'। इति।

'उपचयगृहमित्रे'त्यादिना तु ग्रहबलाबलं शुभाशुभचारमष्टकवर्गफलञ्च निरूप्य फलविशेषाश्चिन्त्याः इत्युच्यते।'उपचयगृह' इत्यादि श्लोकोत्तरार्धस्यार्थो द्विप्रकारो व्याख्यायते। ग्रहाणां जन्मकाले स्थितिवशात् चारवशाच्च। तत्र प्रथमं जन्मकाले ग्रहाणां स्थितिवशाद्योऽर्थो



वाच्यस्सोऽत्रोच्यते। 'जन्मनि' चन्द्रस्थितराशेर्लग्नाच्च, या'न्युपचय' स्थानानि त्रिषड्दशैकादशानि तेषु गतैः 'मित्र'शब्देन मित्रग्रहाण्युच्यन्ते, 'स्व'शब्देन स्वराशिमूलत्रिकोणराशिरुच्यते, 'उच्च'शब्देन उच्चराशिः, तेषु गतैः ग्रहैः यदिष्टफलन्दीयते तत्पुष्टं भवति, सम्पूर्णं भवतीत्यर्थः।

'अपचयगृहनीचारातिगैर्नेष्टसम्पत्' इत्यत्र 'अपचयगृहनीचारातिगैः' दत्तस्य इष्टफलस्य न सम्पत् अथवा 'अपचयगृहनीचारातिगै'र्दत्तं नेष्टं अनिष्टं यत्तस्य सम्पत् न भवति। अथवा 'उपचयगृहमित्रस्वोच्चगै'रित्यादि श्लोकोत्तरार्धगताभ्यां इष्टनेष्टशब्दाभ्यां पूर्वार्धगते'ष्टनेष्ट'शब्दावुच्येते। एतदुक्तं भवति। अष्टकवर्गफलाधिक्येन यदिष्टं फलं ग्रहाः कुर्वन्ति ते 'उपचयगृहमित्रस्वोच्चगा'श्चेत् पुष्टं कुर्वन्ति। अष्टकवर्गफलाल्पतया नेष्टं कुर्वन्ति। अपचयगृहनीचारातिगाश्चेत् तस्य नेष्टस्य सम्पत् भवति प्राचुर्यं भवतीत्यर्थः। अस्मिन् पक्षद्वये पूर्वोक्तं समीचीनं, शास्त्रान्तरसंवादाच्च।

तथा च शास्त्रान्तरे -

'लग्नादुपचयसंस्थश्चन्द्राद्वा स्वगृहतुङ्गमूलस्थः।
मित्रक्षेत्रगतो वा फलमतिशयितं ग्रहो दद्यात्।।
अपचयराशौ नीचे शत्रुक्षेत्रे च जन्मकाले स्यात्।
यस्तु स दद्यात् पापं फलमतिशयितं ग्रहो यथाकालम्'।। इति।।

अथ चारवशान्निरूपणीयोऽर्थो व्याख्यायते। 'उपचयगृहमित्रस्वोच्चगै'रित्यत्र 'उपचय' शब्देन ग्रहचारे जन्मराशेरारभ्य यस्मिन् राशौ ग्रहे स्थिते 'उपचयो'वृद्धिर्भवति सा राशिरुच्यते। तत्र ग्रहस्थितो ग्रहस्वमित्रक्षेत्रे त्रिकोणोच्चगश्चेत् स्वं दीयमानमिष्टफलं पुष्टं करोति। अन्यथा अनिष्टं फलं पुष्टं करोति। अथवात्रापि पूर्ववदष्टकवर्गफलैरिष्टनेष्टे निरूप्येते। एतदुक्तं भवति। अष्टकवर्गेण चारवशाच्च मित्रक्षेत्रोच्चस्थित्या च इष्टफलं ग्रहाणां पुष्टं भवतीति। अष्टकवर्गचाराभ्यां दशायाः प्राधान्यं भवति। दृढकर्मफलदातृत्वात् दशानिरूपणेऽपि दशादातृग्रहबलाबलं निरूपणीयम्। बलाबलनिरूपणेऽपि स्थानबलाबलं प्राधान्येन निरूपणीयम्।

तदनेनाचार्येणैव स्वल्पजातके उक्तम् -

'मित्रोच्चस्वगृहांशोपगतानां शोभना दशाः सर्वाः।
स्वोच्चाभिलाषिणामपि न तु कथितविपर्ययस्थानाम्'।। इति।।

अष्टकवर्गफलबाहुल्येऽपि फलदातृग्रहाणां दौर्बल्ये अष्टकवर्गफलानां निर्जीवत्वमवगन्तव्यम्। अन्यथा सजीवत्वम्। तस्मात् बलाबलवशादेव शुभाशुभं कल्पनीयम्।

तथा च जातकसंग्रहे -

'दिक्स्थानकालचेष्टाबलयुक्तो नास्तगो न रिपुयुक्तः।
न पराजितश्च युद्धे शुभगो यस्तस्य शोभना हि दशा।।
उक्तविपरीतसंस्थानां न शुभास्स्युश्चेति कीर्तितं पूर्वैः।
नीचास्तगेऽरिराशौ रन्ध्रे व्ययभेऽथ ये बलैर्हीनः।।
तेषां दशासु मतिमान् सम्पत्तिर्निर्दिशेद्यथायोग्यम्'। इति।

इति गोविन्दसोमयाजिकृतौ बृहज्जातकव्याख्यायां दशाध्याय्याख्यायां नवमाध्यायः

# दशमाध्यायः

## कर्माजीवाध्यायः

**अर्थाप्तिः पितृजननीसपत्नमित्र-
भ्रातृस्त्रीभृतकजनाद्दिवाकराद्यैः।
होरेन्द्वोर्दशमगतैर्विकल्पनीया
भेन्द्वर्कास्पदपतिगांशनाथवृत्त्या।। १।।**

अथ कर्माजीवाध्याय उच्यते 'अर्थाप्ति'रिति। दिवाकरे दशमगते पितृपक्षात्, चन्द्रे मातृपक्षात्, कुजे सपत्नपक्षात्, बुधे मित्रपक्षात्, गुरौ भ्रातृपक्षात्, शुक्रे भार्यापक्षात्, शनौ भृत्यपक्षात्, अर्थाप्तिरित्यन्वयः। 'स्त्री'शब्देन भार्या विवक्षिता। भार्यावशात् गुणदोषाः भवन्ति। पुरुषस्य भार्यापरिग्रहणवशात् गुणदोषाः भवन्ति। 'अर्धं भार्या शरीरस्य' इत्याद्युक्तत्वात्। भार्याजन्मकालवशात् पुरुषस्य गुणदोषाश्चिन्त्याः। तदर्थं स्त्रीजातकोक्तिः 'यद्यत् फलं नरभवे क्षममङ्गनानां' इति 'क्षमं' योग्यं स्त्रीणां वाच्यम्।

तथा च स्वल्पजातके -

'पुंजन्मफलं यद्यत् घटते न स्त्रीषु तत्पतिषु तत्तासाम्।
वक्तव्यं राज्याद्यं वृषणविनाशनादि वा पापम्'।। इति।।

'अक्षमं पतिषु वदेत्' इत्युक्तस्यायमर्थः। 'तासां तु' शब्दोऽत्र विशेषवाची। निधनेन पतिमरणं, लग्नचन्द्राभ्यां शरीरं, सप्तमेन सौभाग्यं पतिरपि च चिन्त्यम् इति।

तथा चोक्तम् -

'वैधव्यं निधनगृहे पतिसौभाग्यं सुखञ्च जामित्रे।
सौन्दर्यं लग्नगृहे विचिन्तयेत् पुत्रसम्पदं नवमे।।

एषु स्थानेषु गताः सौम्याः शुभदाः बलान्विताः प्रोक्ताः।
क्रूरास्तु नेष्टफलदा भवनेशविवर्जितास्सदा चिन्त्याः'।। इति।।

युग्मेषु लग्नशशिनोः' इत्यत्र युग्मराश्यंशयोरिति ग्राह्यं 'ओजस्थयोस्तु' ओजस्थयोरित्यत्रापि तद्वत्। 'भवति गृहेस्तमये स्थितेंऽशके वा' इत्युत्तरत्र वक्ष्यति। तथा चोक्तम् -

'पुरुषर्क्षे पुरुषांशे लग्नेन्द्वोः पापयुक्तयोर्जाता।
पुरुषाकृतिशीलयुता भर्तुरयोग्यासमञ्जसा कन्या।।
समराशौ समभागे लग्नेन्द्वोः स्त्रीगुणान्विता कन्या।
सौम्ययुतालोकितयोः सुभगा साध्वी सुविख्याता'।।इति।।

'तु'शब्देनाशुभत्वं सूचितम्। 'कन्यैव दुष्टा' इति। कन्याशब्देन प्रजातित्वं उक्तम्। 'दुष्टा' गुणहीना; 'व्रजतीह दास्यं' बहुजनविधेया दुश्शीला, प्रेष्या च। 'साध्वी' पतिव्रता, पुत्रपती पत्युदारा च, 'समाया' मायासहिता, मलिनाचाराल्पसुता च, 'कुचरित्रयुक्ता' जारप्रिया। 'भूम्यात्मजर्क्षे' मेषवृश्चिकयोरित्यर्थः। 'वक्रार्किजीवेन्दुजभार्गवाणां' त्रिंशांशकेषु क्रमात् एतानि फलान्युक्तानि। तत्र वक्रादिक्रमोक्त्या वृश्चिकराशौ व्युत्क्रमेण एतानि फलानि वक्तव्यानि इति सिद्धं भवति।

शास्त्रान्तरे -

'भौमर्क्षे भौमांशे कन्या मृतसूतिका गुणैर्हीना।
मन्दांशे सा प्रेष्या दुश्शीला बहुविधा वनिता।।
पुत्रवती जीवांशे बहुव्ययार्ता पतिप्रिया कन्या।
सौम्यांशे मायावी मलिनाचाराल्पसुता स्यात्।।
कन्याजननी कन्या शुक्रांशे जारभोगसन्तुष्टा'। इति।

'दुष्टा पुनर्भूः' इति। दुष्टा विग्रहवशात् पतिद्वेष्या। 'पुनर्भूः' द्विरुढा मृतप्रजा रोगयुक्ता च। 'सुगुणा' रूपेण भर्तृपुत्रैश्च सुगुणा। 'कलाज्ञा' काव्यकलागेयादितत्परा। तस्मात् कुचरित्रा च। 'ख्यातिगुणैः' भोगवती जगत्प्रसिद्धा च। 'स्यात् कापटी'त्यादि फलम्। 'बौधे' बुधराशौ 'कापटी' स्वच्छन्दा नष्टप्रजा। 'क्लीबसमा' पतिहीना दरिद्रा च। 'सती' पतिव्रता च, 'च'शब्देनाल्पा रतिः। 'गुणाढ्या' शिल्पादिकुशला। 'प्रविकीर्णकामा' निष्फलकामा वन्ध्येत्यर्थः। मृतप्रजा वा स्त्रीषु दुष्टरता इति।



तथा चोक्तं अन्यत्र -

'सितभवने भौमांशे दुष्टा कलहप्रिया पतिद्वेष्या।
मन्दांशे च पुनर्भूर्मृतप्रजा रोगसंयुता नित्यम्।।
रुपान्विता गुणाढ्या जीवांशे भर्तृपुत्रसम्पन्ना।
कुचरित्रा सौम्यांशे काव्यकलागेयवाद्यसन्तुष्टा।।
शुक्रांशे भोगवती विदग्धदयिता जगत्प्रिया ख्याता।
बुधभवने भौमांशे स्वच्छन्दा कामिनी नष्टसुता।।
मन्दांशे क्लीबसमा मृतप्रजा वान्यभर्तृयुता।
साध्वी पतिप्रिया जीवांशे क्षेत्रगते तुङ्गगे जीवे।।
सौम्यांशे च कुलाढ्या पशुधनभोगान्विता च शुक्रांशे।
शशिभवने भौमांशे स्वच्छन्दा कामिनी विनष्टसुता।।
मन्दांशे पतिहीना कृच्छ्रान्नेन जीविता नित्यम्।
अल्पसुता क्षीणायुर्जीवांशे शिल्पिनी बुधस्यांशे।।
वन्ध्या मृतप्रजा वा शुक्रांशे स्त्रीषु दुष्टतमा'।

'स्वच्छन्दा पतिघातिनी'ति। 'स्वच्छन्दा' स्वैरचारिणी, 'पतिघातिनी' पतिघ्नी, 'बहुगुणा' पुत्रादिगुणवती, 'शिल्पिनी' निपुणा, 'असाध्वी' दुष्टा, जाररता, असती च असन्तती च। 'अर्कभे' 'न्राचारा' वाचाला बहुभाषिणी विदेशरता परपुरुषगामिनी च। 'कुलटा' कृशा दरिद्रा कुलहीना च, 'नृपवधूः' राजभार्या, 'पुंश्चेष्टिता' कार्यपरा, पुरुषाकृतिशीलपरा पुरुषशीलयुक्ता, 'अगम्यगा' अगम्यपुरुषगामिनी, अल्पसुता, रागवती च। 'जैवे नैकगुणा' इत्यादि। 'नैकगुणा' पत्यनुसारिणी, पुत्रगुणवती, शीलवती, 'अल्परतिः' अल्पसुखा, कापटिका, कन्याजननी, स्वतन्त्रनिरता च, 'अतिगुणा' भर्तृसम्पदादिगुणसम्पन्ना, 'विज्ञानयुक्ता' धर्माचारा, शिल्पकुशला, शास्त्रार्थज्ञाता; 'सती' पतिव्रता, पुत्रवती च। 'दासी' बहुजनविधेया, पुत्रहीना च; 'नीचरता' नीचे कर्मणि रता- अथवा 'नीचरता' गर्हणीयजनरता, दुर्भगेत्यर्थः, 'पतिरता' पत्युरिष्टा, सुभगा; 'दुष्टा' शुभभग्नधर्मा, कुलटा;

कुलघ्नी च; 'अप्रजा' तु वन्ध्या, चारित्रलोपना। 'च' शब्देन पूर्वोक्ता 'दुष्टा' च इत्यर्थः। 'अंशकैः' त्रिंशांशकैरिति।

'शशिलग्ने'ति। शशिलग्नयोः बलयुक्तेन 'युक्तैः त्रिंशांशकै इदं' फलं विचिन्तयेत्। अथवा तयोः 'योगत्रिंशाशकैः' वा, 'बलविकल्पेन' तयोः 'शशिलग्नयोः' 'उक्तं' फलं 'विचिन्तयेत्'। बलाबलविकल्पेन त्रिंशांशकाधिपतेः बलवशादुक्तफलप्राचुर्याल्पत्वं फलमूह्यमित्यर्थः इति। 'दृक्संस्थौ' इत्यादि योगद्वयम्। 'दृक्संस्थौ' परस्परदृष्टौ यदि 'स्त्रीभिर्नराकृतिस्थिताभिः स्त्रीप्रदीप्तं मदनविषानलं संशान्तिर्नयति' इत्येको योग इति केचित्। शौक्रे राशौ यदि कुम्भांश उदेति तदा द्वितीयः। अथवा परस्परांशगतावसितसितौ परस्परदृष्टौ शौक्रे राशावुदयति कुम्भांशकश्च भवति यदि स्त्रीभिः स्त्री मदनविषानलं शान्तिं नयति इत्येको योग इति केचित्।

तथा च सारावल्याम् -

'शुक्रासितौ यदि परस्परभागसंस्थौ शौक्रे च दृष्टिपथगावुदये घटांशे।

स्त्रीणामतीव मदनाग्निगरं प्रवृत्तम् स्त्रीभिश्शमञ्च पुरुषाकृतिभिर्लभन्ते'।। इति।

'शून्ये कापुरुष' इत्यादिश्लोके तु 'चरगृहे नित्यं प्रवासान्वित' इत्यत्र स्थिरगृहे स्वगृहवासीति चोह्यं भवति। 'क्लीबोऽस्ते बुधमन्दयो' इत्यत्र योगवत् स्थितिरप्यपेक्षिता। 'आग्नेयै'रिति 'आग्नेयै' इत्यादिश्लोके क्रूराणां सप्तमे प्रत्येकं फलमुक्त्वा इदानीं क्रूरस्य फलोक्तिस्सविशेषा विहिता। हीनबलत्वाद्विशेषः सौम्येक्षितत्वाच्च।

तथा चोक्तम् -

'बलहीनेऽस्तगे पापे सौम्यग्रहनिरीक्षिते भर्त्रा विसृज्यते नारी' इति।

'सौरारर्क्षे' इति। पूर्वार्धं स्पष्टम्। 'कौजेऽस्तांशे' लग्ने यतिमांशे उदयति सप्तमे ततिमांशोऽत्र 'अस्तांश' शब्देनोच्यते। 'भवति गृहेस्तमये स्थितेंशके वा' इति वक्ष्यमाणविधिना एतत् सिद्ध्यति। तयोर्बलवशात् फलनिर्देशः 'सौरिणा' इत्यत्र 'सौरिणा दृष्टे अस्तांशे' इत्यन्वयः। श्लोकपूर्वार्धे 'पापदृष्टे' इत्यत्र पापैः दृष्टेति समासविवरणे कृते पृथक् स्थितो 'दृष्ट'शब्दः 'सौरिणे'त्यध्याहार्यः।



तथा च सारावल्याम् -

'द्यूने कुजनवांशे शनिना दृष्टे चापि रोगयोनिस्त्री' इति।

'वृद्धो मूर्खः' इत्यादिश्लोकद्वयं स्पष्टार्थम्। 'ईर्ष्यान्विता' इत्यादिश्लोकार्थः स्पष्टः 'क्रूरे'त्यादिश्लोके तु 'निधनेश्वरोंऽशे यस्य स्थित' इत्यनेन भर्तुरायुर्निरूपणे निधनेश्वरश्चापि चिन्त्यः इत्युक्तं भवति। 'क्रूरेऽष्टमे विधवता' - 'धवो' भर्ता। विगतधवता भर्तृमरणमित्यर्थः। अर्थात् सौम्येष्टमे स्वमरणमिति सिद्धं भवति। स्त्रियो जन्मनि क्रूरेऽष्टमगते सति स्वमरणात् पूर्वं भर्तृमरणं भवति। सौम्येऽष्टमगते सति भर्तृमरणात् पूर्वं भार्यामरणं भवति।

तथा च सारावल्यामुक्तम् -

'पापेऽष्टमे विधवता निधनाधिपतिर्नवांशके यस्य।

तस्य दशायां मरणं वाच्यं तस्याः स्वयं शुभैर्द्वितीयस्थैः।।

'तत्स्थै'रिति वा पाठ इति।

कदा मरणमित्यत आह 'निधनेश्वरोंऽशे यस्य स्थितो वयसि तस्य समे प्रदिष्टा' इति। निधनेश्वरो यस्य नवांशे स्थितः तस्य समे वयसि विधवता प्रदिष्टा। 'समे वयसि' इत्यनेन तस्य निसर्गदशाकाल इति कैश्चिद्व्याख्यायते। परे तु तस्य दशाकाले अन्तर्दशाकाले वेत्युच्यन्ते। तथा च सारावल्यामुक्तस्यार्थः 'तस्य दशायां मरणं वाच्यम्'।

अत्राचार्येण भावाध्याये -

'समुचयविपत्ती सौम्यपापेषु सत्यः कथयति विपरीतं रिःफषष्ठाष्टमेषु'।। इति।।

अनेन अष्टमस्थस्य पापस्य मरणप्रदत्वे निरूप्यमाणे 'फलमधिकमिदं यदत्र भावाद् भवनभनाथगुणैः विचिन्तनीयम्' इति। अनेन अष्टमभवनस्य बलाबलं तन्नाथस्य बलाबलञ्च निरूपणीयं भवति। अष्टमगतस्य पापस्य बलाबलञ्च निरूपणीयम्।

एतद् भावाध्यायेऽप्युपदिष्टम् -

'सुहृदरिपरकीयस्वर्क्षतुङ्गस्थितानां

फलमनुपरिचिन्त्यं लग्नदेहादिभावैः'। इति।

'उच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहास्तगैः

शुभं सम्पूर्णपादोनदलपादाल्पनिष्फलम्'।। इति।।

अनेनाष्टमगस्य क्रूरस्य स्वोच्चस्वक्षेत्रादिगतत्वे तेन दीयमानस्याशुभफलस्याल्पत्वमवधार्यम्।
अपि च -

'लग्नात् पुत्रकलत्रभे शुभपतिप्राप्तेऽथवा लोकिते।

चन्द्राद्वा यदि सम्पदस्ति हि तयोर्ज्ञेयोऽन्यथाऽसम्भवः'।।

इत्यनेन पुत्रकलत्रसम्पन्निरूपणविधानेन सर्वभावनिरूपणप्रकारः उक्तः।
तथाचार्यपुत्रेणोक्तम् -

'यो यो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात् तस्य तस्याभिवृद्धिः।

पापैरेवं तस्य भावस्य हानिर्निर्देष्टव्या प्रश्नतो जन्मतो वा'।। इति।।

तस्मादष्टमस्थः क्रूरो अष्टमाधिपश्चेत् वैधव्यकृन्नेति सिद्धं भवति। 'क्रूरेऽष्टमे विधवता' इत्युक्ता विधवता नियता किमित्यत आह 'सत्स्वर्थगेषु मरणं स्वयमेव तस्याः' इति। सत्सु शुभग्रहेषु धनगतेषु क्रूरेऽष्टमे सति तस्याः मरणम्। अष्टमगतस्य शुभदृष्टत्वात् स्वमरणादपि गरीयो भर्तृमरणं न भवति।
अथवा नष्टजातकाध्याये -

'एवं कलत्रसहजात्मजशत्रुभेभ्यः प्रष्टुर्वदेदुदयराशिवशेन तेषाम्'।

इत्यनेन यद् भावो निरूपणीयस्तद् भावं लग्नं कृत्वा तद् भावस्य धनादिभावास्सर्वे चिन्त्या इत्युक्तं भवति। तस्मात् 'सुभगतास्तमये पतिश्च' इति विहितस्य भर्तृस्थानभूतस्य सप्तमभावस्य अष्टमे लग्नाद्धनस्थाने स्थितेषु शुभग्रहेषु भर्तुरायुरस्तीति चिन्त्यम्। भर्तुरायुषि सति क्रूरेऽष्टमे सति तस्य फलं स्वमरणमिति। 'सत्स्वर्थगेषु मरणं स्वयमेव तस्या' इत्यनेनोक्तं भवति। तस्मात् भर्तृजन्मग्रहराशिवशात् तस्यायुषि दीर्घे सति स्त्रीजन्मनि 'क्रूरेऽष्टमे' तस्याः स्वयमेव मरणं वक्तव्यमित्यादि विचारणीयमिति। 'कन्यालिगोहरिषु चाल्पसुतत्वं' इत्यनेनाल्पसुतराशयो विहिताः। 'कन्यालिगोहरयो'ल्पसुतराशयः। तेषां पुत्रस्थानमपि कष्टमिति 'च'कारात् सूचितम्।
तदपि सारावल्यामुक्तम् -

'कन्यालिवृषभसिंहे शिशिरमयूखेऽल्पपुत्रता तस्याः।

पुत्रभवने शुभयुते निरीक्षिते वा तथैव स्यात्'।। इति।।

स्त्रीणां पुत्रचिन्ता तु 'यद्यत् फलं नरभवे क्षममङ्गनानां तत्तद्वदेत्' इत्यनेन



पूर्वोक्तप्रकारेण निरूपयितव्या इति सिद्धं भवति। 'सौरे मध्यबले बलेन रहितैः' इत्यादि श्लोकार्थः स्पष्टः। 'पापेऽस्ते'त्यादि श्लोके 'उद्वाहे वरणविधौ' इत्यत्र कन्यावरणं, 'प्रदानं' कन्याप्रदान् 'चिन्ता'प्रश्नः, एतत् स्त्रीजातकोक्तं सर्वं विधेयं इत्यर्थः। अलमतिप्रसङ्गेन प्रकृतमनुसरामः। 'भेन्द्वर्कास्पदपतिगांशनाथवृत्त्या' इति 'उदयरविशशाङ्कप्राणिकेन्द्रादि' इति पूर्वमुक्तम्। इदानीं 'भेन्द्वर्कास्पदपतिगांशनाथवृत्त्या' इत्यत्रापि रविवशात् फलं चिन्त्यमित्युक्तम्। 'भेन्द्वर्कास्पदराशिवृत्त्या' तत्र गतग्रहवृत्त्या, तदधिपस्वभावादिना, वृत्तिर्निरूपयितव्या।
तथा च सारावल्याम् -

'होरेन्द्वोर्बलयुक्ताद्यो दशमस्तत् स्वभावजं कर्म।

तत्स्थाधिपपरिवृध्या वृद्धिर्ज्ञेयान्यथा हानिः।।

जाङ्गलमथवानूपं तथोभयं वा गृहं निरीक्षेत।

ग्राम्यमथारण्यं वा सौम्यर्क्षं पापभवनं वा।।

द्विपदचतुष्पदरूपं सरीसृपं वा तथोभयं चैव।

यद्रूपं तद्भवनं यादृशकं तत्स्वरूपं वा।।

प्रवदेत्तत् समदेशे कर्मप्राप्तिं नरस्य तत्सदृशीम्।

तस्मात् दशमं भवनं प्रसवे बुध्येत यत्नेन'।। इति।

तत्रापि बलवशात् फलनिर्देशः। अधिपतिः स्वोच्चगतश्चेत् उत्कृष्टवृत्त्या, नीचगतश्चेत् नीचवृत्त्या। द्रव्याण्यपि तथाविधानि उच्चराशिगतश्चेदयत्नेन सिद्ध्यन्ति, नीचराशिगतश्चेद्यत्नेन। दशमराशौ बलवति तद्देशे वृत्तिः। अधिपयुते राशौ बलवति तद्देशे वृत्तिः। दशमाधिपयुक्तांशनाथे बलवति अंशकसमदेशे। लग्नचन्द्रयोः दशमगतैर्दिवाकराद्यैः राजादितोऽर्थप्राप्तिश्चिन्त्या। 'विप्रादितो' वर्णाश्चिन्त्याः। 'प्रथितश्चतुरोटन' इत्यादि राशिशीलं योज्यम्। तत्र राश्यंशयोः बलवतो दशमाधिपयुक्तस्य फलं चिन्त्यम्। दिवाकरादिषु दशमर्क्षस्थितेषु तदुक्तजनात् धनसिद्धिः तदभावे 'भेन्द्वर्कास्पदपति' वृत्त्या इति केचित्।

तथा चोक्तम् -

'दशमे वा ग्रहरहिते चन्द्राद् भानोस्तथा तयोर्बलिनः।

तदधीश्वरांशनाथस्वभाववृत्योपजीवनं कुरुते'।।

**अर्कांशे तृणकनकोर्णभेषजाद्यै-**

**श्चन्द्रांशे कृषिजलजाङ्गनाश्रयाच्च।**

**धात्वग्निप्रहरणसाहसैः कुजांशे**

**सौम्यांशे लिपिगणितादिकाव्यशिल्पैः।। २।।**

'अर्कांशे' इति। 'अर्कांशे तृणकनकोर्णभेषजाद्यैः' इति। अत्र 'आदि' शब्देन फलवृक्षधातुविक्रयशिल्पद्यूतराजसेवादयोऽपि गृह्यन्ते। तथा चोक्तम् -

'अर्कांशे फलवृक्षैर्भैषज्यैर्धातुविक्रयैः शिल्पैः।

द्युतानृतशाठ्यकरैर्भूपैर्वा वित्तमाप्नुयात्सततम्'।। इति।।

'चन्द्रांशे कृषिजलजाङ्गनाश्रयाच्च' इति 'च'शब्देन मणिगोमहिषशर्करादयोऽपि गृह्यन्ते। तथा चोक्तं शास्त्रान्तरे -

'चन्द्रांशे मणिपोतैः कृषिजलवस्त्रादिभिर्धनं लभते।

गोमहिषशर्कराद्यैः स्त्रीसंगमान्मन्त्रदैवताद्वापि'।। इति।।

'धात्वग्निप्रहरणसाहसैः कुजांशे' इत्यस्य क्षत्राधिपत्वात् क्षत्रादितोपि जीवनं भवति। अत्रापि शास्त्रान्तरमस्ति।

तथा च शास्त्रान्तरम् -

'उपदेशमन्त्रकुशलैस्साग्निकशस्त्राणि दाहजैर्वापि।

आपणविक्रयकुशलैर्भौमांशे क्षत्रतो धनवान्'।। इति।।

अत्र बुधस्य 'लिपिगणितादिकाव्यशिल्पैः' इति 'शिल्प'शब्देन चित्रद्यूतनृत्तनर्मादि च गृह्यते। तथा चोक्तम् -

लिपिलेख्यकाव्यगणितैर्द्यूतैः नृत्तैस्तदादिभिर्वित्तम्।

तदधीशे सौम्यांशे दानाध्यनादिभिर्निर्दिशेन्मतिमान्'।। इति।।



**जीवांशे द्विजविबुधागमादिधर्मैः**

**शुक्रांशे मणिरजतादिगोमहिष्यैः।**

**सौरांशे श्रमवधभारनीचशिल्पैः**

**कर्मेशाध्युषितनवांशकर्मसिद्धिः।। ३।।**

'जीवांशे द्विजविबुधागमादिधर्मैः' इत्यत्र धर्मशब्देन मन्त्रजपवृत्त्यादि च गृह्यते। अत्रापि शास्त्रान्तरमस्ति।

तथा च शास्त्रान्तरे -

'अध्ययनदेवतार्चनमन्त्रजपावृत्तिभिर्धनवान्।

कालज्ञाननिमित्तैर्नृपतिनिमित्तैस्तथा गुरोरंशे'।। इति।।

'शुक्रांशे मणिरजतादिगोमहिष्यैः' इत्यत्र 'आदि' शब्देन औषधालङ्कारनृत्तादि च गृह्यते।

तथा च शास्त्रान्तरे -

'गोमहिषाश्वगजाद्यैः स्त्रीसङ्गैरौषधैरलङ्कारैः।

नृत्तादिगीतकुशलैः शुक्रांशे वित्तवान् सुखी भवति'।। इति।

'सौरांशे श्रमवधभारनीचशिल्पैः' इत्यत्र 'श्रम'शब्देन अध्वगमनप्रेष्यवृत्तिखननवृत्त्यादयो गृह्यन्ते। 'नीच'शब्देन नीचप्रवृत्त्यादयः।

तथा च ग्रन्थान्तरे -

'सौरांशे फलमूलैः पत्रैर्भारोद्वहैश्रमैर्धनवान्।

नीचप्रेष्यजनाद्यैर्धान्यकुधान्यादिविक्रयैर्वापि'।। इति।।

अंशादिपतिर्बलवानयत्नतोऽर्थागमं सुखं कुरुते ।

अंशाधिपोतिनीचे प्रोक्तफलं स्वल्पमेव विदधाति।।

राश्युक्तदिग्विभागे देशं चिन्तयेत् स दैवज्ञः।

लग्नात्तु दशमराशेः स्वभावदेशं विनिर्दिशेदथवा।।

स्वस्वामिदृष्टयुक्तं स्वदेशफलदायकं मुनिभिरुक्तम्।

अन्येन सहितदृष्टं परदेशफलप्रदं भाग्यम्।।

तदधीशे चरभांशे प्रवासतोऽर्थागमं सुखं लभते।
स्थिरभांशके स्वदेशादुभयांशे सर्वतः फलप्राप्तिः।।
वक्रगते तदधीशे बहुप्रकारं धनं समाप्नोति।
भाग्यानुरूपतोर्थान् विनिर्दिशेत्सर्वतोऽपि पूर्वोक्तम्।।
चन्द्राद्दशमे सौम्यो बलवानेको न शत्रुयुतदृष्टः।
जनयेद् युगान्तकीर्तिं सान्वयवित्तञ्च लग्नाद्वा'।।

जन्मकालादन्यत्रापि कर्मेशो यस्मिन् नवांशके वसति तस्य तस्य नवांशकस्य यत् कर्म विहितं 'अर्कांशे तृणकनकोर्णभेषजाद्यैः' इत्यादि तत्तदानीं सिद्ध्यतीत्यर्थः। अन्यथेदं पुनर्वचनं स्यात्। एतन्नवांशकोक्तं द्वादशांशेनापि चिन्त्यम्। अन्यच्च, कर्मेशाध्युषित-नवांशाधिपतिः सूर्यश्चेत् 'नखदन्तचर्मकनकक्रौर्याध्वभूपाहवै'स्स्वं संचिन्त्यम्। चन्द्रश्चेत् 'इक्षुक्षीरविकारवस्त्रकुसुमक्रीडातिलान्नश्रमैः' कुजश्चेत् 'अरिविमर्दभूपसहजक्षित्याविकाजैः' धनप्राप्तिः। बुधश्चेत् 'दौत्यसुहृद्गुरुद्विजविद्वत्प्रशंसायशोयुक्तिद्रव्यसुवर्णवेसरादिभि'श्च धनप्राप्तिः गुरुश्चेत् 'माहात्म्योधममन्त्रनीतिनृपतिस्वाध्याययज्ञादिभिः'। शुक्रश्चेत् 'गीतरतिप्रमोदसुरभिद्रव्यान्नपानाम्बरस्त्रीरत्नद्युतिमन्मथोपकरणादिभिः' शनिश्चेत् 'खरोष्ट्रपक्षिमहिषीकुधान्यादिभिः' धनप्राप्तिरित्यादि चिन्त्यम्।

'कर्मेशाध्युषितसमानकर्मसिद्धिः' इति पाठे कर्मेशाध्युषितराशिसमानदेशे कर्मसिद्धिः। देशोऽत्र जाङ्गलानूपमरुत्संज्ञितग्राम्यारण्यपौरसंज्ञिताश्च राशिवत् विज्ञेय इति। भेन्द्वर्कास्पदराशीनां ग्रहाभावे कर्मविशेषसिद्धिर्निरूपणीयेति पूर्वमुक्तम्। कर्मविशेषास्तु शास्त्रान्तरादवगन्तव्याः।

तथा च सारावल्याम् -

'आरामपुत्रसेवाकृषिरसवणिगक्षद्यूतकार्येण।
जीवन्ति जना नित्यं मेषगणे दशमराशिस्थे।।
वृषभगणे दशमस्थे शकटचतुष्पाद्विहगगृहजीवी।
धान्यादि संग्रहेण च जांगलदेशे फलप्रायः।।



जलवणिजस्सुसमृध्या मुक्तादिभिश्च प्रवालभाण्डैश्च।
लिपिसङ्ख्यामितिजीवी नृमिथुनवर्गे दशमसंस्थे।।
शस्त्राग्नियोनिपोषणमुक्ताशल्योपजीविनञ्चैव।
आहिततुण्डिकवृत्त्या कर्किणि वर्गे सदा दशमे।।
सव्यूहका मणीनां पाषाणस्वर्णरूप्यकूटानाम्।
कर्षणनिरता लेये गोजीवी धान्यवाणिजे भवन्त्यनिशम्।।
शाकटिका मणिकारा हैरण्यकगन्धविक्रये निपुणाः।
गान्धर्वशिल्पलेख्यैः कन्यावर्गे सदा विभवाः।।
प्रायोज्यादुपदेशात् हिरण्यपरिवर्तनाच्च मित्राच्च।
जायन्ते च मनुष्या नानाव्यवहारभागिनः सततम्।।
धनधान्यमूलवणिजः फलमूलकृषीवलाश्चैव।
तुलाधरसंज्ञितवर्गे दशमस्थानस्थिते तु कलावृत्ताः।।
स्त्रीसम्पर्कजविभवाज्जायन्ते कर्षणानुरताश्च।
नित्योद्युक्ताश्चोराः पृथ्वीपतिसेवकाः पापाः।।
देहचिकित्सानिरता लोहकरा जीविनोऽलिसंज्ञस्य।
वर्गे नभस्थलगते धान्यानाञ्चोपजीविनो नित्यम्।।
नृपसचिवदुर्गपालनगोद्रुमवाजिकाष्ठशकुनैश्च।
यन्त्रोपकरणगणितैर्जीवन्ति नराश्चिकित्सया धनुषः।।
दशमे कुरङ्गवर्गे जलपण्यधनो भवेन्महाविभवः।
खट्वारामारोपणरसायनैर्वर्तते जातः।।
शस्त्रानलप्रभेदचौर्यादिभिर्जीवेद् वनवृत्त्या।
दशमे घटवर्गे भारवहस्कन्धबाहुबलात्।।
शस्त्रात्सलिलगमनादागमप्रपोषणादश्वविक्रयाच्चैव।
वर्गे मीनप्रभवे दशमस्थे जायते वृत्तिः'।। इति।।

एवं राश्यंशकाभ्यां आजीववृत्तिर्निरूपणीया। बहुषु लक्षणेषु बलवद्ग्रहवशान्निर्णयः कर्तव्यः। जातिदेशकालावस्थानुरूपं ऊहापोहनिपुणेन फलं वाच्यम्।

**मित्रारिस्वगृहगतैस्ततस्ततोर्था-**
**स्तुङ्गस्थे बलिनि च भास्करे स्ववीर्यात्।**
**आयस्थैरुदयधनाश्रितैश्च सौम्यैः**
**सञ्चिन्त्यं बलसहितैरनेकधा स्वम्।।४।।**

'मित्रारिस्वगृहगतैः' इति। मित्रक्षेत्रगतग्रहेण मित्रादर्थाप्तिः। स्वगृहगतग्रहेण स्वजनादर्थसिद्धिः। तुङ्गस्थे भास्करे अन्यैर्बलैरुपेते सति स्ववीर्यात् स्वप्रभावेन। आयस्थैरुदयधनाश्रितैश्च सौम्यैः बहुप्रकारं धनञ्चिन्त्यम्। 'तुङ्गस्थे बलिनि च भास्करे स्ववीर्यादि'त्यत्रार्कस्य पित्रात्मकत्वात् पितृपक्षादर्थाः भवन्ति। आत्मस्वरूपत्वात् स्वप्रभावाच्चार्थाः भवन्ति। 'आयस्थै'रित्यत्र कर्मस्थानात् वृत्तिः धनस्थानेन धनं; लाभस्थानेनागमोपायः; उदयेनात्मस्वभावः इति सूचितम्।
तथा चोक्तम् -

'दशमेशस्य वृत्त्यैव धनेशस्योचितं धनम्।
लाभाधीशादवाप्नोति विलग्नेशात्मतो नरः'।। इति।।

अथ जातकलेखनक्रमो विलिख्यते -

'अभिवन्द्य गुरूनादौ गणेशं स्वेष्टदैवतम्।
सूर्यादिकान् ग्रहान् सर्वानारभेज्जातकं बुधः।।
अहर्गणं लिखेदादौ राशिमाख्यां तथेव च।
पश्चात् सूर्यादिखेटानां स्फुटवाक्यानि विन्यसेत्।।
अनन्तरं कलेर्वाक्यं व्याख्यानवदुदाहरेत्।
ततो मन्दं ततो जीवं मासं तच्चान्द्रमेव च।।
ऋक्षं सनाडिकं वारं दिनरात्रिविकल्पना।



प्राह्नपूर्वाह्नमध्याह्नमपराह्नं तथैव च।।
सायाह्नं पूर्वरात्रादीनेवमेव लिखेद्बुधः।
ततो राशिं सघटिकं पक्षभेदं तिथिं तथा।।
करणं नित्ययोगञ्च चन्द्रपञ्चाङ्गमेव च।
दिवसं सगणं योनिं मृगवृक्षविहंगमान्।।
पृथिव्यादि ततो भूतान् तारादीनाञ्च देवताम्।
ग्रहन्यासं लिखेत् पश्चात् षड्वर्गं तत्फलं तथा।।
पञ्चाङ्गानां फलं पश्चात् ततो भावस्फुटान्यपि।
पश्चाद् ग्रहस्थितिर्व्याख्या ततो भावफलान्यपि।।
पश्चात् लग्नांशकयुतमंशकाख्यग्रहस्थितिम्।
फलयोगाञ्च सकलानंशकाख्यांस्तथैव च।।
अष्टवर्गं लिखेत्पश्चात् तद्व्याख्यां विलिखेत् पुनः।
एवं विलिख्य बहुधा दशाः सूक्ष्मं विचारयेत्।।
उच्चनीचं ततश्चक्रं ततो नक्षत्रमेव च।
अन्या दशाश्च संवीक्ष्य संवादमपि चिन्तयेत्।।
मातृपित्रोश्च निर्याणं पुत्रोत्पत्तिन्तथैव च।
आत्मनस्तु गुणान्दोषानेवमेव विचिन्तयेत्।।
निर्याणं तु ततो दृष्ट्वा स्थाप्य मन्दार्यभास्करान्।
दशासंवादमालोच्य निर्वाणं विलिखेद् बुधः'।।

'अथवाहर्गणं चैव सद्रेक्काणमिति स्फुटम्' लग्ननाम ग्रहवाक्यं भाषया अहर्गणन्दिनरात्रिगतघटिकांशं गुरुं मासं गतनवाशं नक्षत्रपादं पक्षं तिथिं करणञ्च घटिकाञ्च नक्षत्रगणयोनिदेवतावृक्षान् चन्द्रक्रियावस्थां वेलां च राशिषड्वर्गं भाषया ग्रहमित्येवं विलिखेत्। वराहमिहिरहोराशास्त्रे प्रथमाध्यायादारभ्याध्यायदशे मया विदितार्थः प्रायशोऽत्र व्याख्यातः। उपरितनाध्यायार्थाश्च केचित् केचित् व्याख्याताः। अत्र पुनर्व्याख्यानकौशलाभावात् पूर्वापरपद्यालोचननैपुण्याभावादज्ञानाच्च मूलग्रन्थानुसारतः पुनर्वचनमपशब्दप्रयोगः

न्यायविरोधाश्चात्र सन्त्येव। तस्मादेतां व्याख्यां यः कश्चिद् बुधः पश्यति चेत् क्षन्तुमर्हति। नैष पाण्डित्यप्रकटनाय कृतः स्वावगताथान् मन्दबुद्धये शिष्यायोपदेष्टुमेव इति।

'स्फुरतु भुजङ्गमहारं मम हृदि तेजो महाविषाहारम्।
श्वेतारण्यविहारं श्वेतं शीतांशुशेखरं हारम्'।।

इति गोविन्दसोमयाजिकृतौ बृहज्जातकव्याख्यायां दशाध्याय्याख्यायां
दशमाध्यायः
(सम्पूर्णः)
समाप्तोऽयं ग्रन्थः
।। शुभम्।।

मूलश्लोकाः

## एकादशाध्यायः

### राजयोगप्रकरणम्

प्राहुर्यवनाः स्वतुङ्गगैः क्रूरैः क्रूरमतिर्महीपतिः
क्रूरैस्तु न जीवशर्मणः पक्षे क्षित्यधिपः प्रजायते ।।१।।

वक्रार्कजार्कगुरुभिः सकलैस्त्रिभिर्वा स्वोच्चेषु षोडश नृपाः कथितैकलग्ने।
द्व्येकाश्रितेषु च तथैकतमे विलग्ने स्वक्षेत्रगे शशिनि षोडश भूमिपाः स्युः ।।२।।

वर्गोत्तमगते लग्ने चन्द्रे वा चन्द्रवर्जितैः।
चतुराद्यैर्ग्रहैर्दृष्टे नृपा द्वाविंशतिः स्मृताः ।।३।।

यमे कुम्भेऽर्केऽजे गवि शशिनि तैरेव तनुगै-
र्नृयुक्सिंहालिस्थैः शशिजगुरुवक्रैर्नृपतयः।
यमेन्दू तुङ्गेऽङ्गे सवितृशशिजौ षष्ठभवने
तुलाजेन्दुक्षेत्रैः ससितकुजजीवैश्च नरपौ ।।४।।

कजे तुङ्गेऽर्केन्द्वोर्धनुषि यमलग्ने च कुपतिः
पतिर्भूमेश्चान्यः क्षितिसुतविलग्ने सशशिनि।
सचन्द्रे सौरेऽस्ते सुरपतिगुरौ चापधरगे
स्वतुङ्गस्थे भानावुदयमुपयाते क्षितिपतिः ।।५।।

वृषे सेन्दौ लग्ने सवितृगुरुतीक्ष्णांशुतनयैः
सुहृज्जायाखस्थैर्भवति नियमान्मानवपतिः।
मृगे मन्दे लग्ने सहजरिपुधर्मव्ययगतैः
शशाङ्काद्यैर्जातः पृथुगुणयशाः पुङ्गलपतिः ।।६।।

हये सेन्दौ जीवे मृगमुखगते भूमितनये
स्वतुङ्गस्थौ लग्ने भृगुजशशिजावत्रनृपतीः।

सुतस्थौ वक्रार्की गुरुशशिसिताश्चापि हिबुके
बुधे कन्यालग्ने भवति हि नृपोऽन्योपि गुणवान् ।।७।।

झषे सेन्दौ लग्ने घटमृगमृगेन्द्रेषु सहितै-
र्यमारार्कैर्योऽभूत् स खलु मनुजः शास्ति वसुधाम्।
अजे सारे मूर्तौ शशिगृहगते चामरगुरौ
सुरेड्ये वा लग्ने धरणिपतिरन्योपि गुणवान् ।।८।।

कर्किणि लग्ने तत्स्थे जीवे चन्द्रसितज्ञैरायं प्राप्तैः।
मेषगतेऽर्के जातं विद्याद्विक्रमयुक्तं पृथ्वीनाथम्।।९।।

मृगमुखेऽर्कतनये तनुसंस्थे क्रियकुळीरहरयोऽधिपयुक्ताः।
मिथुनतौलिसहितौ बुधशुक्रौ यदि ततः पृथुयशाः पृथिवीशः ।।१०।।

स्वोच्चसंस्थे बुधे लग्ने भृगौ मेषूरणाश्रिते।
सजीवेऽस्ते निशानाथे राजा मन्दारयोः सुते ।।११।।

अपि खलकुलजाता मानवा राज्यभाजः किमुत नृपकुलोत्थाः प्रोक्तभूपालयोगैः।
नृपतिकुलसमुत्थाः पार्थिवा वक्ष्यमाणैर्भवति नृपतितुल्यस्तेष्वभूपालपुत्रः ।।१२।।

उच्चत्रिकोणगैर्बलसंस्थैस्त्र्याद्यैर्भूपतिवंशजा नरेन्द्राः।
पञ्चादिभिरन्यवंशजाता हीनैर्वित्तयुता न भूमिपाः स्युः ।।१३।।

लेखास्थेऽर्केऽजेन्दौ लग्ने भौमे स्वोच्चे कुम्भे मन्दे।
चापं प्राप्ते जीवे राज्ञः पुत्रं विद्यात् पृथ्वीनाथम्।।१४।।

स्वर्क्षे शुक्रे पाताळस्थे धर्मस्थानं प्राप्ते चन्द्रे।
दुश्चिक्याङ्गप्राप्तिप्राप्तैः शेषैर्जातः स्वामी भूमेः ।।१५।।

सौम्ये वीर्ययुते तनुसंस्थे वीर्याढ्ये च शुभे शुभयाते।
धर्मार्थोपचयेष्ववशेषैर्धर्मात्मा नृपजः पृथिवीशः ।।१६।।



वृषोदये मूर्तिधनारिलाभगैः शशाङ्कजीवार्कसुतापरैर्नृपः।
सुखे गुरौ खे शशितीक्ष्णदीधिती यमोदये लाभगतैर्नृपोऽपरैः ।।१७।।

मेषूरणायतनुगाः शशिमन्दजीवा ज्ञारौ धने सितरवी हिबुके नरेन्द्रः।
वक्रासितौ शशिसुरेड्यसितार्कसौम्या होरासुखास्तशुभखाप्तिगताः प्रजेशाः ।।१८।।

कर्मलग्नगतपाकदशायां राज्यलब्धिरथवा प्रबलस्य।
शत्रुनीचगृहयातदशायां छिद्रसंश्रयदशा परिकल्प्या ।।१९।।

गुरुबुधसितलग्ने सप्तमस्थेऽर्कपुत्रे वियति दिवसनाथे भोगिनां जन्म विद्याद्।
शुभबलयुतकेन्द्रैः क्रूरभस्थैश्च पापैर्व्रजति शबरदस्युस्वामितामर्थभाक् च।।२०।।

## द्वादशाध्यायः

### नाभसयोगप्रकरणम्

नवदिग्वसवस्त्रिकाग्निवेदैर्गुणिता द्वित्रिचतुर्विकल्पजाः स्युः।
यवनैस्त्रिगुणाहिषट्शती सा कथिता विस्तरतोऽत्र तत्समासः ।।१।।

रज्जुर्मुसलं नलं चराद्यैः सत्यस्त्वाश्रयजानिहाह योगान्।
केन्द्रैः सदसद्युतैर्दळाख्यौ स्रक्सर्पौ कथितौ पराशरेण।।२।।

योगा व्रजन्त्याश्रयजाः समत्वं यवाब्जवज्राण्डजगोळकाद्यैः।
केन्द्रोपगप्रोक्तफलौ दळाख्यावित्याहुरन्ये न पृथक्फलौ तौ।।३।।

आसन्नकेन्द्रभवनद्वयगैर्गदाख्यस्तन्वस्तगेषु शकटं विहगः खबन्ध्वोः।
श्रृङ्गाटकं नवमपञ्चमलग्नसंस्थैर्लग्नान्यगैर्हलमिति प्रवदन्ति तज्ज्ञाः ।।४।।

शकटाण्डजवच्छुभाशुभैर्वज्रं तद्विपरीतगैर्यवः।
कमलं तु विमिश्रसंस्थितैर्वापी तद्यदि केन्द्रबाह्यतः ।।५।।

पूर्वशास्त्रानुसारेण मया वज्रादयः कृताः।
चतुर्थभवने सूर्यात् ज्ञसितौ भवतः कथम्।।६।।

कण्टकादिप्रवृत्तैस्तु चतुर्गृहगतैर्ग्रहैः।
यूपेषु शक्तिदण्डाख्या होराद्यैः कण्टकैः क्रमात्।।७।।

नौकूटच्छत्रचापानि तद्वत् सप्तर्क्षसंस्थितैः।
अर्धचन्द्रस्तु नावाद्यैः प्रोक्तादन्यर्क्षसंस्थितैः।।८।।

एकान्तरगतैरर्थात् समुद्रः षड्ग्रहाश्रितैः।
विलग्नादिस्थितैश्चक्रमित्याकृतिजसंग्रहः।।९।।

सङ्ख्यायोगाः सप्तसप्तर्क्षसंस्थैरेकापायाद्वल्लकी दामनी च।
पाशः केदारश्च शूलो युगं च गोळं चान्ये पूर्वमुक्तान् विहाय।।१०।।

ईर्ष्युर्विदेशनिरतोऽध्वरुचिश्च रज्वां मानी धनी च मुसले बहुकृत्यसक्तः।
व्यङ्गस्थिरार्थनिपुणो नळजाः स्रगुत्थो भोगान्वितो भुजगजो बहुदुःखभाक् स्यात्।।११।।

आश्रयोक्तास्तु विफला भवन्त्यन्यैर्विमिश्रिताः।
मिश्रा यैस्ते फलं दद्युरमिश्राः स्वफलप्रदाः ।।१२।।

यज्वार्थभाक् सततमध्वरुचिर्गदायां तद्वृत्तिभुक् शकटजः सरुजः कुदारः।
दूतोऽटनः कलहकृद्विहगे प्रतिष्टः श्रृङ्गाटके चिरसुखी कृषिकृद्धलाख्ये।।१३।।

वज्रेऽन्त्यपूर्वसुखितः सुभगोऽतिशूरः शौर्यान्वितोऽप्यथ यवे सुखितो वयोन्त्ये।
विख्यातकीर्त्यमितसौख्यगुणाश्च पद्मे वाप्यां तनुस्थिरसुखी निधिकृन्न दाता।।१४।।

त्यागात्मवान् क्रतुवरैर्यजते च यूपे हिंस्रोऽथ गुप्त्यधिकृतः शरकृच्छराख्ये।
नीचोऽलसः सुखधनैर्वियुतश्च शक्तौ दण्डे प्रियैर्विरहितः पुरुषोऽन्त्यवृत्तिः ।।१५।।

कीर्त्या युतस्चलसुखः कृपणश्च नौजः कूटेऽनृतप्लवनबन्धनपश्च जातः।
छत्रोद्भवः स्वजनसौख्यकरोऽन्त्यसौख्यः शूरस्तु कार्मुकभवः प्रथमान्त्यसौख्यः ।।१६।।

अर्धेन्दुजः सुभगकान्तवपुः प्रधानस्तोयालये नरपतिप्रतिमस्तु भोगी।
चक्रे नरेन्द्रमकुटद्युतिराजिताङ्घ्रिर्वीणोद्भवः सुनिपुणः प्रियगीतनृत्तः।।१७।।



दातान्यकार्यनिरतः पशुपश्च दाम्नि पाशे धनार्जनसुशीलसुभृत्यबन्धुः।
केदारजः कृषिकरः सुबहूपभोज्यः शूरः क्षतो वधरुचिर्विधनश्च शूले।।१८।।

धनविरहितः पाषण्डी वा युगे त्वथ गोळके
विधनमलिनो ज्ञानापेतः कुशिल्प्यलसोऽटनः।
इति निगदिता योगाः सार्धं फलैरिह नाभसा
नियतफलदाश्चिन्त्या ह्येते समस्तदशास्वपि।।१९।।

## त्रयोदशाध्यायः

### चान्द्रयोगप्रकरणम्

अधमसमवरिष्ठान्यर्केकेन्द्रादिसंस्थे
शशिनि विनयवित्तज्ञानधीनैपुणानि।
अहनि निशि च चन्द्रे स्वेऽतिमित्रांशके वा
सुरगुरुसितदृष्टे वित्तवान् स्यात् सुखी च।।१।।

सौम्यैः स्मरारिनिधनेष्वधियोग इन्दोस्तस्मिंश्चमूपसचिवक्षितिपालजन्म।
सम्पत्तिसौख्यविभवा हतशत्रवश्च दीर्घायुषो विगतरोगभयाश्च जाताः।।२।।

हित्वार्कं सुनभानभा धुरुधुराः स्वान्त्योभयस्थैर्ग्रहैः
शीतांशोः कथितोऽन्यथा तु बहुभिः केमद्रुमोन्यैस्त्वसौ।
केन्द्रे शीतकरेऽथवा ग्रहयुते केमद्रुमो नेष्यते
केचित् केन्द्रनवांशकेषु च वदन्त्युक्तिप्रसिद्धा न ते।।३।।

त्रिंशत्स्वरूपाः सुनभानभाख्याः षष्टित्रयं धौरुधुरा प्रभेदाः।
इच्छाविकल्पैः क्रमशोऽभिनीय नीते निवृत्तिः पुनरन्यनीतिः।।४।।

स्वयमधिगतवित्तः पार्थिवस्तत्समो वा भवति हि सुनभायां धीधनख्यातिमांश्च।
प्रभुरगदशरीरः शीलवान् ख्यातकीर्तिर्विषयसुखसुवेषो निर्वृतश्चानभायाम्।।५।।

उत्पन्नभोगसुखभाग् धनवाहनाढ्यस्त्यागान्वितो धुरुधुराप्रभवः सुभृत्यः।
केमद्रुमे मलिनदुःखितनीचनिस्वः प्रेष्यः खलश्च नृपतेरपि वंशजातः।।६।।

उत्साहशौर्यधनसाहसवान् महीजे सौम्ये पटुः सुवचनो निपुणः कलासु।
जीवेऽर्थधर्मसुखभाङ् नृपपूजितश्च कामी भृगौ बहुधनो विषयोपभोक्ता।।७।।

परविभवपरिच्छदोपभोक्ता रवितनये बहुकार्यकृद् गणेशः।
अशुभकृदुडुपोऽह्नि दृश्यमूर्तिर्गलिततनुश्च शुभोऽन्यथान्यदूह्यम्।।८।।

लग्नादतीव वसुमान् वसुमाञ्छशाङ्कात् सौम्यग्रहैरुपचयोपगतैः समस्तैः।
द्वाभ्यां समोऽल्पवसुमांश्च तदूनतायामन्येषु सत्स्वपि फलेष्विदमुत्कटेन।।९।।

## चतुर्दशाध्यायः

### द्विग्रहादियोगप्रकरणम्

तिग्मांशुर्जनयत्यथेन्दुसहितो यन्त्राश्मकारं नरं
भौमेनाघरतं बुधेन निपुणं धीकीर्तिसौख्यान्वितम्।
क्रूरं वाक्पतिनान्यकार्यनिरतं शुक्रेण रङ्गायुधै-
र्लब्धस्वं रविजेन धातुकुशलं भाण्डप्रकारेषु वा।।१।।

कूटस्त्र्यासवकुम्भपण्यमशिवं मातुः सवक्रः शशी
सज्ञः प्रश्रितवाक्यमर्थनिपुणं सौभाग्यकीर्त्यन्वितम्।
विक्रान्तं कुलमुख्यमस्थिरमतिं वित्तेश्वरं सांगिरा
वस्त्राणांससितः क्रियादिकुशलं सार्किः पुनर्भूसुतम्।।२।।

मूलादिस्नेहकूटैर्व्यवहरति वणिक् बाहुयोद्धा ससौम्ये
पुर्यध्यक्षः सजीवे भवति नरपतिः प्राप्तवित्तो द्विजो वा।
गोपो मल्लोऽथ दक्षः परयुवतिरतो द्यूतकृत् सासुरेज्ये
दुःखार्तोऽसत्यसन्धः ससवितृतनये भूमिजे निन्दितश्च।।३।।

सौम्ये रंगचरो बृहस्पतियुते गीतप्रियो नृत्तवि-
द्वाग्मी भूगणपः सितेन मृदुना मायापटुर्लङ्घकः।
सद्विद्यो धनदारवान् बहुगुणः शुक्रेण युक्ते गुरौ
ज्ञेयः श्मश्रुकरोऽसितेन घटकृद्दासोऽन्नकारोपि वा।।४।।



असितसितसमागमेऽल्पचक्षुर्युवतिजनाश्रयसम्प्रवृद्धवित्तः।
भवति च लिपिपुस्तचित्रवेत्ता कथितफलैः परतो विकल्पनीयाः।।५।।

## पञ्चदशाध्यायः

### प्रव्रज्यायोगप्रकरणम्

एकस्थैश्चतुरादिभिर्बलयुतैर्जाताः पृथग्वीर्यगैः
शाक्याजीवकभिक्षुवृद्धचरका निर्ग्रन्थिवन्याशनाः।
माहेयज्ञगुरुक्षपाकरसितप्राभाकरीनैः क्रमात्
प्रव्रज्या बलिभिः समाः परजितैस्तत्स्वामिभिः प्रच्युतिः।।१।।

रविलुप्तकरैरदीक्षिता बलिभिस्तद्गतभक्तयो नराः।
अभियाचितमात्रदीक्षिता निहतैरन्यनिरीक्षितैरपि।।२।।

जन्मेशोऽन्यैर्यद्यदृष्टोऽर्कपुत्रं पश्यत्यार्किर्जन्मपं वा बलोनम्।
दीक्षां प्राप्नोत्यार्किदृक्काणसंस्थे भौमार्क्यंशे सौरदृष्टे च चन्द्रे।।३।।

सुरगुरुशशिहोरास्वार्किदृष्टासु धर्मे गुरुरथ नृपतीनां योगजस्तीर्थकृत् स्यात्।
नवमभवनसंस्थे मन्दगेऽन्यैरदृष्टे भवति नरपयोगे दीक्षितः पार्थिवेन्द्रः।।४।।

## षोडशाध्यायः

### राशिशीलप्रकरणम्

वृत्ताताम्रदृगुष्णशाकलघुभुक् क्षिप्रप्रसादोऽटनः
कामी दुर्बलजानुरस्थिरधनः शूरोऽङ्गनावल्लभः।
सेवाज्ञः कुनखी व्रणाङ्कितशिरा मानी सहोत्थाग्रजः
शक्त्या पाणितलेऽङ्कितोऽतिचपलस्तोये च भीरुः क्रिये।।१।।

कान्तः खेलगतिः पृथूरुवदनः पृष्ठास्यपार्श्वेऽङ्कित-
स्त्यागी क्लेशसहः प्रभुः ककुदवान् कन्याप्रजः श्लेष्मळः।

पूर्वैर्बन्धुभिरात्मजैर्विरहितः सौभाग्ययुक्तः क्षमी
दीप्ताग्निः प्रमदाप्रियः स्थिरसुहृन्मध्यान्त्यसौख्यो गवि।।२।।

स्त्रीलोलः सुरतोपचारकुशलः श्यामेक्षणः शास्त्रविद्
दूतः कुञ्चितमूर्धजः पटुमतिर्हास्येङ्गितद्यूतवित्।
चार्वङ्गः प्रियवाक् प्रभक्षणरुचिर्गीतप्रियो नृत्तवित्
क्लीबैर्याति रतिं समुन्नतनसश्चन्द्रे तृतीयर्क्षगे।।३।।

आवक्रद्रुतगः समुन्नतकटिः स्त्रीनिर्जितः सत्सुहृद्
दैवज्ञः प्रचुरालयः क्षयधनैः संयुज्यते चन्द्रवत्।
ह्रस्वः पीनगळः समेति च वशं साम्ना सुहृद्वत्सल-
स्तोयोद्यानरतः स्ववेश्मसहिते जातः शशाङ्के नरः।।४।।

तीक्ष्णः स्थूलहनुर्विशालवदनः पिंगेक्षणोऽल्पात्मजः
स्त्रीद्वेषी प्रियमांसकानननगः कुप्यत्यकार्ये चिरम्।
क्षुत्तृष्णोदरदन्तमानसरुजासंपीडितस्त्यागवान्
विक्रान्तः स्थिरधीः सुगर्वितमना मातुर्विधेयोऽर्कभे।।५।।

व्रीडामन्थरचारुवीक्षणगतिः स्रस्तांसबाहुः सुखी
श्लक्ष्णः सत्यरतः कलासु निपुणः शास्त्रार्थविद्धार्मिकः।
मेधावी सुरतप्रियः परगृहैर्वित्तैश्च संयुज्यते
कन्यायां परदेशगः प्रियवचाः कन्याप्रजोऽल्पात्मजः।।६।।

देवब्राह्मणसाधुपूजनरतः प्राज्ञः शुचिः स्त्रीजितः
प्रांशुः सून्नतनासिकः कृशचलद्गात्रोऽटनोऽर्थान्वितः।
हीनांगः क्रयविक्रयेषु कुशलो देवद्विनामा सरुक्
बन्धूनामुपकारकृद्विरुषितस्त्यक्तस्तु तैः सप्तमे।।७।।

पृथुलनयनवक्षा वृत्तजंघोरुजानुर्जनकगुरुवियुक्तः शैशवे व्याधितश्च।
नरपतिकुलपूज्यः पिंगळः क्रूरचेष्टो झषकुलिशखगाङ्कश्छन्नपापोऽळिजातः।।८।।



व्यादीर्घास्यशिरोधरः पितृधनस्त्यागी कविर्वीर्यवान्
वक्ता स्थूलरदश्रवोऽधरनसः कर्मोद्यतः शिल्पवित्।
कुब्जांसः कुनखीसुमांसळभुजः प्रागल्भ्यवान् धर्मविद्
बन्धुद्विण्न बलात्समेति च वशं साम्नैकसाध्योऽश्विजः।।९।।

नित्यं लालयति स्वदारतनयान् धर्मध्वजोऽधःकृशः
स्वक्षः क्षामकटिर्गृहीतवचनः सौभाग्ययुक्तोऽलसः।
शीतालुर्मनुजोऽटनश्च मकरे सत्वाधिकः काव्यकृ-
ल्लुब्धोऽगम्यजरांगनासु निरतस्सन्त्यक्तलज्जोऽघृणः।।१०।।

करभगळः सिराळखररोमशदीर्घतनुः पृथुचरणोरुपृष्ठजघनास्यकटिर्बधिरः।
परवनितार्थपापनिरतः क्षयवृद्धियुतः प्रियकुसुमानुलेपनसुहृद्घटजोऽध्वसहः।।११।।

जलचरधनभोक्ता दारवासोऽनुरक्तः समरुचिरशरीरस्तुङ्गनासो बृहत्कः।
अभिभवति सपत्नान् स्त्रीजितश्चारुदृष्टिर्द्युतिनिधिधनभोगी पण्डितश्चान्त्यराशौ।।१२।।

बलवति राशौ तदधिपतौ च स्वबलयुतः स्याद्यदि तुहिनांशुः।
कथितफलानामविकलदाता शशिवदतोऽन्येप्यनुपरिचिन्त्याः।।१३।।

प्रथितश्चतुरोऽटनोऽल्पवित्तः क्रियगे त्वायुधभृद्वितुङ्गभागे
गवि वस्त्रसुगन्धपण्यजीवी वनिताद्विट्कुशलश्च गेयवाद्ये।।१४।।

विद्याज्योतिषवित्तवान् मिथुनगे भानौ कुळीरस्थिते
तीक्ष्णोऽस्वः परकार्यकृच्छ्रमवधक्लेशैश्च संयुज्यते।
सिंहस्थे वनशैलगोकुलरतिर्वीर्यान्वितो ज्ञः पुमान्
कन्यास्थे लिपिलेख्यकाव्यगणितज्ञानान्वितः स्त्रीवपुः।।१५।।

जातस्तौलिनि शौण्डिकोऽध्वनिरतो हैरण्यको नीचकृत्
क्रूरः साहसिको विषार्जितधनः शस्त्रान्तगोऽळिस्थिते।
सत्पूज्यो धनवान् धनुर्धरगते तीक्ष्णो भिषक्कारुको
नीचोऽज्ञः कुवणिङ्मृगेऽल्पधनवान्लुब्धोऽन्यभाग्ये रतः।।१६।।

नीचो घटे तनयभाग्यपरिच्युतोऽस्व स्तोयोत्थपण्यविभवो वनितादृतोऽन्त्ये।
नक्षत्रमानवतनुप्रतिमे विभागे लक्ष्माऽऽदिशेत् तुहिनरश्मिदिनेशयुक्ते।।१७।।

नरपतिसत्कृताटनचमूपवणिक्सधनान्
क्षततनुचोरभूरिविषयांश्च कुजे स्वगृहे।
युवतिजितान् सुहृत्सु विषमान् परदाररतान्
कुहकसुवेषभीरुपरुषान् सितभे जनयेत्।।१८।।

बौधे सहस्तनयवान् विसुहृत् कृतज्ञो गान्धर्वयुद्धकुशलः कृपणोऽभयोऽर्थी।
चान्द्रेऽर्थवान् सलिलयानसमार्जितस्वः प्राज्ञश्च भूमितनये विकलः खलश्च।।१९।।

निस्वः क्लेशसहोऽभयो वनचरः सिंहेऽल्पदारात्मजो
जैवे नैकरिपुर्नरेन्द्रसचिवः ख्यातोऽभयोऽल्पात्मजः।
दुःखार्तो विधनोऽटनोऽनृतरतिस्तीक्ष्णश्च कुम्भस्थिते
भौमे भूरिधनात्मजो मृगगते भूपोऽथवा तत्समः।।२०।।

द्यूतान्नपानरतनास्तिकचोरनिस्वः कुस्त्रीककूटकृदसत्यरतः कुजर्क्षे।
आचार्यभूरिसुतदारधनार्जनेष्टः शौक्रे वदान्यगुरुभक्तियुतश्च सौम्ये।।२१।।

विकत्थनः शास्त्रकलाविदग्ध्दः प्रियंवदः सौख्यरतस्तृतीये।
जलार्जितस्वः स्वजनस्य शत्रुः शशाङ्कजे शीतकरर्क्षयुक्ते।।२२।।

स्त्रीद्वेष्यो विधनसुखात्मजोऽटनोऽज्ञः स्त्रीलोलः सुपरिभवोऽर्कराशिगे ज्ञे।
त्यागी ज्ञः प्रचुरगुणः सुखी क्षमावान् युक्तिज्ञो विगतभयश्च षष्ठराशौ।।२३।।

परकर्मकृदस्वशिल्पिबुद्धिस्तृणवान् विष्टिकरो बुधेऽर्कजर्क्षे।
नृपसम्मतपण्डिताप्तवाक्यो नवमेऽन्त्ये जितसेवकोऽन्त्यशिल्पः।।२४।।

सेनानीर्बहुवित्तदारतनयो दाता सुभृत्यः क्षमी
तेजोदारगुणान्वितः सुरगुरौ जातः पुमान् कौजभे।
कल्याङ्गः ससुखार्थमित्रतनयस्त्यागी प्रियः शौक्रभे
बौधे भूरिपरिच्छदात्मजसुहृत्साचिव्ययुक्तः सुखी।।२५।।



चान्द्रे रत्नसुतस्वदारविभवः प्राज्ञः सुखैरन्वितः
सिंहे स्याद् बलनायकः सुरगुरावुक्तं च यच्चान्द्रभे।
स्वर्क्षे माण्डलिको नरेन्द्रसचिवः सेनापतिर्वा धनी
कुम्भे कर्कटवत् फलानि मकरे नीचोऽल्पवित्तोऽसुखी।।२६।।

परयुवतिरतस्तदर्थवादैर्हृतविभवः कुलपांसनः कुजर्क्षे।
सुबलमतिधनो नरेन्द्रपूज्यः स्वजनविभुः प्रथितोऽभयः सिते स्वे।।२७।।

नृपकृत्यकरोऽर्थवान् कलाविन्मिथुने षष्ठगतेऽतिनीचकर्मा।
रविजर्क्षगतेऽमरारिपूज्ये सुभगः स्त्रीविजितो रतः कुनार्याम्।।२८।।

द्विभार्योऽर्थी भीरुः प्रबलमदशोकश्च शशिभे
हरौ योषाप्तार्थः प्रवरयुवतिर्मन्दतनयः।
गणैः पूज्यः सस्वस्तुरगसहिते दानवगुरौ
झषे विद्वानाढ्यो नृपजनितपूजोऽतिसुभगः।।२९।।

मूर्खोऽटनः कपटवान् विसुहृद् यमेऽजे कीटे तु बन्धवधभाक् चपलोऽघृणश्च।
निर्ह्रीसुखार्थतनयः स्खलितश्च लेख्ये रक्षापतिर्भवति मुख्यभृतश्च बौधे।।३०।।

वर्ज्यस्त्रीष्टो न बहुविभवो भूरिभार्यो वृषस्थे
ख्यातः स्वोच्चे गणपुरबलग्रामपूज्योऽर्थवांश्च।
कर्किण्यस्वो विरळदशनो मातृहीनोऽसुतोऽज्ञः
सिंहेऽनार्यो विसुखतनयो विष्टिकृत् सूर्यपुत्रे।।३१।।

स्वन्तः प्रत्ययिता नरेन्द्रभवने सत्पुत्रजायाधनो
जीवक्षेत्रगतेऽर्कजे पुरबलग्रामाग्रनेताऽथवा।
अन्यस्त्रीधनसंभृतः पुरबलग्रामाग्रणीर्मन्ददृक्
स्वक्षेत्रे मलिनः स्थिरार्थविभवो भोक्ता च जातः पुमान्।।३२।।

शिशिरकरसमागमेक्षणानां सदृशफलं प्रवदन्ति लग्नजातम्।
फलमधिकमिदं यदत्र भावाद्भवनभनाथगुणैर्विचिन्तनीयम्।।३३।।

## सप्तदशाध्यायः

### दृष्टिप्रकरणम्

चन्द्रे भूपबुधौ नृपो नृपगुणः स्तेनोऽधनश्चाजगे
निस्वस्तेननृमान्यभूपनिधनः प्रेष्यः कुजाद्यैर्गवि।
नृस्थेऽयोव्यवहारिपार्थिवबुधाभीस्तन्तुवायाधनाः
स्वर्क्षे योधकविज्ञभूमिपतयोऽयोजीविदृग्रोगिणौ।।१।।

ज्योतिर्ज्ञाढ्यनरेन्द्रनापितनृपक्ष्मेशा बुधाद्यैर्हरौ
तद्वद्भूपचमूपनैपुणयुताः षष्ठेऽशुभैस्त्र्याश्रयाः।
जूके भूपसुवर्णकारवणिजः शेषेक्षिते नैकृतिः
कीटे युग्मपिता नतश्च रजको व्यंगोऽधनो भूपतिः।।२।।

ज्ञात्युर्वीशजनाश्रयाश्च तुरगे पापैः सदंभः शठ-
श्चात्युर्वीशनरेन्द्रपण्डितधनीद्रव्योनभूपा मृगे।
भूपो भूपसमोऽन्यदारनिरतः शेषैश्च कुम्भस्थिते
हास्यज्ञो नृपतिर्बुधश्च झषगे पापश्च पापेक्षिते।।३।।

होरेशर्क्षदळाश्रितैः शुभकरो दृष्टः शशी तद्गत-
स्त्र्यंशे तत्पतिभिः सुहृद्भवनगैर्वा वीक्षितः शस्यते।
यत्प्रोक्तं प्रतिराशिवीक्षणपलं तद्द्वादशांशे स्मृतं
सूर्याद्यैरवलोकितेऽपि शशिनि ज्ञेयं नवांशेष्वतः।।४।।

आरक्षको वधरुचिः कुशलो नियुद्धे भूपोऽर्थवान् कलहकृत् क्षितिजांशसंस्थे।
मूर्खोऽन्यदाररतकाव्यविदः सितांशे सत्काव्यकृत् सुखपरोऽन्यकळत्रगश्च।।५।।

बौधे हि रंगचरचोरकवीन्द्रमन्त्रिगेयज्ञशिल्पनिपुणाः शशिनि स्थितेंऽशे।
स्वांशेऽल्पगात्रधनलुब्धतपस्विमुख्यस्त्रीपोष्यकृत्यनिरताश्च निरीक्ष्यमाणे।।६।।



सक्रोधो नरपतिसम्मतो निधीशः सिंहांशे प्रभुरसुतोऽतिहिंस्रकर्मा।
जैवांशे प्रथितबलो रणोपदेष्टा हास्यज्ञः सचिवविकामवृद्धशीलः।।७।।

अल्पापत्यो दुःखितः सत्यपि स्वे मानासक्तः कर्मणि स्वेऽनुरक्तः।
दुष्टस्त्रीष्टः कृपणश्चार्किभागे चन्द्रे भानौ तद्वदिन्द्वादिदृष्टे।।८।।

वर्गोत्तमस्वपरगेषु शुभं यदुक्तं तत्पुष्टमध्यलघुताऽशुभमुत्क्रमेण।
वीर्यान्वितोंऽशकपतिर्निरुणद्धि पूर्वं राशीक्षणस्य फलमंशफलं ददाति।।९।।

## अष्टादशाध्यायः

### भावफलप्रकरणम्

शूरस्तब्धो विकलनयनो निर्घृणोऽर्के तनुस्थे
मेषे सस्वस्तिमिरनयनः सिंहसंस्थे निशान्धः।
नीचेऽन्धोऽस्वः शशिगृहगते बुद्बुदाक्षः पतङ्गे
भूरिद्रव्यो नृपहृतधनो वक्त्ररोगी द्वितीये।।१।।

मतिविक्रमवांस्तृतीयगेऽर्के विसुखः पीडितमानसश्चतुर्थे
असुतो धनवर्जितस्त्रिकोणे बलवाञ्छत्रुजितश्च शत्रुयाते।।२।।

स्त्रीभिर्गतः परिभवं मदगे पतङ्गे स्वल्पात्मजो निधनगे विकलेक्षणश्च।
धर्मे सुतार्थसुखभाक् श्रुतशौर्यभाक् खे लाभे प्रभूतधनवान् पतितस्तु रिःफे।।३।।

मूकोन्मत्तजडान्धनीचबधिरप्रेष्यः शशाङ्कोदये
स्वर्क्षाजोच्चगते धनी बहुसुतः सस्वः कुटुम्बी धने।
हिंस्रो भ्रातृगते सुखे सतनये तत्प्रोक्तभावान्वितो
नैकारिर्मृदुकायवह्निमदनस्तीक्ष्णोऽलसश्चारिगे।।४।।

ईर्ष्युस्तीव्रमदो मदे बहुमतिर्व्याध्यर्दितश्चाष्टमे
सौभाग्यात्मजमित्रबन्धुधनभाग् धर्मस्थिते शीतगौ।

निष्पत्तिं समुपैति धर्मधनधीशौर्यैर्युतः कर्मगे
ख्यातो भावगुणान्वितो भगवते क्षुद्रोऽङ्गहीनोव्यये।।५।।

लग्ने कुजे क्षततनुर्धनगे कदन्नो धर्मेऽघवान् दिनकरप्रतिमोऽन्यसंस्थः।
विद्वान् धनी प्रबलपण्डितमन्त्र्यशत्रुः धर्मज्ञविश्रुतगुणाः परतोऽर्कवज्ज्ञे।।६।।

विद्वान् सुवाक्यः कृपणः सुखी च धीमानशत्रुः पितृतोऽधिकश्च।
नीचस्तपस्वी सधनः सलाभः खलश्च जीवे क्रमशो विलग्नात्।।७।।

स्मरनिपुणः सुखवांस्तु विलग्ने प्रियकलहोऽस्तगते सुरतेप्सुः।
तनयगते सुखितो भृगुपुत्रे गुरुवदतोऽन्यगृहे सधनोऽन्त्ये।।८।।

अदृष्टार्थो रोगी मदनवशगोऽत्यन्तमलिनः
शिशुत्वे पीडार्तः सवितृसुतलग्नेऽत्यलसवाक्।
गुरुस्वर्क्षोच्चस्थे नृपतिसदृशो ग्रामपुरपः
सुविद्वांश्चार्वङ्गो दिनकरसमोऽन्यत्र कथितः।।९।।

सुहृदरिपरकीयस्वर्क्षतुङ्गस्थितानां फलमनुपरिचिन्त्यं लग्नदेहादिभावैः।
समुपचयविपत्ती सौम्यपापेषु सत्यः कथयति विपरीतं रिःफषष्ठाष्टमेषु।।१०।।

उच्चत्रिकोणस्वसुहृच्छत्रुनीचगृहार्कगैः।
शुभं सम्पूर्णपादोनदळपादाल्पनिष्फलम्।।११।।

## एकोनविंशाध्यायः

### आश्रयफलप्रकरणम्

कुलसमकुलमुख्यबन्धुपूज्या धनिसुखिभोगिनृपाः स्वभैकवृद्ध्या।
परविभवसुहृत्स्वबन्धुपोष्या गणपबलेशनृपाश्च मित्रभेषु।।१।।

जनयति नृपमेकोप्युच्चगो मित्रदृष्टः प्रचुरधनसमेतं मित्रयोगाच्च सिद्धम्।
विधनविसुखमूढव्याधिता बन्धुतप्ता वधदुरितसमेताः शत्रुनीचर्क्षगेषु।।२।।



न कुम्भलग्नं शुभमाह सत्यो न भागभेदाद्यवना वदन्ति।
कस्यांशभेदो न तथास्ति राशेरतिप्रसंगस्त्विति विष्णुगुप्तः।।३।।

यातेष्वसत्स्वसमभेषु दिनेशहोरां ख्यातो महोद्यमबलार्थयुतोऽतितेजाः।
चान्द्रीं शुभेषु युजि मार्दवकान्तिभोगसौभाग्यधीमधुरवाक्ययुताः प्रजाताः।।४।।

तास्वेव होरास्वपरर्क्षगेषु ज्ञेया नराः पूर्वगुणेषु मध्याः।
व्यत्यस्तहोराभवनस्थितेषु मर्त्या भवन्त्युक्तगुणैर्विहीनाः।।५।।

कल्याणरूपगुणमात्मसुहृद्दृगाणे चन्द्रोऽन्यगस्तदधिनाथगुणं करोति।
व्याळोद्यदायुधचतुश्चरणाण्डजेषु तीक्ष्णोऽतिहिंस्रगुरुतल्परतोऽटनश्च।।६।।

स्तेनो भोक्ता पण्डिताढ्यौ नरेन्द्रः क्लीबः शूरो विष्टिकृद्दासवृत्तिः।
पापो हिंस्रोऽभीश्च वर्गोत्तमांशेष्वेषामीशा राशिवद् द्वादशांशैः।।७।।

जायान्वितो बलविभूषणसत्वयुक्तस्तेजोऽतिसाहसयुतश्च कुजे स्वभागे
रोगी मृतस्वयुवतिर्विषमोऽन्यदारो दुःखी परिच्छदयुतो मलिनोऽर्कपुत्रे।।८।।

स्वांशे गुरौ धनयशस्सुखबुद्धियुक्तस्तेजस्विपूज्यनिरुगुद्यमभोगवांश्च।
मेधाकलाकपटकाव्यविवादशिल्पशास्त्रार्थसाहसयुताः शशिजेऽतिमान्याः।।९।।

स्वत्रिंशांशे बहुसुतसुखारोग्यभाग्यार्थयुक्तः
शुक्रे तीक्ष्णः सुललिततनुर्विप्रकीर्णेन्द्रियश्च।
शूरस्तब्धौ विषमवधकौ सद्गुणाढ्यौ सुखिज्ञौ
चार्वङ्गेष्टौ रविशशियुतेष्वारपूर्वांशकेषु।।१०।।

# विंशाध्यायः

## मिश्रप्रकरणम्

स्वर्क्षतुङ्गमूलत्रिकोणगाः कण्टकेषु यावन्त आस्थिताः।
सर्व एव तेऽन्योन्यकारकाः कर्मगस्तु तेषां विशेषतः ।।१।।

कर्कटोदयगते यथोडुपे स्वोच्चगाः कुजयमार्कसूरयः।
कारका निगदिताः परस्परं लग्नगस्य सकलोऽम्बराम्बुगाः।।२।।

स्वत्रिकोणोच्चगा हेतुरन्यस्य यदि कर्मगः।
सुहृत् तद्गुणसम्पन्नः कारकश्चापि स स्मृतः।।३।।

शुभं वर्गोत्तमे जन्म वेसिस्थाने च सद्ग्रहे।
अशून्येषु च केन्द्रेषु कारकाख्यग्रहेषुच।।४।।

मध्ये वयसः सुखप्रदाः केन्द्रस्था गुरुजन्मलग्नपाः।
पृष्ठोभयकोदयर्क्षगाः स्वान्त्यान्तः प्रथमेषु पाकदाः।।५।।

दिनकररुधिरौ प्रवेशकाले गुरुभृगुजौ भवनस्य मध्ययातौ।
रविसुतशशिनौ विनिर्गमस्थौ शशितनयः फलदस्तु सर्वकालम्।।६।।

# एकविंशोऽध्यायः

## अनिष्टयोगप्रकरणम्

लग्नात् पुत्रकलत्रभे शुभपतिप्राप्तेथवालोकिते
चन्द्राद्वा यदि सम्पदस्ति हि तयार्ज्ञयोऽन्यथाऽसंभवः।
पार्थोनोदयगे रवौ रविसुतो मीनस्थितो दारहा
पुत्रस्थानगतस्तु पुत्रमरणं पुत्रोऽवनेर्यच्छति।।१।।

उग्रग्रहैः सितचतुरश्रसंस्थितैर्मध्यस्थिते भृगुतनयेथवोग्रयोः।
सौम्यग्रहैरसहितसन्निरीक्षिते जायावधो दहननिपातपाशजः।।२।।



लग्नाद्व्ययारिगतयोः शशितिग्मरश्म्योः पत्न्या सहैकनयनस्य वदन्ति जन्म।
द्यूनस्थयोर्नवमपञ्चमसंस्थयोर्वा शुक्रार्कयोर्विकलदारमुशन्ति जातम्।।३।।

कोणोदये भृगुतनयेऽस्तचक्रसन्धौ वन्ध्यापतिर्यदि न सुतर्क्षमिष्टयुक्तम्।
पापग्रहैर्व्ययमदलग्नराशिसंस्थैः क्षीणे शशिन्यसुतकळत्रजन्म धीस्थे।।४।।

असितकुजयोर्वर्गेऽस्तस्थे सिते तदवेक्षिते
परयुवतिगस्तौ चेत् सेन्दू स्त्रिया सहपुंश्चलः।
भृगुजशशिनोरस्तेऽभार्यो नरो विसुतोऽपिवा
परिणततनू नृस्त्र्योर्दृष्टौ शुभैः प्रमदापती।।५।।

वंशच्छेत्ता खमदसुखगैश्चन्द्रदैत्येड्यपापैः
शिल्पी त्र्यंशे शशिसुतयुते केन्द्रसंस्थाऽर्किदृष्टे।
दास्यां जातो दितिसुतगुरौ रिःफगे सौरिभागे
नीचोऽर्केन्द्वोर्मदनगतयोर्दृष्टयोः सूर्यजेन।।६।।

पापालोकितयोः सितावनिजयोरस्तस्थयोर्वातरुक्
चन्द्रे कर्कटवृश्चिकांशकगते पापैर्युते गुह्यरुक्।
श्वित्री रिःफधनस्थयोरशुभयोश्चन्द्रोदयेऽस्ते रवौ
चन्द्रे खेवनिजेऽस्तगे च विकलो यद्यर्कजो वेसिगः।।७।।

अन्तःशशिन्यशुभयोर्मदगे पतङ्गे श्वासक्षयप्लिहकविद्रधिगुल्मभाजः।
शोषी परस्परगृहांशगयो रवीन्द्वोः क्षेत्रेऽथवा युगपदेकगयोः कृशो वा।।८।।

चन्द्रेऽश्विमध्यझषकर्किमृगाजभागे कुष्ठी समन्दरुधिरे तदवेक्षिते च।
यातैस्त्रिकोणमळिकर्किवृषैर्मृगे च कुष्ठ्येव पापसहितैरवलोकितैर्वा।।९।।

निधनारिधनव्ययस्थिता रविचन्द्रारयमा यथा तथा।
बलवद्ग्रहदोषकारणैर्मनुजानां जनयन्त्यनेत्रताम्।।१०।।

नवमायतृतीयधीयुता न च सौम्यैरशुभा निरीक्षिताः।
नियमाच्छ्रवणोपघातदा रदवैकृत्यकराश्च सप्तमे।।११।।

उदयत्युडुपेऽसुरास्यगे सपिशाचोऽशुभयोस्त्रिकोणयोः।
सोपप्लवमण्डले रवावुदयस्थे नयनापवर्जितः।।१२।।

संस्पृष्टः पवनेन मन्दगयुते द्यूने विलग्ने गुरौ
सोन्मादोऽवनिजे स्थितेऽस्तभवने जीवे विलग्नाश्रिते।
तद्वत्सूर्यसुतोदयेऽवनिसुते धर्मात्मजद्यूनगे
जातो वा ससहस्ररश्मितनये क्षीणे व्यये शीतगौ।।१३।।

राश्यंशपोष्णकरशीतकरामरेड्यैर्नीचाधिपांशकगतैररिभागगैर्वा।
एभ्योऽल्पमध्यबहुभिः क्रमशः प्रसूता ज्ञेयास्स्युरभ्युपगमक्रयगर्भदासाः।।१४।।

विकृतदशनः पापैर्दृष्टे वृषाजहयोदये खलतिरशुभक्षेत्रे लग्ने हये वृषभेऽपि वा।
नवमसुतगे पापैर्दृष्टे रवावदृढेक्षणो दिनकरसुते नैकव्याधिः कुजे विकलः पुमान्।।१५।।

व्ययसुतधनधर्मगैरसौम्यैर्भवनसमाननिबन्धना विकल्प्याः।
भुजगनिगळपाशभृद्दृगाणैर्बलवदसौम्यनिरीक्षितैश्च तद्वत्।।१६।।

परुषवचनोऽपस्मारार्तः क्षयी च निशापतौ
सरवितनये वक्रालोकं गते परिवेषगे।
रवियमकुजैः सौम्यादृष्टैर्नभस्थलमाश्रितैः
भृतकमनुजः पूर्वोद्दिष्टैर्वराधममध्यमाः।।१७।।

## द्वाविंशाध्यायः

### स्त्रीजातकप्रकरणम्

यद्यत्फलं नरभवे क्षममङ्गनानां तत्तद्वदेत् पतिषु वा सकलं विधेयं।
तासां तु भर्तृमरणं निधने वपुस्तु लग्नेन्दुगं सुभगतास्तमये पतिश्च।।१।।

युग्मेषु लग्नशशिनोः प्रकृतिस्थिता स्त्री सच्छीलभूषणयुता शुभदृष्टयोश्च।
ओजस्थयोस्तु पुरुषाकृतिशीलयुक्ता पापा च पापयुतवीक्षितयोर्गुणोना।।२।।



कन्यैव दुष्टा व्रजतीह दास्यं साध्वी समाया कुचरित्रयुक्ता।
भूम्यात्मजर्क्षे क्रमशोंशकेषु वक्रार्किजीवेन्दुजभार्गवानाम्।।३।।

दुष्टा पुनर्भूः सुगुणा कलाज्ञा ख्याता गुणैश्चासुरपूजितर्क्षे।
स्यात् कापटी क्लीबसमा सती च बौधे गुणाढ्या प्रविकीर्णकामा।।४।।

स्वच्छन्दा पतिघातिनी बहुगुणा शिल्पिन्यसाध्वीन्दुभे
न्नाचारा कुलटाऽर्कभे नृपवधूः पुंश्चेष्टिताऽगम्यगा।
जैवे नैकगुणाल्परत्यतिगुणा विज्ञानयुक्ता सती
दासी नीचरताऽर्किभे पतिरता दुष्टाप्रजाऽस्वांशकैः।।५।।

शशिलग्नसमायुक्तैः फलं त्रिंशांशकैरिदं।
बलाबलविकल्पेन तयोरुक्तं विचिन्तयेत्।।६।।

दृक्संस्थावसितसितौ परस्परांशे शौक्रे वा यदि घटराशिसंभवोंऽशः।
स्त्रीभिः स्त्रीमदनविषानलं प्रदीप्तं संशान्तिं नयति नराकृतिस्थिताभिः।।७।।

शून्ये कापुरुषोऽबलेऽस्तभवने सौम्यग्रहावीक्षिते
क्लीबोऽस्ते बुधमन्दयोश्चरगृहे नित्यं प्रवासान्वितः।
उत्सृष्टा तरणौ कुजे तु विधवा बाल्येऽस्तराशिस्थिते
कन्यैवाऽशुभवीक्षितेऽर्कतनये द्यूने जरां गच्छति।।८।।

आग्नेयैर्विधवाऽस्तराशिसहितैर्मिश्रैः पुनर्भूर्भवेत्
क्रूरे हीनबलेऽस्तगे स्वपतिना सौम्येक्षिते प्रोज्झिता।
अन्योन्यांशगयोः सितावनिजयोरन्यप्रसक्ताङ्गना
द्यूने वा यदि शीतरश्मिसहिते भर्तुस्तदानुज्ञया।।९।।

सौरारर्क्षे लग्नगे सेन्दुशुक्रे मात्रा सार्धं बन्धकी पापदृष्टे।
कौजेऽस्तांशे सौरिणा व्याधियोनिश्चारुश्रोणी वल्लभा सद्ग्रहांशे।।१०।।

वृद्धो मूर्खः सूर्यजर्क्षेऽशके वा स्त्रीलोलः स्यात् क्रोधनश्चावनेये।
शौक्रे कान्तोऽतीव सौभाग्ययुक्तो विद्वान् भर्ता नैपुणज्ञश्च बौधे।।११।।

मदनवशगतो मृदुश्च चान्द्रे त्रिदशगुरोर्गुणवान् जितेन्द्रियश्च।
अतिमृदुरतिकर्मकृच्च सौरे भवति गृहेऽस्तमयस्थितेंऽशके वा।।१२।।

ईर्ष्यान्विता सुखपरा च सितेन्दुलग्ने ज्ञेन्द्वोः कलासु निपुणा सुखिता गुणाढ्या।
शुक्रज्ञयोस्तु सुभगा रुचिरा कलाज्ञा त्रिष्वप्यनेकवसुसौख्यगुणा शुभेषु।।१३।।

क्रूरेऽष्टमे विधवता निधनेश्वरोंऽशे यस्य स्थितो वयसि तस्य समे प्रदिष्टा।
सत्स्वर्थगेषु मरणं स्वयमेव तस्याः कन्यालिगोहरिषु चाल्पसुतत्वमिन्दौ।।१४।।

सौरे मध्यबले बलेन रहितैः शीतांशुशुक्रेन्दुजैः
शेषैर्वीर्यसमन्वितैः पुरुषिणी यद्योजराश्युद्गमे।
जीवारास्फुजिदैन्दवेषु बलिषु प्राग्लग्नराशौ समे
विख्याता भुवि नैकशास्त्रकुशला स्त्री ब्रह्मवादिन्यपि।।१५।।

पापेऽस्ते नवमगतग्रहस्य तुल्यां प्रव्रज्यां युवतिरुपैत्यसंशयेन।
उद्वाहे वरणविधौ प्रदानकाले चिन्तायामपि सकलं विधेयमेतत्।।१६।।

## त्रयोविंशाध्यायः

### मृत्युप्रकरणम्

मृत्युर्मृत्युगृहेक्षणेन बलिभिस्तद्धातुकोपोद्भव-
स्तद्संयुक्तभगात्रजो बहुभवो वीर्यान्वितैर्भूरिभिः।
वह्न्यम्ब्वायुधजो ज्वरामयकृतस्तृट्क्षुत्कृतश्चाष्टमे
सूर्याद्यैर्निधने चरादिषु परस्वाऽध्वप्रदेशेष्विति।।१।।

शैलाग्राभिहतस्य सूर्यकुजयोर्मृत्युः खबन्धुस्थयोः
कूपे मन्दशशाङ्कभूमितनयैर्बन्ध्वस्तकर्मस्थितैः।
कन्यायां स्वजनाद्धिमोष्णकरयोः पापग्रहैर्दृष्टयोः
स्यातां यद्युभयोदयेऽर्कशशिनौ तोये तदा मज्जतः।।२।।



मन्दे कर्कटगे जलोदरकृते मृत्युर्मृगाङ्के मृगे
शस्त्राग्निप्रभवः शशिन्यशुभयोर्मध्ये कुजर्क्षे स्थिते।
कन्यायां रुधिरोत्थशोषजनितस्तद्वत्स्थिते शीतगौ
सौरर्क्षे यदि तद्वदेव हिमगौ रज्वग्निपातैर्वधः।।३।।

लग्नाद्धीनवमस्थयोरशुभयोः सौम्यग्रहाऽदृष्टयोः
द्रेक्काणैश्च सपाशसर्पनिगडैश्छिद्रस्थितैर्बन्धनात्।
कन्यायामशुभान्वितेऽस्तमयगे चन्द्रे सिते मेषगे
सूर्ये लग्नगते च विद्धि मरणं स्त्रीहेतुकं मन्दिरे।।४।।

शूलोद्भिन्नतनुः सुखेऽवनिसुते सूर्येऽपि वा खे यमे
सप्रक्षीणहिमांशुभिश्च युगपत्पापैस्त्रिकोणाद्यगैः।
बन्धुस्थे च रवौ वियत्यवनिजे क्षीणेन्दुसंवीक्षिते
काष्ठेनाभिहतः प्रयाति मरणं सूर्यात्मजेनेक्षिते।।५।।

रन्ध्रास्पदाङ्गहिबुकैर्लकुटाहताङ्गः प्रक्षीणचन्द्ररुधिरार्कसुतार्कयुक्तैः।
तैरेव कर्मनवमोदयपुत्रसंस्थैर्धूमाग्निबन्धनशरीरनिकुट्टनान्तः।।६।।

बन्ध्वस्तकर्मसहितैः कजसूर्यमन्दैर्निर्याणमायुधशिखिक्षितिपालकोपात्।
ज्ञेयः क्षतक्रिमिकृतश्च शरीरपातः सौरेन्दुभूमितनयैः स्वसुखास्पदस्थैः।।७।।

खस्थेऽर्के ऽवनिजे रसातलगते यानप्रपाताद्वधो
यन्त्रोत्पीडनजः कुजेऽस्तमयगे सौरेन्द्विनाभ्युद्गमे।
विण्मध्ये रुधिरार्किशीतकिरणैर्जूकाजसौरर्क्षगै-
र्यातैर्वा गळितेन्दुसूर्यरुधिरैर्व्योमास्तबन्ध्वाह्वयान्।।८।।

वीर्यान्वितवक्रवीक्षिते क्षीणेन्दौ निधनस्थिते यमे।
गुह्योद्भवरोगपीडया मृत्युः स्यात् कृमिशस्त्रदाहजः।।९।।

अस्ते रवौ सरुधिरे निधनेऽर्कपुत्रे क्षीणे रसातलगते हिमगौ खगान्तः।
लग्नात्मजाष्टमतपस्विनभौममन्दचन्द्रैस्तु शैलशिखराशनिकुड्यपातैः ।।१०।।

द्वाविंशतिमस्तु कारणं द्रेक्काणो निधनस्य सूरिभिः।
तस्याधिपतिर्भपोऽपि वा निर्याणं स्वगुणैः प्रयच्छति।।११।।

होरानवांशकपयुक्तसमानभूमौ योगेक्षणादिभिरतः परिकल्प्यमेतत्।
मोहस्तु मृत्युसमयेऽनुदितांशतुल्यः स्वेशेक्षिते द्विगुणितस्त्रिगुणः शुभैश्च।।१२।।

दहनजलविमिश्रैर्भस्मसङ्क्लेदशोषैर्निधनभवनसंस्थैर्व्यालवर्गैर्विडन्तः।
इति शवपरिणामश्चिन्तनीयो यथोक्तं पृथुविरचितशास्त्राद् गत्यनूकादि चिन्त्यम्।।१३।।

गुरुरुडुपतिशुक्रौ सूर्यभौमौ यमज्ञौ विबुधपितृतिरश्चो नारकीयांश्च कुर्युः।
दिनकरशशिवीर्याधिष्ठितत्र्यंशनाथाः प्रवरसमनिकृष्टास्तुङ्गभागादनूके।।१४।।

गतिमपि रिपुरन्ध्रत्र्यंशपोऽस्तस्थितो वा गुरुरथ रिपुकेन्द्रच्छिद्रगः स्वोच्चसंस्थः
उदयति भवनेन्त्ये सौम्यभागे च मोक्षो यदि भवति बलेन प्रोज्झितास्तत्र शेषाः।।१५।।

## चतुर्विंशाध्यायः

### नष्टजातकप्रकरणम्

आधानजन्मापरिबोधकाले सम्पृच्छतो जन्म वदेद्विलग्नात्।
पूर्वापरार्धे भवनस्य विद्याद्भानावुदग्दक्षिणगे प्रसूतिम्।।१।।

लग्नत्रिकोणेषु गुरुस्त्रिभागैर्विकल्प्य वर्षाणि वयोऽनुमानात्।
ग्रीष्मोर्कलग्ने कथितास्तु शेषैरन्यायनर्तावृतुरर्कचारात्।।२।।

चन्द्रज्ञजीवाः परिकल्पनीयाः शुक्रारमन्दैरयने विलोमे।
द्रेक्काणभागे प्रथमे तु पूर्वो मासोऽनुपाताच्च तिथिर्विकल्प्यः।।३।।



अत्रापि होरापटवो द्विजेन्द्राः सूर्यांशतुल्यां तीथिमुद्दिशन्ति।
रात्रिद्युसंज्ञेषु विलोमजन्म भागैश्च वेलाः क्रमशो विकल्प्याः।।४।।

केचिच्छशाङ्काध्युषितान्नवांशाच्छुक्लान्तसंज्ञं कथयन्ति मासम्।
लग्नत्रिकोणोत्तमवीर्ययुक्तं भं प्रोच्यतेऽङ्गलभवादिभिर्वा।।५।।

यावद् गतश्शीतकरो विलग्नात् चन्द्राद्वदेत् तावति जन्मराशिम्।
मीनोदये मीनयुगं प्रदिष्टं भक्ष्याहृताकाररुतैश्च चिन्त्यम्।।६।।

होरानवांशप्रतिमं विलग्नं लग्नाद्रावियावति वा दृगाणे।
तस्माद्वदेत्तावति वा विलग्नं प्रष्टुः प्रसूताविति शास्त्रमाह।।७।।

जन्माऽदिशेल्लग्नगे वीर्यगे वा छायाङ्गुलघ्नेऽर्कशुद्धेऽवशिष्टम्।
आसीनसुप्तोत्थितोत्तिष्ठतां भं जायासुखाज्ञोदयगं प्रदिष्टम्।।८।।

गोसिंहौ जुतुमाष्टमौ क्रियतुले कन्यामृगौ च क्रमात्
संवर्ग्या दशकाष्टसप्तविषयैः शेषाः स्वसंख्या गुणाः।
जीवारास्फुजिदैन्दवाः प्रथमवच्छेषा ग्रहासौम्यव-
द्राशीनां नियतो विधिर्ग्रहयुतैः कार्या च तद्वर्गणा।।९।।

सप्ताहतं त्रिघनभाजितशेषमृक्षं दत्वाथवा नव विशोध्य नवाथवास्मात्।
एवं कळत्रसहजात्मजशत्रुभेभ्यः प्रष्टुर्वदेदुदयराशिवशेन तेषाम्।।१०।।

वर्षर्तुमासतिथयो द्युनिशे ह्युडूनि वेलोदयर्क्षनवभागविकल्पनाद्याः।
भूयो दशातिगुणितेस्वविकल्पभक्ते वर्षादयो नवकदानविशोधनाभ्याम्।।११।।

संस्कारनाममात्रा द्विगुणा छायाङ्गुलैः समायुक्ताः।
त्रिनवकभक्ताः शेषन्नक्षत्रं तद्धनिष्ठादिः।।१२।।

द्वित्रिचतुर्दशदशतिथिसप्तत्रिगुणा नवाष्ट चैन्द्र्याद्याः।
पञ्चदशघ्नास्तद्दिङ्मुखान्विता भं धनिष्ठादि।।१३।।

इति नष्टजातकमिदं बहुप्रकारं मया विनिर्दिष्टम्।
ग्राह्यमतः सच्छिष्यैः परीक्ष्य यत्नाद्यथा भवति।।१४।।

# पञ्चविंशाध्यायः

## द्रेक्काणस्वरूपप्रकरणम्

कट्यां सितवस्त्रवेष्टितः कृष्णः शक्त इवाभिरक्षितुम्।
रौद्रः परशुं समुद्यतं धत्ते रक्तविलोचनः पुमान्।।१।।

रक्ताम्बरा भूषणसक्तचित्ता कुम्भाकृतिर्वाजिमुखी तृषार्ता।
एकेन पादेन च मेषमध्ये द्रेक्काणरूपं यवनोपदिष्टम्।।२।।

क्रूरः कलाज्ञः कपिलः क्रियार्थी भग्नव्रतोऽभ्युद्यतदण्डहस्तः।
रक्तानि वस्त्राणि बिभर्ति चण्डो मेषे तृतीयः कथितस्त्रिभागः।।३।।

कुञ्चितलूनकचा घटदेहा दग्धपटा तृषिताशनचित्ता।
आभरणान्यभिवाञ्छति नारी रूपमिदं प्रथमं वृषभस्य।।४।।

क्षेत्रधान्यगृहधेनुकलाज्ञो लाङ्गले सशकटे कुशलश्च।
स्कन्धमुद्वहति गोपतितुल्यं क्षुत्परोऽजवदनो वृषमध्यः।।५।।

द्विपसमकायः पाण्डुरदंष्ट्रः शरभसमाङ्घ्रिः पिङ्गलमूर्तिः।
अविमृगलोमा व्याकुलचित्तो वृषभवनस्य प्रान्तगतोऽयम्।।६।।

सूच्याश्रयं समभिवाञ्छति कर्म नारी रूपान्विताभरणकार्यकृतादरा च।
हीनप्रजोच्छ्रितभुजर्तुमती त्रिभागमाद्यं तृतीयभवनस्य वदन्ति तज्ज्ञाः।।७।।



उद्यानसंस्थः कवची धनुष्माञ्छूरोऽस्त्रधारी गरुडाननश्च।
क्रीडात्मजालं करणार्थचिन्तां करोति मध्ये मिथुनस्य चायम्।।८।।

भूषितो वरुणवद्बहुरत्नो बद्धतूणकवचः सधनुष्कः।
नृत्तवादितकलासु च विद्वान् काव्यकृन्मिथुनराश्यवसाने।।९।।

पत्रमूलफलभृद् द्विपकायः कानने मलयगः शरभाङ्घ्रिः।
क्रोडतुल्यवदनो हयकण्ठः कर्कटे प्रथमरूपमुशन्ति।।१०।।

पद्मार्चिता मूर्धनि भोगियुक्ता स्त्री कर्कशारण्यगता विरौति।
शाखां पलाशस्य समाश्रिता च मध्ये स्थिता कर्कटकस्य राशेः।।११।।

भार्याभरणार्थमर्णवे नौस्थो गच्छति सर्पवेष्टितः।
हैमैश्चविभूषणैर्युतश्चिपिटास्योऽन्त्यगतश्च कर्कटे।। १२।।

शाल्मलेरुपरि गृध्रजम्बुकौ श्वा नरश्च मलिनाम्बरान्वितः।
रौति मातृपितृविप्रयोजितः सिंहरूपमिदमाद्यमुच्यते।।१३।।

हयाकृतिः पाण्डुरमाल्यशेखरो बिभर्ति कृष्णाजिनकम्बलं नरः।
दुरासदः सिंह इवात्तकार्मुको नताग्रनासो मृगनाथमध्यमः ।।१४।।

ऋक्षाननो वानरतुल्यचेष्टो बिभर्ति दण्डं फलमामिषं च।
कूर्ची मनुष्यः कुटिलैश्चकेशैर्मृगेश्वरस्यान्त्यगतस्त्रिभागः ।।१५।।

पुष्पप्रपूर्णेन घटेन कन्या मलप्रदिग्धाम्बरसंवृताङ्गी।
वस्त्रार्थसंयोगमभीप्समाना गुरोः कुलं वाञ्छति कन्यकाद्यः ।।१६।।

पुरुषः प्रगृहीतलेखनः श्यामो वस्त्रशिरा व्ययायकृद्।
विपुलं च बिभर्ति कार्मुकं रोमव्याप्ततनुश्च मध्यमः।।१७।।

गौरीसुधौतार्द्रदुकूलयुक्ता समुच्छ्रिता कुम्भकटच्छुहस्ता।
देवालयं स्त्री प्रयता प्रवृत्ता वदन्ति कन्यान्त्यगतस्त्रिभागः।।१८।।

वीथ्यन्तरापणगतः पुरुषस्तुलावानुन्मानमानकुशलः प्रतिमानहस्तः।
भाण्डं विचिन्तयति कस्य विपण्यमेतद्रूपं वदन्ति यवनाः प्रथमं तुलायाः।।१९।।

कलशं परिगृह्य विनिष्पतितुं समभीप्सति गृध्रमुखः पुरुषः।
क्षुधितस्तृषितश्च कळत्रसुतान् मनसैति तुलाधरमध्यगतः।।२०।।

विभीषयंस्तिष्ठति रत्नचित्रितो वने मृगान् काञ्चनतूणवर्मभृत्।
धनुर्धरः किन्नररूपभृन्नरस्तुलावसाने यवनैरुदाहृतः।।२१।।

वस्त्रैर्विहीनाभरणैश्च नारी महासमुद्रात् समुपैति कूलम्।
स्थानच्युता सर्पनिबद्धपादा मनोरमा वृश्चिकराशिपूर्वः।।२२।।

स्थानसुखान्यभिवाञ्छति नारी भर्तृकृते भुजगावृतदेहा।
कच्छपकुम्भसमानशरीरा वृश्चिकमध्यमरूपमुशन्ति।।२३।।

पृथुलचिपिटकूर्मतुल्यवक्त्रः श्वमृगसृगालवराहभीतिकारी।
अवति च मलयाकरप्रदेशं मृगपतिरन्त्यगतस्य वृश्चिकस्य।।२४।।

मनुष्यवक्त्रोऽश्वसमानकायो धनुर्विकृष्यायतमाश्रमस्थः।
क्रतूपयोज्यानि तपस्विनश्च रक्षत्यथाद्यो धनुषस्त्रिभागः।।२५।।

मनोरमा चम्पकहेमवर्णा भद्रासने तिष्ठति मध्यरूपा।
समुद्ररत्नानि विघट्टयन्ती मध्यस्त्रिभागो धनुषः प्रदिष्टः।।२६।।

कूर्ची नरो हाटकचम्पकाभो वरासने दण्डधरो निषण्णः।
कौशेयकान्युद्वहतेऽजिनं च तृतीयरूपं नवमस्य राशेः।।२७।।



रोमचितो मकरोपमदंष्ट्रः सूकरकायसमानशरीरः।
योक्त्रकजालकबन्धनधारी रौद्रमुखो मकरे प्रथमस्य।।२८।।

कलास्वभिज्ञाऽब्जदळायताक्षी श्यामा विचित्राणि च मार्गमाणा।
विभूषणालङ्कृतलोहकर्णा योषा प्रदिष्टा मकरस्य मध्ये।।२९।।

किन्नरोपमतनुः सकम्बळस्तूणचापकवचैः समन्वितः।
कुम्भमुद्वहति रत्नचित्रितं स्कन्धगं मकरराशिपश्चिमः।।३०।।

स्नेहमद्यजलभोजनाऽगमव्याकुलीकृतमनाः सकम्बळः।
कौशिकेयवसेनोऽजिनान्वितो गृध्रतुल्यवदनो घटादिगः।।३१।।

दग्धे शकटे सशाल्मले लोहान्याहरतेऽङ्गना वने।
मलिनेन पटेन संवृता भाण्डैर्मूर्ध्निगतैश्च मध्यमः।।३२।।

श्यामः सरोमश्रवणः किरीटी त्वक्पत्रनिर्यासफलैर्बिभर्ति।
भाण्डानि लोहव्यतिमिश्रितानि सञ्चारयत्यन्त्यगतो घटस्य।।३३।।

स्रुग्भाण्डमुक्तामणिशंखमिश्रव्याक्षिप्तहस्तः सविभूषणश्च।
भार्याविभूषार्थमपां निधानं नावा प्रवत्यादिगतो झषस्य।।३४।।

अत्युच्छ्रितध्वजपताकमुपैति पोतं कूलं प्रयाति जलधेः परिवारयुक्ता।
वर्णेन चम्पकमुषा प्रमदा त्रिभागो मीनस्य चैष कथितो मुनिभिर्द्वितीयः।।३५।।

श्वभ्रान्तिके सर्पनिवेष्टिताङ्गो वस्त्रैर्विहीनः पुरुषस्त्वटव्याम्।
चोरानलव्याकुलितान्तरात्मा विक्रोशतेऽन्तोपगतो झषस्य।।३६।।

आदित्यदासतनयस्तदवाप्तबोधः कापिष्ठलः सवितृलब्धवरप्रसादः।
आवन्तिको मुनिमतान्यवलोक्य सम्यक् होरां वराहमिहिरो रुचिरां चकार।।३७।।

राशिप्रभेदो ग्रहयोनिभेदो वियोनिजन्माऽथ निषेककालः।
जन्माऽथ सद्योमरणं तथायुर्दशाविपाकोऽष्टकवर्गसंज्ञः।।३८।।

कर्माजीवो राजयोगाः खयोगाश्चान्द्रा योगा द्विग्रहाद्याश्च योगाः।
प्रव्रज्याऽथो राशिशीलञ्च दृष्टिर्भावस्तस्मादाश्रयोऽथ प्रकीर्णः।।३९।।

नेष्टा योगा जातकं भामिनीनां निर्याणं स्यान्नष्टजन्मा दृगाणाः।
अध्यायानां विंशतिः पञ्चयुक्ताः होराशास्त्रे मत्कृते सम्यगुक्ताः।।४०।।

होराशास्त्रं समाप्तम्।

# अनुबन्धम्

## अकारादिश्लोकानुक्रमणिका

श्रीः

# श्रीसनातनभारतभारतीप्रकाशनम्

इदंप्रथमतया देवनागर्या लिप्या प्रकाशमवाप्ता

**दशाध्यायी** काचनापूर्वा व्याख्या

बृहज्जातकग्रन्थस्य।

ज्यौतिषाभिमानिभिर्महाजनैर्हृदा सदा धारणीया।

कर्णाटभाषया आङ्ग्लभाषया च अनूद्यमाना

शीघ्रमस्माभिः प्रकाशयिष्यत इति विज्ञाप्यते।

---

मूल्यम् : १५० रूप्यकाणि (15$)